।।श्रीकाशीविश्वनाथपुरीमहल्लाबूलानाराक्षधानेवासछापारवानामेरामकुमार मिश्रजीकेइहांयहपोथीमुहूर्त्तचिन्तामणिटीकासहितछपी॥ संवत् १९३० मि०१

॥श्रीगणेशाय नमः कैलासे पूर्णराकाहिमकररुचिरे बीक्ष्य बिंबं स्वकीयम् भूयो भूयोपि धावत्प्रतिभटकरटिस्पर्धया चंडमुण्डः माधाव त्वं त्वरं प्रि
प्रहरति भिरतो धूयते सोधरित्री त्वं वावा भिर्निरुद्धः कपटकरटिनः केलयो नः पुनंतु १ मुहूर्त्तचिंतामणिसंज्ञकस्य स्वयंकृतस्य ग्रमिताक्षरां ख्यम्
रामो विधत्ते विवृतिं प्रणम्य विष्णवर्करुद्रान् पितरौ गुरूंश्च २ प्रारिप्सितस्य ग्रंथस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकस्य
मत्स्यगणेशदेवताशीर्वादरूपं मंगलं सिद्धवज्ज्ञापनिबध्नाति गौरीश्रवइति द्विपस्य गजस्य आस्यं मुखं यस्येति द्विपास्यो गणेशो विघ्नं हरतु नाशयतु युष्मा
कमिति शेषः कीदृशो गणेशः गौरीश्रवः केतकपत्रभंगं हस्तेनाकृष्य मुखाग्रे ददत् गौरी पार्वती तस्याः श्रवणयोः स्थितं केतक्याः पुष्पं केतकं तस्य पत्रं पर्णं
तस्य भंगं खंडं हस्तेन शुंडादंडेनाकृष्य गृहीत्वा स्वमुखाग्रे स्वमुखे ओष्ठे ददाति स्थापयतीति ददत् अनेन गणेशस्य बाललीला सूचिता बालोपि मातृसमीप

श्रीगणेशाय नमः गौरीश्रवःकेतकपत्रभंगमाकृष्य हस्तेन ददन्मुखाग्रे विघ्नं मुहूर्त्ताकलितद्वितीयदंतप्ररोहो हरतु द्विपा
स्यः १ क्रियाकलापप्रतिपत्तिहेतुं संक्षिप्तसारार्थविलासगर्भम् अनन्तदैवज्ञसुतः स रामो मुहूर्त्तचिन्तामणिमातनोति २ ॥

वर्त्तिवस्तु किं चित्तं वस्तु बलात्कारेण गृहीत्वा मुखे निक्षिपतीति अतएव मुहूर्त्ताकलितद्वितीयदंतप्ररोहः मुहूर्त्तेन क्षणमात्रेण आकलितो निःसृतो द्वितीयदंतप्र
रोहो द्वितीयदंतोद्गमो येन सः अनेन केतकपत्रस्य मुखस्थापनसमये यावन्निगरणं न करोति तावद्गणेशोपि द्विदंत एवालौकिकैरित्यभूतोपमेयम् १ अथ ज्यो
तिषग्रन्थमारभमाणो विघ्नयन्प्रयोजनसंबन्धाधिकारिणः सूचयन् कर्त्तव्यउपजातिकया प्रतिजानीते क्रियाकलापेति अनंताख्यज्योतिर्वित् पुत्रः सः प्र
सिद्धः रामो मुहूर्त्तचिंतामणिं मुहूर्त्तानां दिनशुद्धिविशेषणालक्षणया तदुपलक्षितः कालो मुहूर्त्तशब्देनोच्यते तस्य चिंता शुद्ध्यशुद्धिस्तस्या मणिरिव मुहूर्त्तचिं
तामणिं ज्योतिषग्रन्थमातनोति निषेधतीनामाधारस्तथायमपि ग्रन्थो निखिलमुहूर्त्तानामाधार इत्यन्वर्थनामानं मुहूर्त्तचिन्तामणिं ज्योतिषग्रंथमातनोति
निषेधविद्यादिसंनिवेशविशेषेण निरूपयतीत्यर्थः ननु जीर्णग्रन्थैरेव मुहूर्त्तविचारे सिद्धे किमनेनेत्यत आह कीदृशं मुहूर्त्तचिंतामणिं क्रियाकलापप्रतिपत्ति

हेतुं क्रियाजातकर्मादिकास्तासां कलापः समूहः तस्य अमुकस्मिन्शुभदिने कार्यमेतदस्मिन्नशुभदिने कार्यमित्येवं रूपा तद्वत्त्वरं प्रतिपत्तिः ।
सम्यक् ज्ञानं तस्य हेतुं कारणं अयमर्थः अन्यग्रंथेषु तिथ्यादिप्रकरणेषु तिथ्यादिशुद्धिरुक्ता तत् ज्ञानं तत्तत्प्रकरणानां पुनः पुनरालोडनेन सिद्ध्येदिति गौ
रवं अत्रैकस्मिन्नेव पद्ये यो मुहूर्त्तो विचार्यते तस्य तत्रैव निर्वाह इति लाघवं नन्वन्येष्वपि ग्रन्थेषु एवंविधमुहूर्त्तनिरूपणात् व्यर्थोयं श्रम इत्यत आह पु
नः कीदृशं मुहूर्त्तचिंतामणिं संक्षिप्तसारार्थविलासगर्भं संक्षिप्तश्चासौ सारार्थविलासगर्भो विस्फुटार्थस्य विलासः प्रकाशः सगर्भे यस्यासौ अत्र शब्दलाघ
वे विस्फुटार्थस्य निरूपणाद्यथा गुरुमुखाद्विनेयार्थज्ञानं संघोमनसि जागर्त्ति तथा नान्यग्रंथेषु तत्र शब्दकाठिन्याद्गुरुमुखादपि झटित्यर्थज्ञानं न भवतीत्येतद
र्थमस्यारंभ इति ननु संबंधादिचतुष्टयकथनं विना कथं श्रोतृप्रवृत्तिः उक्तं च सिद्धिः श्रोतृप्रवृत्तीनां संबन्धकथनाद्यतः तस्मात्सर्वेषु शास्त्रेषु संबन्धः पूर्व
मुच्यते किमेवात्राभिधेयं स्यादिति एवं स्तु केनचित् यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यत इति उच्यते मुहूर्त्तचिंतामणिमित्यनेनैव पदेनैव सर्वं सूचितं
तथा च नारदः अस्य शास्त्रस्य संबन्धो वेदांगमिति धातृतः इति यद्वात्राभिधेयपदार्थानां मुहूर्त्तानां ग्रन्थस्य च प्रतिपाद्यप्रतिपादकभावः संबन्धः प्रयोजनं तु
शुभाशुभनिरूपणं विवाहादिकालनिर्णयश्च यदाह नारदः प्रयोजनं च जगतः शुभाशुभनिरूपणमिति कश्यपोपि ग्रहणग्रहसंक्रांतियज्ञाध्ययनकर्म
णां प्रयोजनं व्रतोद्वाहक्रियाणां कालनिर्णय इति तज्जिज्ञासुरधिकारी स च द्विज एव नान्यः उक्तं च नारदेन सिद्धांतसंहिताहोरारूपस्कन्धत्रयात्मकं वे
दस्य निर्मलं चक्षुः ज्योतिःशास्त्रमकल्मषं विनैतदखिलं श्रौतस्मार्त्तं कर्म न सिध्यति तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा अतएव द्विजैरेतदध्ये
तव्यं प्रयत्नतः अत्रैवकारस्य पाठक्रमेण योजने प्रयोजनं विनैव ज्योतिःशास्त्राध्ययनस्यावश्यकत्वं प्रतीयते द्विजैरेवेति व्याख्याने द्विजव्यतिरिक्तैः शूद्रै
र्नाध्येयमिति च प्रतीयते व्याख्यानद्वयमप्युक्तमेव ननु कथं श्रौतस्मार्त्तकर्मोपयोगि ज्योतिषमिति चेत् उच्यते अष्टवर्षं ब्राह्मणमुपनयीत वसंते
ब्राह्मणोग्नीनादधीत दर्शपूर्णमासाभ्यां यजेतेत्यादिश्रुतयः संति तत्र वर्षादिज्ञानं वसंतादृतुज्ञानं दर्शपूर्णमासयोर्ज्ञानं च ज्योतिषं विना सर्वथा न निर्वह
तीत्यवश्यमध्येतव्यं ज्योतिःशास्त्रं उक्तं च वेदांगज्योतिषे वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः तस्मादिदं कालविधानशास्त्रं यो ।

मु.टी.
प्र.च.
२

ज्योतिषं वेदसंवेदयज्ञान् यथा शिखा मयूराणां नागानां मणयो यथा तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितं तस्मात्कर्मोपयोगिकतयाऽ
वश्यमध्येतव्यं ज्योतिःशास्त्रम् तच्च सुपरीक्षितशिष्याय देयम् तदुक्तं श्रुतौ विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि असूयकायानृ
जवेऽहिताय न मा ब्रूया अवीर्यवती यथा स्याम् अन्यच्च नैतद्देयं दुर्विनीताय जातु ज्ञानं गुप्तं तद्धि सम्यक्फलाय अस्थाने हि स्थाप्यमानेव वाचां देवी
कोपान्निर्दहेत् चिराय विनयावनताय दीयमानेन प्रभवेत्कल्पितवृक्षसफलाय उपकृत्यानुचिन्तकानु शास्त्राण्युपकारस्य पदं हि साधुरेवेति शूद्रपाठेऽति
महान्दोषः गर्गः स्नेहाल्लोभाच्च मोहाच्च यो विप्रोऽज्ञानतोऽपि वा शूद्राणामुपदेशं तु दद्यात्स नरकं व्रजेदिति ज्योतिःशास्त्राध्ययने फलमाह माण्डव्यः
एवंविधस्य श्रुतिनेत्रशास्त्रस्वरूपभर्तुः खलु दर्शनेन वै निहत्य शेषं कलुषं जना नाकपृष्ठं धर्मसुखास्पदं स्यात् अत्र ज्ञानविशेषेण ज्योतिर्विदः पू
ज्यतारतम्यं [illegible] यापि दशादिनकृतपापं हन्ति सिद्धान्तवेत्ता त्रिदिनजनितदोषं तन्त्रविशिष्ट एव करणभगणवेत्ता हन्त्यहोरात्रदोषं जनयति
घनमहत् [illegible] नक्षत्रसूचीलक्षणं बृहत्संहितायाम् अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः
तिथ्यर्षां न जानाति ग्रहाणां नैव साधनम् परवाक्येन वर्तेत तेन नक्षत्रसूचकः नक्षत्रं सूचयतीति नक्षत्रसूची नक्षत्रसूचको दृष्टस्तु पवा
सं करोति यः स व्रजत्यन्धतामिस्रं सार्धमृक्षविडम्बिना नक्षत्रजीविनं पापं भिषजं शुल्कजीविनम् तादृक्पौराणिकादींश्च वाङ्मात्रेणापि ना
र्चयेत् ऋक्षविडम्बिना नक्षत्रसूचकेन सहान्धतामिस्रं नरकं व्रजन्ति अतश्च यथाशास्त्रमार्यक एव नक्षत्रसूचकः न तु संपूर्णशास्त्रप
रिज्ञाता दैवज्ञत्वं प्रपद्यत इत्युक्तत्वात् पूर्वकर्मार्जितसदसत्कर्मविपाको दैवं तज्जानातीति दैवज्ञः तस्य भावो दैवज्ञत्वं गुरुः दैवज्ञैः शास्त्रतत्त्व
ज्ञैर्बुद्धैर्ज्ञात्वा निवेश्यते यदि सन्मुहूर्तैः समन्वेष्यानान्येन नक्षत्रसूचकैरिति अत एव कश्यपो वेदपारगसाहित्येनैव नक्षत्रसूचकस्य श्राद्धभोजनमाह
अश्विविंश्च भ्रहतावव्यंगो न नक्षत्रसूचकः काणः कुण्ठश्च मन्दश्च श्वित्री मूर्खः कुष्ठवान् सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैरिति वसिष्ठः त्रि
स्कन्धपारगम एव पूज्यः श्राद्धे सदा भूसुरवृन्दमध्ये नक्षत्रसूची खलु पापरूपो हेयः सदा सर्वसुधर्मकृत्ये वराहोऽपि सांवत्सरिके देशे वक्तव्यभूति

राम:
२

मिच्छता वसुमुहूर्त्तो हि यत्रैषः पापं तत्र न विद्यते मुहूर्ततिथिनक्षत्रमृतवश्चायनानि च सर्वाण्येवाकुलानि स्युर्न स्यात्सांवत्सरो यदि अतो गणकां
नायत्तं सात्केयत्नमप्यधापि धर्मशास्त्रे तत्र सूचकाभिप्रायेण ज्ञेयं महाप्रयोजनं तु एतच्छास्त्रस्य सम्यक् ज्ञानाद्ब्रह्मसायुज्यमिति तथा च गर्गः ज्योति
श्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभम् ज्योतिर्ज्ञानं तु यो वेद स याति परमां गतिम् सूर्यसिद्धान्ते दिव्यं चक्षुर्ग्रहाणां तु दर्शितं ज्ञानमुत्तमम् विज्ञाया
र्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम् वराहः न सांवत्सरपाठी च नरके परिपच्यते ब्रह्मलोकप्रतिष्ठां च लभते दैवचिंतकः इति तस्माज्ज्योतिःशास्त्रमव
श्यमध्येतव्यमिति स्थितं तत्राप्यार्षवाक्यतापाठमात्रेणापि फलमस्ति स्मृत्यादिपठनवदिति अथ मुहूर्त्तप्रयोजनमाह सत्याचार्यः शुभक्षणक्रियारंभ
जनितापूर्वसंभवाः संपदः सर्वलोकानां ज्योतिस्तत्र प्रयोजनमिति तेन शुभमुहूर्तारब्धकार्यं सिध्येदशुभमुहूर्त्तारब्धं तु न सिध्येदिति तन्न युज्यते येन
कर्म प्राग्भुक्तं तस्य विपाकस्य सोऽस्ति वापि यः साक्षात्त्रिपतिज्ञः सोपि न शक्नोत्यन्यथा कर्तुमिति शौनकोक्तेः प्राचीनसदसत्कर्मरूपदैवस्यावश्यंभावि
त्वादिति चेन्न वृष्टिव्रीहिविवाहादिषु विहितकालस्य पुरुषप्रयत्नसाध्यत्वादुभययोगेनैव कार्यसिद्धिर्न केवलं दैवेनेति तदुक्तं केशवार्किणा फ
लेषा दैवात्कर्म न किं कृष्याद्युपायेषु परः प्रयत्नः श्रुतिः स्मृतिश्चापि नृणां निषेधविद्यात्मकेकर्मणि किं निषण्णेति यदि तु दैवमेव फलेत्तदा सर्वेजं
तेः कृष्याद्युपायेषु कथं प्रवर्त्तेतेति किंच श्रुतिस्मृत्यादयोपि निषेधविध्यात्मका निरर्थकाः स्युः नतु समारोहेन्न बाहुभ्यां नदीं तरेन्न सर्पमभ्याप
द्येतेत्यादीनामाश्वलायनादिवचनानां चिकित्साशास्त्रस्य च वैयर्थ्यप्रसङ्गः स्यादित्यर्थः याज्ञवल्क्योपि दैवपुरुषकारेपि कर्मसिद्धिर्व्यवस्थिता तत्र दै
वमभिव्यक्तं पौरुषं पौर्वदेहिकमिति कर्मसिद्धिः फलावाप्तिरिष्टानिष्टाचलक्षणा सा च केवलं दैवेन व्यवस्थिता अपि तु पुरुषकारेपि पुरुषकारः प्रयत्नः
पुरुषकाराभावे दैवमेव नास्तीत्याह तत्र दैवमिति पूर्वदेहार्जितं पौरुषमेव दैवमित्युच्यते तच्चास्य पुरुषप्रयत्नानंतरं महाफलोदयेन अभिव्यक्तं भवति ।
अत एव वसंतराजः पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते उद्यमेन समुपार्जितं तदा वांछितं फलति नैव केवलमिति दैवप्रयत्नयोरन्यतराभावे सि
द्धिर्न भवतीत्यत्र दृष्टान्तमाह या[illegible]ः यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् तद्वत्पुरुषकारेण विना दैवं न सिध्यति केशवार्कोपि प्राक्कर्मबीजं सलिल

नलो वा संस्कारवत्कर्म विधीयमानम् शोषाययोगाय च यस्य तस्मात्सदाचारवतां न हानिरिति यस्मात्कर्म जन्मान्तरोपार्जितं कर्म दैवसंस्त
स्य विधीयमानं अधुना क्रियमाणं कर्म शोषाय च भवति किंवट बीजं सलिलानलो वा संस्कारवत् यथा सद्बीजं शुभे सलिलादिसंस्कारैः संस्कृतं
सदुद्देति वर्धते च तद्वत्प्राक्कर्मापि ऐहिकेन सत्प्रयत्नेन वर्धते अन्यथा क्षीयत इत्यर्थः तस्माज्ज्योतिःशास्त्रविहितकाले विवाहादि कुर्वतां शान्तिचिकि
त्सादि सदाचारवतां पुरुषाणां सदा न हानिः स्यात् अन्यच्च दैवं हि पुरुषनिष्ठं तद्देशकालवशत एव विपच्यते दुष्टमपि दुष्टान्तरसाहित्येनैतत् दुष्टकारि
भवति यथा दुर्जनोऽरण्यान्वेषणेन अतएव वसन्तराजः सर्पवह्निविषकण्टकादिकं येन दैवशरणोऽपि मानवः दूरतस्य जयति पौरुषं तदा तेन न स्फुरति।
दैवताधिकं पौरुषेण ह्यस्मिन् गतिं प्राप्नुवन्ति पुरुषाः स्वमेधसः यान्ति दैवशरणालयं यथा पादपा ज्वलति दावपावके इति अतः शकुननिमित्तादि
भिः सूचितमशुभं [illegible] फलं शुभेन प्रयत्नेन वञ्च्यतएव तथा च वसन्तराजः तन्निरूप्य शकुनेन दुःखं दैवं वञ्चयन्ति नियतं समुद्यतं पौरुषेण पुरुषाः स्वमेधसः
संश्रयन्ति [illegible] हितमिति तद्दैवफलं दुःखं समुद्यतं शकुनेन निरूप्य ज्ञात्वा पुरुषाः पौरुषेण वञ्चयन्तीत्यर्थः यथा येन ग्रहेण यावती दशान्तर्दशा
वा स्यात्तस्याः फलपरिपाकः तावन्तं कालमभिव्याप्य भवेद्दैवमिति स्थिते दशाप्रवेशकालीनचन्द्राद्यवस्थाशुभाशुभफलनिरूपणं यथा तस्य दशाफलस्या
न्यथात्वमसत्त्वमाधिक्यं वा वारुन्धयति तद्दैवं तदपि बोद्धव्यम् नन्वनन्तोक्तसर्पविषयवधादिदृष्टान्तेन पौरुषमेव फलसाधनं कथं न स्यात् तथा
च बृहद्यात्रायां वराहः तथापरे तपस्येव दैवं धैर्याविलम्बिनः प्रत्यस्तः क्रियासिद्धौ केवलं जगुरुद्यमं उत्थानहीनो राजा हि बुद्धिमानपि सर्वदा प्र
धर्षणीयः शत्रूणां भुजंग इव निर्विषः विधानगणनाज्जडः पुरुषकारमुक्तादरो मनोरथपरिश्रमैर्न परितुष्यति श्रीमुखपराक्रमविनिश्चिते के सु
नयो हि यत्नः कृतं हरिर्मदस्रवासितं पिबति कुंजरास्तृक्मधु इत्यादि उच्यते समानभूमिषु समानसलिलादिषु यत्नेऽपि फलवैचित्र्यदर्शनात् का
रणान्तरं कल्प्यते तदेव दैवमिति अतउभयोर्योगे सत्येव फलसिद्धिरिति एतदपि तत्रैव कृषिवृष्टिसमायोगादृश्यते फलसिद्धयः अस्मिन्नर्थे शृणु।
श्लोकान्द्वैपायनमुखोद्गतान् कृषिः पौरुषं वृष्टिर्दैवः कर्षकः पौरुषेण कृषिं करोति नाम दैवं वृष्ट्या साधयति अथ कृषिं करोति चेत्तदा वृष्ट्या विना न किं

चिंत्फलमाप्नोति यदिपुनः कर्षकोबीजंवपति दैवंचवर्षति तदाफलमधिकमुत्पद्यते एवंदैवपुरुषकारयोः समयोरर्थफलसिद्धयोदृश्यते अत्रार्थेश्री
व्यासमुखोद्गताइमेश्लोकाः नविनामानुषंदैवाद्दैवंवामानुषाद्विना नैकोनिवर्त्तयत्यर्थमेकारणिरिवानलमिति केचिद्बुद्धिः कर्मानुसारिणीतिमन्यमानाः
प्रयत्नोपिदैवरूपइतिकृत्वादैवमेवफलसिद्धिःकारणमितिवदंतितत्र अनवस्थादोषप्रसंगात् तथाहि प्राक्कर्मार्जितपौरुषमेव किलदैवशब्देनो
च्यते अत्रत्यःप्रयत्नःप्राचीनपौरुषलक्षणेनदैवेनजन्यते तदपिततप्राचीनपौरुषजन्यमित्यनवस्था ऽतःप्रयत्नोपि दैवप्रेरितइत्यनुपपन्नम् ननु
बीजांकुरन्यायेनानवस्थादोषोनभविष्यतीतिचेत् ननुहिबीजांकुरन्यायेनदैवमेवमूलमितिनिश्चीयतेनापिप्रयत्नः अतःसत्युभययोगफलसिद्धिरितित
त्वं एवंचेत्तर्हिपूर्वोक्तानांशौनकादिवाक्यानां येनतुयत्प्राप्तव्यंतस्यविपाकेस्करेभासचिवोपियः सासात्रियतिजः सोपिनशक्तोऽन्यथाकर्त्तुमित्यादिका
नांकागतिः उच्यते दैवंतुदृढकर्मजन्यावश्यभावित्वाद्ग्रहशांत्यादिरूपेणपूर्वेणप्रयत्नादपितन्निवारयितुंनशक्यंदृढमूलत्वात् प्रबलवानाघातेपिदृढ
मूलपादपवत् अदृढंकर्मजंतुदैवंप्रयत्नेननिवर्त्यंप्रतिशिथिलमूलपादपवत् तथाचजातकेयेधर्मकर्मनिरतापिजितेंद्रियायेयेपथ्यभोजनजुषोद्विजदे
वभक्ताः लोकेनराःधृतियुकुलशीललीलान्तेषामिदंकथितमायुरुदारधीभिरिति प्रयत्नाभावेतुविपच्यते तथाचतत्रैव पापिष्ठायेदुराचारादेवब्राह्म
णनिंदकाः अपथ्यभोजनास्तेषामकालमरणंध्रुवमिति वैद्यकेपि पूर्वजन्मकृतंपापंव्याधिरूपेणबाधतेइतिसर्वव्याधीनांसाधारण्येनकर्मजत्वेपि
साध्यासाध्यत्वेनद्वैविध्यम् तत्रापिकृच्छ्रोपायःसुखोपायोद्विविधःसाध्यउच्यते असाध्योद्विविधोज्ञेयोसाध्योयश्चाप्रतिक्रियः साध्यायाप्यत्वमायां
तियाप्याश्चासाध्यतांतथा मतिप्राणानसाध्यास्तुनराणामक्रियायुतामित्यादिनाः चिकित्स्यव्याधेर्दृढमूलत्वमन्येषामदृढकर्ममूलत्वंनिश्चीयते अतोदै
वस्यदृढादृढंद्वैविध्यमस्ति अतःशौनकवाक्यानामयमर्थः येनत्विति येनपुरुषेणयत्प्राप्तव्यंअवश्यंभोक्तव्यंदृढकर्मोपार्जितमितियावत् तदन्यथाकर्त्तुंबृह
स्पतिरपिनशक्तः अर्थादन्यददृढकर्मोपार्जितमन्यथाकर्त्तुंशक्तइत्यर्थः अतोनिमित्तशकुनादिभिर्दुष्टफलेज्ञानेबोधायनादिविहितेनतच्छांतिदाना
दिरूपधर्मेणप्रयत्नेनतन्निवर्त्यतेशुभंवर्ध्यते अतएवतेनैवोक्तंतस्य परीक्षितंविलग्नंधर्मार्थसुखायदंपत्योः अपरीक्षितंविलग्नंनहिदेयंपंडितेनदैव

विदा अपशीवुनिधीमज्ज्योतिःशास्त्रमविज्ञायपयोदयदिति बृहस्पतिरपीदमुक्त्वाह स्वाभावादेवकालोयंशुभाशुभसमन्वितः अनादिनिध
नःसर्वेषांनिर्दोषोननिर्गुणः तस्मान्निर्दोषकालार्थंमुहूर्त्तमधिगच्छताम् कालःकर्मगुणैर्युक्तोबलवद्भिःशुभप्रदः दोषयुक्तोपिचाप्राणैर्व
हुभिर्व्यत्ययेद्वयोरिति अतःशुभमुहूर्त्तबलेनपूर्वाकर्मार्जितमशुभमपिदैवफलंनिवार्यतेइत्यवयम् २ अथतिथीशाननुक्रमाह तिथीशाइति
एतेतिथीशाः तिथीनांस्वामिनः वन्हिश्चकश्चकोब्रह्मा शेषंस्पष्टंप्रयोजनंतुतत्तद्देवताप्रजाप्रतिष्ठादि अथमुहूर्त्तविचारस्यप्रतिज्ञातत्वात्तत्कस्मादि
कथनंनोक्तंतत्तएवावधार्यं ३ अथतिथीनांसंज्ञासफलाह नंदेति प्रतिपदादिपंचतिथयः नंदाभद्राजयारिक्तापूर्णासंज्ञाः स्वस्वनामसदृशफलाः

तिथीशा वन्हिकौगौरीगणेशोहिर्गुहोरविः शिवोदुर्गांतकोविश्वेहरिःकामःशिवःशशी ३ नंदाचभद्राचजयाच
रिक्तापूर्णेतितिथ्योऽशुभमध्यशस्ताः सितेऽसितशस्तसमाधमाःस्युः सितज्ञभौमार्किगुरौचसिद्धाः ४ नंदाभ
द्रानंदिकाख्याजयाचरिक्ताभद्रापूर्णसंज्ञाधमार्कात् ॥

द्राःस्युः इति एवंप्रकारेणसर्वाः षष्ठ्यादयोज्ञेयाः ताःशुक्लपक्षेक्रमशःशुभ
मध्यमशुभफलदाःस्युः असितेकृष्णपक्षेशुभमध्यअधमाफलदाःस्युः ताएवनंदातिथयःशुक्रबुधमंगलशनिगुरुवारेषुसिद्धिकराःस्युः यथा।
नंदाशुक्रवारे एवंभद्राबुधवारेजयाभौमे रिक्ताशनौ पूर्णागुरौइति ४ अथसूर्यादिवारेषुयथासंख्यंनिषिद्धतिथिदग्धनक्षत्राणिचशालिन्याह
नंदेति अर्कादितिल्पपूर्वोपपंचमी अर्कमारभ्यनंदादिकातिथिरधमास्यात् यथासूर्यवारेनंदाधमाएवंसोमेभद्रा भौमेनंदाबुधेजयागुरौरिक्ताशु।
क्रेभद्रा शनौपूर्णेति इदमाधुनिकानाम् प्राच्यानांमृतवस्तुतस्तुतेशुभाः तथाचवसिष्ठः नंदाभौमा कर्वोर्भद्राशुक्रेदैत्यश्वजयाबुधे शुभयोगागुरौ
रिक्तापूर्णामंदेमृताऽह्वया गुरुरपि आदित्येभौमयोर्नंदाभद्राशुक्रशशांकयोः जयाशस्यगुरौरिक्तापूर्णार्कीश्चामृताशुभाइति नारदवाक्येशनौपूर्णे

त्यम्स्तुदेतिकस्यितपाठः वसिष्ठादिवचनाविसंवादात् वहुषुपुस्तकेषुशनौपूर्णाऽमृताशुभेतिपाठाच्च पूर्णसंज्ञाऽमृताकादितिपाठः साधुतथा रविवारादि षुयाम्यंभरणीतरादीनिनक्षत्राणियथाक्रमेणदग्धनक्षत्राणिस्युः यथारविवारेभरणीदग्धा सोमेचित्राभौमेउत्तराषाढा बुधेधनिष्ठा गुरावुत्तरफाल्गु नीशुक्रेज्येष्ठा शनौरेवतीनारदः आदित्यभौमयोर्नन्दाभद्राशुक्रशशांकयोः जयासौम्येगुरौरिक्ताशनौपूर्णामृताशुभाइति नारदः यमर्क्षमर्कवारेऽजो चित्राभौमेतिविश्वभम् बुधेश्रविष्ठार्यम्णर्क्षंगुरौज्येष्ठाभृगोर्दिनेरेवतीशनिवारेतुदग्धयोगाभवस्त्यमी एतान्येवनक्षत्राणि रव्यादीनांजन्मभानिस्युक्ता नितान्यपिनिषिद्धान्येवलल्लः याम्यंत्वाष्ट्रोत्तराषाढेधनिष्ठोत्तराफाल्गुनीज्येष्ठावरेवतीचैवजन्मर्क्षाभानुतःक्रमात् क्रमात्सप्तेंदुदशसूर्येनवाष्टौ

याम्यंत्वाष्ट्रंवैश्वदेवंधनिष्ठार्यम्णंज्येष्ठांत्यंरवेर्दग्धभंस्यात् ५ षष्ठ्यादितिथयोमंदाद्वि

लोमंप्रतिपद्बुधे सप्तम्यर्केऽधमाःषष्ठ्याद्याःमाश्चरदधावने ६ ६ ६ ॥

पौर्णमास्यमा १४।१०।१२।९।८।१५।३० सूर्यादिजन्मतिथयःसंत्याज्याःशुभकर्मणि जन्मर्क्षेजन्मतिथिषुशुभकर्मविवर्जयेत् बलाच्चेत्कुरुतेक मनतत्फलमवाप्नुयादिति ५ अथक्रकचादिनिंद्ययोगाननुष्टुभाह षष्ठ्यादीति क्रमेणषष्ठ्यादितिथयःमंदशनेश्चराद्विलोमविपरीतगणन याऽधमाःस्युः यथाशनौषष्ठी अधमाशुक्रेसप्तमी गुरावष्टमी बुधेनवमीभौमेदशमीसोमेएकादशीरवौद्वादशीएतेयोगाःक्रकचाख्याज्ञेयाः त थाप्रतिपत्बुधवासरेसप्तमीरविवारेसंवर्त्तयोगाअधमास्यात् अथषष्ठीआद्याप्रतिपत् अमाअमावास्यारदधावनेदंतानांकाष्ठादिभिर्मलनि एकरणेअधमाःनिषिद्धाःस्युःक्वचिन्नवमीरविवारयोरपिनिषेधः काशीखण्डेप्रतिपद्दशमीषष्ठीनवम्यांरविवासरेदंतानांकाष्ठसंयोगोदहेदासप्तमंकुलं

अथकृत्यविशेषेषुनिषिद्धतिथिरिंद्रवंशाछंदसाह षष्ठ्यष्टमीति षष्ठ्यष्टम्योःप्रसिद्धे भूतश्चतुर्दशी विधुक्षयोमावास्या एतासुतिथिषुनापुरुषः तैलंपलं मांसं क्षुरंक्षौरं रतंमैथुनं नोसेवेत् यथाषष्ठ्यांतैलम् अष्टम्यांमांसं चतुर्दश्यांक्षौरं अमावास्यायांमैथुनंनसेवेतेत्यर्थः विधुक्षयः सर्वोपलक्षकः। वसिष्ठः स्त्रीसेवनंपर्वसुपक्षमध्येपलंचषष्ठीषुचसर्वतैलम् नृणांविनाशायचतुर्दशीषुक्षुरक्रियास्यादसकृत्सदास्य नारदः व्यतीपातेचसंक्रांतावे। कादश्यांचपर्वसु अर्कभौमदिनेषष्ठ्यांनाभ्यंगनंचवैधृतावितिपर्वाणिवसिष्ठआह चतुर्दश्यष्टमीकृष्णाअमास्याचपूर्णिमा पुण्यानिपंचपर्वाणिसं क्रांतिर्दिनपस्यचेति अत्रतिथिस्तात्कालिकीग्राह्या उक्तंच स्नानेचाभ्यंजनेचैवदंतधावनमैथुने तिथिस्तात्कालिकीग्राह्यायातथामरणजन्मनोरिति अर्थविश्वेत्रयोदशी दशादशमी द्विकेद्वितीया एतासुतिथिषुअभ्यंजनंअभ्यंगमलपहात्वचनसेवत अयंनिषेधोब्राह्मणव्यतिरिक्तस्य तथा।

षष्ठ्यष्टमीभूतविधुक्षयेषुनोसेवेतनातिलपलक्षुरंरतं नाभ्यंजनंविश्वदशद्विकेतिथौधात्रीफलैःस्नानममाद्रिगोष्वस त् ७ सूर्येशपंचाग्निरसाष्टनंदावेदांगसप्ताश्विगजांकशैलाः॥

चभट्टभास्करोनिर्णयामृते त्रयोदश्यांद्वितीयायांसप्तम्यांचविशेष तः पादविदस्त्रियाः स्नानंनाचरेयुः कदाचनेति अथधात्रीफलैःसमलकैः स्नानममाद्रिगोषुअमावास्यासप्तमीनवमीषुअसत् निषिद्धमित्यर्थः अत्र वसिष्ठःदिमतेत्रयोदश्यादितिथिषुआमलिकस्नानस्यैवनिषिद्धोनाभ्यंगस्यवसिष्ठः कामदुर्गान्तकरविविष्टेद्वर्कदिनेषुच सकृदामलकेस्नानंसप्तसु कुलनाशनम् भट्टभास्करस्तुनवम्यादिष्वेवामलकस्नानंनिषेधति सप्तम्यांचदशनवमीषुदेहश्रीसंततीरामलकैर्नरस्य स्नानंनिहंत्यर्दिनेतुधत्तेतिले षुपुण्यकरंसदैवेति ७ अथसूर्यादिवारेषुदग्धादियोगचतुष्टयमिंद्रवज्रोपजातिकाभ्यामाह सूर्येति सूर्येशपंचाग्निरसाष्टनंदाः तिथयः सूर्या। दिवारेदग्धसंज्ञाभवंति यथा द्वादशीरविवारेदग्धासोमेएकादशी भौमेपंचमी बुधेतृतीया गुरौषष्ठी शुक्रेष्टमी शनौनवमी उक्तंचनारदेन एकादशीचेंदु

द्वादशी चार्कवासरे षष्ठी बृहस्पतिवासरे तृतीया बुधवासरे अष्टमी शुक्रवारे च नवमी शनिवासरे पंचमी भौमवारे च ८ दग्धयोगाः प्रकीर्तिताः अथ वि
षयोगाः वेदेति चतुर्थ्यादितिथयः अर्कादिवारेषु विषाख्या भवंति यथा रवौ चतुर्थी विषाख्या चंद्रे षष्ठी भौमे सप्तमी बुधे द्वितीया बुधे भद्राः कुजे सि
द्धियामस्तु सप्तमी द्वादशो श्विरितार्थः एवं नवमी शन्यादावपि गुरावष्टमी शुक्रे नवमी शनौ सप्तमी तथा च गुरुः षष्ठी शशांके नवमी च शुक्रे बुधे द्विती
यार्कयमे चतुर्थी जीवेष्टमी सौरिकुजे द्विसप्तमी योगा विषाख्या कुलनाशनास्युः अथ हुताशनाख्याः सूर्या इति द्वादश्यादितिथयः सूर्यादिवारेषु हु
ताशनाख्याः स्युः वसिष्ठः सप्तषष्ठ्यादितिथयः सोमवारादिभिर्युताः अग्निजिह्वाः सप्तयोगा मंगलेष्वतिगर्हिताः ८ अथ यमघंटाः मघा विशा
खादिनक्षत्राणि रविवारादिषु यमघंटसंज्ञानि स्युः यथा अर्कवारे मघा यमघंटा एवं सोमवारे विशाखा इत्यादि गर्गः मघा विशाखा आर्द्रा च मूल

सूर्यांगसप्तोरगगोदिगीशा दग्धा विषाख्याश्च हुताशनाश्च ८ सूर्यादिवारे तिथयो भवंति मघा विशाखा शिवमूलवन्हिः
ब्राह्म्यं करोर्कादियमघंटकाश्च शुभे विवर्ज्या गमने त्ववश्यं ९ भाद्रे चंद्रदृशौ नभस्यनलनेत्रे माधवे द्वादशी पौषे वेदशरा इषे
दश शिवा मार्गे द्विनागा मधौ॥ एवमृक्षं चक्र निकरोहिणीहस्तइत्युक्ते यमघंटाः क्रमाद्र्वेः एते दग्धादियोगाः शुभे विवाहादिकार्ये वर्ज्याः गमने तु पा
यामवश्यं वर्ज्याः एषामपवादो वसिष्ठेनोक्तः दिवा मृत्युप्रदाः पापदोषास्त्वतेन रात्रिषु शुभकार्येषु सूतौ च सर्वदा परिवर्जयेदिति आवश्यक कृत्यदीपिकायां
यमघंटे त्यजेदष्टौ मृत्यौ द्वादशनाडिकाः इति अन्येषां पापयोगानां मध्याह्नात्परतः शुभमिति ९ अथ चैत्रादिमासे शून्यतिथिः शार्दूलविक्रीडितेनाह भाद्रे भा
द्रे इति चकार इति च भाद्रपदादि श्लोकोक्त मासेषु चंद्रदृशौ प्रतिपद्द्वितीये इत्यादि क्रमोक्त तिथयः उभयपक्षगाः शुक्ल कृष्णपक्षगताः शून्यसंज्ञकाः बुधैः कीर्तिताः
कथिताः यथा भाद्रपदे प्रतिपद्द्वितीये उभयपक्षे शून्ये एवं नभसि श्रावणे उभयपक्षे तृतीया द्वितीये शून्ये इत्यादि अनुक्तमासानां ज्येष्ठाषाढतपस्यशुक्र तपसां कार्ति

कार्यपा[illegible] पौष्यफाल्गुनमाघानां कृष्णपक्षे क्रमेणशरांगाब्धयः शक्राः पंचएतास्तिथयः शून्या यथा कार्त्तिककृष्णेपंचमी शून्या एवमाषाढकृष्णेषष्ठी फाल्गुनकृष्णेचतुर्थी ज्येष्ठकृष्णेचतुर्दशी माघकृष्णेपंचमी अथैषामेवकार्त्तिकादिमासानांशुक्लपक्षे शक्राद्याग्निविश्वरसाः यथा कार्त्तिकशुक्लेचतुर्दशी शून्या आषाढशुक्लेसप्तमी फाल्गुनशुक्लेतृतीया ज्येष्ठशुक्लेत्रयोदशी माघशुक्लेषष्ठीचेति वसिष्ठः अष्टमीनवमीचैत्रेपक्षयोरुभयोरपि ज्येष्ठत्रयोदशीनिद्यासितकृष्णेचतुर्दशी आषाढेकृष्णपक्षस्यषष्ठी शुक्लेतुसप्तमी द्वितीयाचतृतीयाचश्रावणेसितकृष्णयोः प्रथमाचद्वितीयाचनभस्येमासिनिंदिते दशम्येकादशीनियामासीषेशुक्लकृष्णयोः ऊर्जेचतुर्दशीशुक्लकृष्णपक्षेतुपंचमीसप्तमीचाष्टसौम्येपक्षयोरपि पौषेपक्षद्वयेचैवचतुर्थीपंचमीतथा

गोष्ठौ चोभयपक्षगाश्च तिथयः शून्या बुधैः कीर्तिता ऊर्जाषाढतपस्यशुक्रतपसां कृष्णे शरांगाब्धयः ॥ १० ॥ शक्राः पंच सिते शक्राद्यग्निविश्वरसाः क्रमात् तथा निंद्यं शुभे सार्पं द्वादश्यां वैश्वमादिमे ॥ ११ ॥ अनुराधा द्वितीयायां पंचम्यां पित्र्यभं तथा त्र्युत्तराश्च तृतीयामेकादश्यां च रोहिणी ॥ १२ ॥ स्वाती चित्रे त्रयोदश्यां सप्तम्यां हस्तराक्षसे नवम्यां कृत्तिकाष्टम्यां पूभा षष्ठ्यां च रोहिणी ॥ १३ ॥

माघेचपंचमीषष्ठीशुक्लेकृष्णेयथाक्रमम् तृतीयाचचतुर्थीचफाल्गुनेसितकृष्णयोः तिथयोमासशून्याख्यावंशवित्तविनाशनाः आसुश्राद्धंप्रकुर्वीतनैवमंगलमाचरेदिति १० अथनक्षत्रसंबंधिदोषान्सार्धानुष्टुप्द्वयेनाह तथेति अनुराधेति स्वातीतिच शुभेकृत्येद्वादश्यांसार्पमाश्लेषानिंद्या आदिमेप्रतिपदिवैश्वमुत्तराषाढा राक्षसमूलं लक्ष्मः द्वितीययाचानुराधात्र्युत्तराचतृतीयया पंचम्यांचमघायुक्ताचित्रास्वात्योस्त्रयोदशी प्रतिपद्युत्तराषाढानवम्यांकृत्तिकायदि सप्तम्यांहस्तमूलेचषष्ठ्यांत्राह्म्यभंयदि पूर्वभाद्रपदाष्टम्यांएकादश्यांचरोहिणी द्वादश्यांत्रयदाश्लेषात्रयोदश्यांमघायदि इत्यादि एषुकार्ये एषुकार्यंकृतंचेत्स्यात्षण्मासान्मरणंध्रुवमिति ११ १२ १३ ॥ ॥ ॥ ॥

अथ चैत्रादिमासेषु शून्यनक्षत्राण्यनुष्टुप्द्वयेनाह कदास्त्रेति कदास्त्रमेसे हिण्यश्विन्यौ चैत्रे शून्येनक्षत्रे एषु शुभे कार्यं न कार्यम् यत्ते वित्तविनाशदाः धन-
नाशकरा इत्यर्थः एवं वैशाखे त्वाष्ट्रवायू चित्रास्वात्यौ शून्यभे पाशीकृष्णस्तद्धश ततारा अजयास्पूर्वाभाद्रपदा वसिष्ठः अश्विनीरोहिण्यौ चैत्रे शून्यभे ...र्त्ते
ते चित्रास्वाती च वैशाखे ज्येष्ठे विश्वेज्यतारके भगवान्नुवमाषाढे श्रावणे हरिविश्वभे नभस्ये वारुणान्त्यसमज्ञपार्श्वयुज्यपि कार्त्तिके पित्र्यास्ये सौम्ये चि-
त्रौ हस्ते वते पौषे हस्तकाद्राः स्युर्माघे मूलं च विष्णुभं तपस्ये शक्र भरणी शून्यभान्याहुरग्रजाः एषु यत्तु कृतं कर्म धनैस्सह विनश्यतीति १५ । १५ अथ चैत्रादिमा-
सेषु शून्यराशीननुष्टुभाह घट इति वसिष्ठः घटमत्स्यवृषा युग्ममेषकन्याः सवृश्चिकाः तुलाचापकुलीराख्या मृगसिंहाश्च राशयः चैत्रादौ मासशून्याख्याव

**कदास्त्रभे त्वाष्ट्रवायू विश्वेज्यौ भगवासवौ वैश्वश्रुती पाशिपौष्णौ अजपाद्नि पित्र्यभे १४ चित्राद्वीशौ धि वाश्व्यर्कौ श्रुतिमूलय-**
**मेंद्रभे चैत्रादिमासे शून्याख्यास्तारा वित्तविनाशदाः १५ घटो झषो गौ मिथुनं मेषकन्यालितौलिनः धनुः कर्को मृगः सिंहश्चै-**
**त्रादौ शून्यराशयः १६ पक्षादितस्त्वोजतिथौ घटैणौ पंचास्यनक्रौ मिथुनाङ्गने च चापेंदुभे कर्कहरी हयान्त्यौ गोंत्यौ च नष्टेतिथिस्य-**
**स्यल्लग्ने १७**

शवित्तविनाशना इति १६ अथ विषमतिथिषु दग्धलग्नानींद्रवज्रयाह पक्षादितइति शुक्लपक्षकृष्णपक्षादितः प्रतिपदमारभ्य-
तः ओजतिथौ विषमतिथौ प्रतिपत्तिथौ घटैणौ तुलामकरौ तृतीयायां मृगेन्द्रनक्रौ सिंहमकरौ पञ्चम्यां मिथुनकन्ये सप्तम्यां चापेन्दुभे धनुःकर्कौ ।
नवम्यां कर्कहरी कर्कसिंहौ एकादश्यां हयान्त्यौ धनुर्मीनौ त्रयोदश्यां गोन्त्यौ वृषमीनौ एते तिथिशून्यलग्ने तस्यां तस्यां तिथौ नष्टे वसिष्ठः मृगसिंहौ तृतीयायां
प्रथमायां तुलामृगौ पंचम्यां बुधराशी द्वौ सप्तम्यां चापचंद्रभे नवम्यां सिंहकीटाख्यावेकादश्यां गुरोर्गृहे वृषमीनौ त्रयोदश्यां दग्धसंज्ञास्तमी गृहाः दग्धसम-
निष्कर्मकृतं सर्वं प्रणश्यति १७ । १७ । ॐ । ॐ । ॐ । श्रीरामचंद्रार्पणमस्तु

अथैषां दुष्टयोगानां शुभकृत्यावश्यकत्वे सति परिहारमाह नारदः तिथ्यर्क्षवारेति द्वाभ्याम् पङ्ग्वन्धकाणलग्नानि विवाहप्रकरणे वक्ष्यन्ते जन्मनि हने केन्द्रे चैव त्रिकोणे वा शुभे त्युपचयेपि वा एकोपि बलवान्श्चापि शून्यतिथ्युडुनाशकः इति १८ । १९ अथ हस्तार्कादिसिद्धियोगानां तिथिविशेषेणानिष्टत्वमनुष्टुप्द्वयेनाह वर्जयेदिति बुधानुराधामिति च श्रीपतिः हस्तेरवौ शशिधरे च मृगोत्तमाङ्गं भौमेश्विनी बुधदिने च तथाऽनुराधा पुष्यो गुरौ भृगुसुतेपि च पौष्णधिष्ण्यं रोहिण्यथार्कतनये ऽमृतसिद्धियोगाः एते पंचम्यादितिथिषु चेद्भवंति तत्र श्चावर्ज्याः यथा पञ्चम्यां हस्तार्के वर्ज्यः एवमग्रेपि षष्ठ्यादौ अन्यैरुक्तं

तिथ्यर्क्षवारमासस्थशून्याश्च शून्यलग्नानि यान्यपि मध्यदेशे विवर्ज्यानि न दूष्याणीतरेषु तु १८ पङ्ग्वन्धकाणलग्नानि मासशून्याश्च राशयः गौडमालवयोस्त्याज्या अन्यदेशे न गर्हिताः १९ वर्जयेत्सर्वकार्येषु हस्तार्कं पञ्चमीतिथौ भौमाश्विनीं च सप्तम्यां षष्ठ्यां चैन्द्रेन्दवं तथा २० बुधानुराधमष्टम्यां दशम्यां भृगुरेवतीं नवम्यां गुरुपुष्यं चैकादश्यां शनिरोहिणीं २१ गृहप्रवेशे यात्रायां विवाहे च यथाक्रमम् भौमेश्विनीं शनौ ब्राह्मं गुरौ पुष्यं विवर्जयेत् २२ आनंदनामा कालदण्डश्च धूम्रो धाता सौम्यो ध्वांक्षकेतू क्रमेण श्रीवत्साख्यो वज्रकं मुद्गरश्च छत्रं मित्रं मानसं पद्मलुंबौ २३ । २३ । २३ । रामः

ये अर्के हस्तः पंचमी च सोमे षष्ठी च चंद्रभम् अश्विनी सप्तमी भौमे बुधे मैत्रं तथाष्टमी गुरौ पुष्यं च नवमी दशमी रेवती भृगौ एकादशी शनौ ब्राह्म्यं वर्जयेत्सर्वदा बुधैरिति २० । २१ अन्यदप्याह गृहप्रवेश इति ननु भौमाश्विन्यादीनां गृहप्रवेशादौ स्वत एव वारनक्षत्रदोषादप्राप्तेः किमर्थमिदं वचनं उच्यते यदि विष्टिर्व्यतीपातो दिनं वाप्यशुभं भवेत् हन्यते ऽमृतयोगेन भास्करेण तमो यथेति वचनात् कार्यमात्रप्राशस्त्यप्राप्ते आवश्यकत्वे प्रवेशादिसंभावनास्यात्तदर्थमिदमुक्तं नयुक्तमेव २२ अथानंदादियोगान् शालिन्युपजातिकाभ्यामाह आनन्द इति उत्पात इति च २३ ॥ २३ । ॥ [illegible]

२४ अथैषांगणनोपायमनुष्टुभाह दस्त्रादिति अत्रनक्षत्राणांसाभिजितांगणनाकार्या यतोऽष्टाविंशतिर्योगाः यथाऽर्कोदिने आद्यदिननक्षत्रंअश्विन्याःतदा
श्विनीतःसाभिजिद्गणनयात्रयोविंशतिसंख्यमस्ति तथासत्यानंदादियोगेषुत्रयोविंशतिसंख्योगदयोगोजातः एवमिन्दुवारेमृगशीर्षागणनया आनंदस्त्रोदयाः २५
अथैतेषुकियतांदुष्टयोगानामवश्यकर्त्तव्येपरिहारशालिन्याह ध्वांक्षइति ध्वांक्षमुज्जमुद्गरयोगेषु आद्यादिपुनाड्यः पंचघटिकावर्ज्याः पद्मलुम्बयोर्वेदाश्चतस्रः ए
वमेवदंश्वाःसप्त धूम्रेभूरेकैव काणघटिद्वयम् मुसलेद्वेघटिके राक्षसमृत्यूत्पातकालाः सर्वेषष्टिघटिकात्मकावर्ज्याः कालःकालदंडः अत्रानुक्तेपिवरयोगघटि
त्रयवर्ज्यउक्तंचज्योतिःसागरे ध्वांक्षेद्वायुधमुद्गरेषुघटिकास्त्रोज्यास्तुपंचादितः पद्मलुंबकयोश्चतस्रउदिनाधूम्रेसदैकापुनः द्वेकाणेमुसलाह्वयेपिचगदेऽस-

उत्पातमृत्यूकिलकाणसिद्धीशुभोमृतारव्योमुसलंगदाश्च मातंगरक्षश्चरसुस्थिराख्यःप्रवर्धमानाश्चकलदाःस्वनाम्ना २४ दा
स्त्रादर्केमृगादिंदौसार्पाद्भौमेकराद्बुधे मैत्राद्गुरौभृगौवैश्वाद्गण्यामंदेचवारुणात् २५ ध्वांक्षेवज्रेमुद्गरेचेषुनाड्योवर्ज्यावेदाःपद्म
लुंबेगदेऽश्वाः धूम्रेकाणेमौसलेभूर्द्वयंद्वौरक्षोमृत्यूत्पातकालाश्चसर्वे २६ सूर्यभाद्वेदगोतर्कदिग्विश्वनखसंमिते चंद्रर्क्षेरवि
योगाःस्युर्दोषसंघविनाशकाः २७ सूर्यर्कमूलोत्तरपुष्यदास्त्रंचंद्रेश्रुतिब्राह्मशशीज्यमैत्रम्॥ ७ ॥

त्रैवतिस्त्रश्चरेमृत्यूत्पातकरक्षसांदिनगतास्ताःकालदण्डेतथा २६ अथदोषापवादभूतान्रवियोगाननुष्टुभाह सूर्यभादिति सूर्योयत्रतन्नक्षत्रमारभ्यचंद्रर्क्षेदि
ननक्षत्रेचतुर्नवषट्दशत्रयोदशविंशतिसंख्याकेसतिरवियोगाःस्युः तेचदोषसमूहानांनाशकराःउक्तंच सूर्याच्चतुर्थेदशमेचषष्ठेविश्वर्क्षके विंशति
मेनखर्क्षे भवंतिषड्भानुसहस्रयोगाःकुयोगविध्वंसकराःप्रदिष्टाः २७ अथसूर्यादिवारेषुनक्षत्रविशेषैःसिद्धियोगानिंद्रवज्रोपजातिकाभ्यामाह
सूर्येरतिजीवदतिचरविवारेहस्तमूलत्र्युत्तरापुष्याश्विनीनक्षत्राणिपूर्वैराचार्यैःसर्वार्थसिद्ध्यैकथितानि॥ ७ ॥

एवं चंद्रे श्रवणादीनि एते सिद्धियोगाः स्वार्दर्के मृगादिं दशविस्यादि प्रकारेण आनंदादिसमीचीनसद्योगसंबंधिनस्तंत्रेरूपनिबद्धाः भीमपराक्रमेणकुयो
गा अप्युक्ताः ज्येष्ठावन्हिमसा विशाखवसवो मैत्रयं यमाख्यं रवौ सोमेमेशैव विशाखपुष्यपवनाश्चित्रात्वषाढाद्वयम् भौमे विश्वजलेशमित्रवसवः प्रोष्ठभ
द्रसार्पौ शिवः शूलीरेवतिपूर्वयोनिभरणीवस्वश्विमूलाबुधेजीवेमूलमघार्द्रयाम्यवरुणा पूषाशशीरोहिणीशुक्रे स्वातिभुजंगदैवतमघापुष्योत्तरारोहिणी।
सौरावर्यममूलहस्तवरुणाषाढाद्वयंरेवती चित्राविष्णुमघाश्वसूर्क्षसमयेत्याज्या अयोगाबुधैरिति २८। २९. अथावश्यकवर्ज्यत्वेनज्झटित्युपस्थित्यर्थं
उत्पातमृत्युकाणसिद्धियोगानूशालिन्याह द्वीशादिति विशाखादिचतुर्नक्षत्रैरुत्पातमृत्युकाणाश्चसिद्धियोगाः रविवारेस्युः यथारवौविशाखाउत्पातः अनु

भौमेश्वहिर्बुध्न्यकृशानुसार्पंज्ञेब्राह्ममैत्रार्ककृशानुचांद्रं २८ जीवेर्यमैत्राश्वअदितीज्यधिष्ण्यं शुक्रेर्यमैत्राश्व्यदितिश्रवोभं
शनौश्रुतिब्राह्म्यसमीरभानि सर्वार्थसिद्ध्यैकथितानिपूर्वैः २९ द्वीशात्तोयाद्वासवात्पौष्णभाच्च ब्राह्मात्पुष्पादर्यमर्क्षाच्चतुर्भैः स्या
दुत्पातोमृत्युकाणोथसिद्धिर्वारेर्काद्येतत्फलंनामतुल्यम् ३० कुयोगास्तिथिवारोत्थास्तिथिभोत्थाभवारजाः हूणवंगखशेष्वेववर्ज्या
स्त्रितयजास्तथा ३१॥ ((राधामृत्युः ज्येष्ठाकाणः मूलसिद्धिरिति एवंसोमवारादौपूर्वाषाढादितोज्ञेयं तत्फलंनामसदृशं उत्पातमृत्युकाणनि
षिद्धाः सिद्धिःशुभइत्यर्थः नारदः विशाखादिचतुर्वर्गमर्कवारादिषुक्रमात् उत्पातमृत्युकाणाख्यायोगाश्चामृतसंयुताइति ३०. अथदेशविशेषेणकुयोग
नामपरिहारमनुष्टुभाह कुयोगाइति तिथिवारोत्थाः कुयोगाः क्रकचादयः तिथिभोत्थाः अनुराधाद्वितीयायामित्यादयः भवारजाः यमघंटाकेतुविश्वस्व
मित्यादयः तथात्रितयजाः तिथिवारनक्षत्रजाः वर्जयेत्सर्वकार्येषुहस्तार्कपंचमीतिथावित्येवमादयस्तेसर्वेहूणवंगखशदेशेष्वेववर्ज्याः अन्यदेशे
निषिद्धाइत्यर्थः नारदः तिथिवारोद्भवानिष्टायोगावारर्क्षसंभवाः हूणवंगखशेष्वेवान्यदेशेष्वेतेशुभप्रदाइति ३१। ३१। ॥

अथसमस्तशुभकृत्येवर्ज्यानुशार्दूलविक्रीडितेनाह सर्वस्मिन्निति सर्वस्मिन्शुभेकार्येएतानिवैनिश्चयेनत्यजपरिहरेत्यर्थः विधुनापापेनवापापैःश्री
णेन्दुर्कमहीसुतार्कतनयैर्वासुजोयुक्तौतनुलवौलग्नलग्ननवांशौत्याज्यौ पूर्णेक्षीणेपिवाचंद्रोलग्नेसर्वत्रगर्हितइतिकश्यपोक्तेः पापंदृलग्नं ग्रहशगतौ
वर्ज्यौशुभेसरेतिच निशान्होरर्धेरात्र्यर्धेदिनार्धेचघटीत्र्यंशंविंशतिपलानिदशपूर्वंदशपश्चाच्चपरिहर उक्तंचमूर्त्तःकालोनिवसतिमहानिशपूर्वंचदिनदले
यस्मादिश पूर्वेदशपरतस्तस्माद्धूज्यानिचपलानि कुनवांशंपापग्रहनवांशकंपरिहर अथग्रहणतःपूर्वदिनानांपरिहारः उत्पातग्रहतःउत्पातादिव्यभौमांतरिक्षास्ते
यस्मिन्दिनेभवंतितताःस्त्र्यहाःविसप्तदिनानिवर्ज्यानि ग्रहाग्रहणंतस्मादपिसप्तदिनानिवर्ज्यानि उक्तंच चंद्रसूर्योपरागेषुत्र्यहपूर्वशुभंत्यजेत सप्ताहमशुभंपं
श्चात्सप्तग्रहणस्तकंपिहियेत्सातातश्चार्धंशिद्विकास्तनुदर्शने सप्तरात्रंनकुर्वन्तियात्रोद्वाहादिमङ्गलमिति अंगिराअपि सर्वग्राहेतुसप्ताहमर्धग्रासेदिन

सर्वस्मिन्विधुपापयुक्तनुलवौवर्ज्यैनिशान्होर्घटीत्र्यंशंवैकुनवांशकंग्रहणतःपूर्वन्दिनानांत्रयम् ॥ ॐ ॥श्रीराम ॥

त्र्यंत्रिद्व्येकांगुलतोग्रासेदिनमेकंविवर्जयेत वसिष्ठः सर्वग्रासेदिनान्यष्टौसर्वकार्येविवर्जयेत षट्दिनानित्रिभागोनेअर्धग्रासेचतुर्दिनम् चतुर्थांशेत्रि
रात्रंस्याद्ग्रहणेचंद्रसूर्ययोः अत्रकार्यस्यावश्यकत्वेपरिहारोज्योतिर्निबंधेपंचदिनानिवसिष्ठत्रिदिनंगर्गश्चैकंकौशिकस्त्वेकं यवनाचार्यसंमतंपंचमुहूर्त्तंशि
ष्टाशयस्मिराहुरिति अयंचनिषेधोनित्यनैमित्तिकादिकृत्यादिरिक्तविषयःगुरुः नित्येनैमित्तिकेकाम्येजपहोमक्रियासुच उपाकर्मणिचोत्सर्गेग्रहवेधोनवि
द्यतइति शुभदोत्पत्तिश्चदुष्टदिनमिति शुभदोत्पातावराहसंहितायाम् चंडाशनिमहीकंपसंध्यानिर्घातनिस्वनाः परिवेषरजोधूमरक्तार्कास्तमनोदयाः द्रुमेभ्योन्न
रसस्नेहमधुपुष्पफलोद्गमाः गोपक्षिमदवृद्धिश्चशुभायमधुमाधवेइत्यादयऋतुपरत्वेनोक्ताः स्तेयद्दिनेभवंतितद्दिनमेवत्यज अथग्रहभिन्नेभंग्रहेभौमादिभि
र्भिन्नेभेदितंतथायोद्धग्रहयोर्युद्धंयस्मिन्दिनेनसत्रेयुद्धंजात तथाउत्पातेभंयस्मिन्नक्षत्रेदिव्यांतरिक्षभौमास्त्रिविधोत्पाताःसंभूताः स्तानिग्रहभिन्नयोद्धउत्पा
तनक्षत्राणिषण्मासंत्यज ॥ ॐ ॥ तनक्षत्राणिषण्मासंत्यज॥ ॐ ॥ ॐ ॥ ॐ ॥ श्रीमहालक्ष्म्यैनमः

भेदस्त्वाशरवेदयोर्यत्रवास्यादितिविवाहवृंदावने नारदः ग्रहणोत्पातभेत्याज्यंमंगलेषुऋतुत्रयमिति ननुनक्षत्रसंधौजायमानेग्रहणंकिंनस्यंदूषयेदित्य
त्राह शार्ङ्गधरः यस्मिन्विधुंराहुरितंवधिष्ण्येयुण्हातितत्याज्यमृतुत्रयंस्यात् पाणिग्रहेपुंमरणंविधत्तेद्वयोर्मयोश्चेद्वयमेववर्जयात् अन्यच्चपक्षांतरेणग्रहणाद्वयं
स्यापरान्तदानग्रहणोपगंभ पक्षाद्विकद्भवतिद्वितीयपाणिग्रहेशुध्यतिभोगेषट्कातइति ३२ अथग्रहणनक्षत्रेग्रासभेदेननिंद्यान्मासदिवसांश्चेन्दुवज्रया
ह नेष्टमिति ग्रहर्क्षग्रहणनक्षत्रक्रमात्संपूर्णार्धचतुर्थांशः ग्रासेसतिषट्त्र्येकमासान्नेष्टम् गुरुः सर्वग्रासेषुषण्मासान्त्रीन्मासांस्तुदलेग्रहे आपादग्रहणेधिष्ण्ये
मासमेकंविवर्जयेत् अथक्रमात्ग्रस्तेऽस्तगेग्रहणार्धग्रासेउभयोः प्राक्पश्चाच्चत्रित्रिघस्रानेष्टाः तथाअर्धखंडेग्रस्तास्तग्रस्तोदययोरभावेपिअर्धग्रासेउभयो
प्राक्पश्चाच्चत्रित्रिघस्रानेष्टाः गुरुः ग्रस्तास्तेत्रिदिनंपूर्वंपश्चाद्ग्रस्तोदयेतथा खंडग्रासेत्रित्रिदिनंनिःशेषेसप्तसप्तचेति कश्यपः ग्रस्तोदयोपरोदोषोग्रस्तास्तेर्वाक्

उत्पातग्रहतोऽग्रहांश्चशुभदोत्पातैश्चदुष्टंजनंषण्मासंग्रह भिन्नभंत्यजशुभेयोद्वतुयोत्पातभं ३२ नेष्टंग्रहर्क्षंसकलार्द्धपादग्रासे
क्रमात्तर्कगुणेन्दुमासान् पूर्वंपरस्तादुभयोस्त्रिघस्राग्रस्तेस्तगेवाप्युदितेर्धखंडे ३३ जन्मर्क्षमासंतिथयोव्यतिपातभद्रावैधृत्य
मापितृदिनानितिथिक्षयवृद्धी॥ (शाशौनपाः धुनिश्चर्धेत्नभयंततखंडीखंडव्यवस्थयेतिरिति ३३ अथसामान्यतोवश्यवर्ज्यानिपंचांगदूषणाविनिवसंत

तिलकातुष्टुभ्यामाह जन्मर्क्षेति परिघार्धेतिच जन्मनक्षत्रंजन्ममासजन्मतिथयः शुभकर्मसुवर्ज्याः अयंनिषेधआद्यगर्भस्यैव नारदः नजन्ममासेजन्मर्क्षे
नजन्मदिवसेपिवा आद्यगर्भसुतस्याथद्रुहितुर्वाकरग्रहइति जन्ममासः सविज्ञेयोवर्जितः सर्वकर्मसुवस्तुतस्तुयत्रशुक्लादिचांद्रमासेचैत्रादौजन्माभूत्सं
चांद्रमासोजन्ममासस्त्याज्यः इंद्राग्नीयत्रहूयेतेमासादिः सप्रकीर्तिता अग्नीषोमौस्मृतौमध्येसमासोपितृसोमकाविति हारीतोक्तमासलक्षणात् व्यतीपातादयश्च
वर्ज्याः पितृदिनमातापित्रोर्मरणदिनंतिथिक्षयवृद्धीतिथिक्षयस्तिथिवृद्धिश्चतल्लक्षणमाह वसिष्ठः स्पृक्तिस्त्रस्तिथयोवारएकस्मिन्नवमातिथिः तिथिर्वारत्रयेचे
कात्रिद्युस्पृक्द्विपिनेदितोन्यूनमासः॥ रामः॥

3753

अधिमासश्चवर्ज्यः संक्रमद्वयासहितः क्षयमासः अधिकमासोऽसंक्रान्तः कुलिकार्धप्रहरौ वक्ष्यमाणौ पातोमहापातः विष्कुंभयोगवज्रयोगयोराद्यघटिकात्रयमेववर्ज्यं एवंप्रकारेणकेचिद्व्यतीपातयोगेन घटिकावर्ज्यादित्युक्तम् यथा विष्कुंभायघटीत्रयं चनवकंव्याघातवज्रयोर्द्वेइति वृत्तशतेतथा व्याघातेवज्रके कादृति गणेशज्योतिर्विदुक्तिरपिनिरस्ता विष्कुंभवेत्रयोस्तिस्रः षट्चगंडातिगंडयोः व्याघातेनवशूलेतुपंचनाड्याविगर्हिताइतिकश्यपोक्तेः परिघस्यार्धवर्ज्यम् शूल्यात्याः पंचगंडातिगंडयोराद्याः षट्षट्घटिकाः व्याघातेचादिमानवघटिकाःवर्ज्याः ३४ ॥ ३५ अथपक्षरंध्रतिथीरावश्यकत्वेतन्निषवर्ज्यघटीश्चानुष्टुभाह वेदेति चतुर्थीषष्ठीअष्टमीनवमीद्वादशीचतुर्दशीएताः पक्षरंध्रतिथयोज्ञेयाः आसुशुभकृत्यस्यावश्यकत्वेसतिआदिमाः क्रमात् वस्वंकमन्वंतत्त्वाशाशरानाडीस्त्य

न्यूनाधिमासकुलिकप्रहरार्धपातविष्कुंभवज्रघटिकात्रयमेववर्ज्यम् ३४ परिघार्धपंचमशूलेषट्चगंडाति गंडयोः व्याघातनवनाड्यश्चवर्ज्याः सर्वेषुकर्मसु ३५ वेदांगास्त्नवार्केन्द्रपक्षरंध्रतिथौत्यजेत् वस्वंकमनु तत्त्वाशाशरानाडीःपराःक्रमात् ३६ कुलिकःकालवेलाचयमघंटश्चकंटकः ॥

ज्जेत् यथाचतुर्थ्याःआदिमाअष्टघटिकाः षष्ठ्यां नवअष्टम्यांचतुर्दशनवम्यांपंचविंशतिः द्वादश्यांदशचतुर्दश्यांपंचघटिकास्त्याज्या इत्यर्थः पराउर्वरिताःशुभाज्ञेयाः वसिष्ठः चतुर्दशीचतुर्थीच अष्टमीनवमीतथा। षष्ठीचद्वादशीचैवपक्षछिद्राह्वयाइमाः क्रमादेतासुतिथिषुवर्जनीयाश्चनाडिकाः भूताष्टमनुतत्त्वांकदशशेषास्तुशोभनाः देषनाडीषुयत्कर्मकृतंसर्वंविन श्यतीतिआदि कश्यपेनसर्वसाधारण्येनदशैववर्जिताः ३६ अथकुलिकाकालवेलायमघंटककंटकदोषाननुष्टुभाह कुलिकइतिवर्त्तमानवारान्मंदेशानैश्चरेण मितेसतियोंकोभवतितस्मिन्द्विगुणेयोंकस्तत्संख्याक्षणामुहूर्त्तः कुलिकोभवति एवंबुधेजीवेभौमेवर्त्तमानवाराद्गणितेयोंकोभवतिससहितः क्रमात् कालवेला यमघंटकंटकसंज्ञाउष्टमुहूर्ताःस्युः यथारविजः।शनिःसप्तसंख्याकः तस्मिन्॥ ॥ ॥ ॥ श्रीरामः॥

द्विगुणेचतुर्दश जाताः तेनरवौचतुर्दशोमुहूर्त्तः कुलिकः एवंबुधःसंख्याचत्वारः तत्द्विगुणेऽष्टमोमुहूर्त्तः कालवेला जीवेपंचद्विघ्नेदशमोयमघंटः भौमेत्रि तीयद्विघ्नेषष्ठोमुहूर्त्तः कंटकसंज्ञः इत्यर्थः एवंसोमवारादावपि अथशुभकृत्यावश्यकत्वेसतिदेशभेदेनकुलिकादिदोषपरिहारमाह गर्गः विंध्यस्योत्तरकूलेतु यावद्यातुहिमाचलं यमकंटकदोषोस्तिनान्यदेशेषुविद्यते मत्स्यागंमाधाध्रेषुयमघंटस्तुदोषकृत् काश्मीरेकुलिकंदुष्टमर्धयामस्तुसर्वतइति केचिन्मतेकाल वेलारविते: शराश्विनतर्कानलागाबुधयो ५। २। ६। ३।.७। ४ गजेन्दू ८। १ दिनेनिशायामृतुवेदनेत्रनगेषुरामा ६। ४। २। ७। ५। ३। विधुदंतिनौ १। ८ चगजेंदू इत्यर्धप्रहरद्वयंशनौ यात्रायामरणकालेवैधव्यंपाणिपीडने व्रतेब्रह्मवधः प्रोक्तः शुभकर्मततस्त्यजेत् गौडाः सूर्येवेदशरौ ४।

वाराद्विभेक्रमान्मन्देबुधेजीवेकुजेक्षणः ३७ सूर्येषट्स्वरनागदिङ्मनुमिताश्चन्द्रेब्धिषट्कुंज
रांकार्काविश्वपुरंदराक्षितिसुतेद्व्यब्ध्यग्नितर्कादिशः सौम्येद्व्यब्धिगजांकदिङ्मनुमिताजीवेद्विष
ट्भास्कराः शक्राख्यास्तिथयःकलाश्वभृगुजेवेदेषुतर्काग्रहाः ३८ दिग्भास्करामनुमिताश्वशनौश
शिद्वीनागदिशोभवद्विवाकरसंमिताश्च दुष्टक्षणःकुलिककंटककालवेलास्युश्चार्धयामयमघंट

५। चंद्रेहयपक्षौ ७। २ कुजेस्त्रिभूः २। १ ज्ञेबाणाग्नि ५। ३ गुरोर्दंतिहयौ ८। ७ शुक्रेत्रिवेदकौ ३। ४ मन्देतर्कगजौ ६। ८ ज्ञेयोयामार्धवद्बुधैः सदेति। ३७ अथसूर्यादिवारेषुशिष्याणांसद्यएवदोषज्ञानार्थंदुर्मुहूर्तान्दिनामकान् मुहूर्त्तान्शार्दूलविक्रीडितवसंततिलकाभ्यामाह सूर्यइति दिग्भास्करा इतिच र विवारेषष्ठसप्ताष्टमदशमचतुर्दशमुहूर्त्तानिद्याः एवंसर्वत्र अयमर्थोमूलेन्यासतःस्पष्टएव एषुमुहूर्त्तेषुकश्चिद्दुर्मुहूर्त्ताः कश्चित्कुलिकः कंटकः कालवेलाख्यः अर्धयामाख्यः यमघंटाख्यः स्यात् तत्प्रमाणकलांशः दिनमानस्यषोडशांशः ३०। ३१ ॥ [illegible] ॥ [illegible] ॥ समः ॥

अथ विवाहादिशुभकृत्ये होलिकाष्टकनिषेधं देशपरत्वेनाह विपाशेति विपाशा इरावती शतद्रुः एताः पश्चिमदेशप्रसिद्धाः नद्यस्तासां तीरे उभयतटे त्रिदेशे
त्रिपुष्करदेशे च होलिकाफाल्गुनशुक्लपौर्णिमा ततः प्राग्दिनाष्टकं विवाहादिशुभकृत्ये नेष्टं निषिद्धं अर्थादन्यदेशे न निषिद्धम् ४ अथ मृत्युयोगादिदुष्ट
योगपरिहारमनुष्टुभाह मृत्युक्रकचेति मृत्युयोगा दास्रार्क इत्यादिना आनन्दादिषूक्ताः क्रकचाः षष्ठ्यादितिथयो मन्दादिदिनेषु मिलिता उक्ताः दग्धादियोगाः
सूर्येशपंचाग्नीत्यादिनोक्ताः चंद्रे शस्ते क्षुगोचरेण समीचीने सति एतान् योगान् शुभान् शुभफलदान् जगुः ऊचुः राजमार्तण्डः क्रकचा मृत्युयोगा
स्थिरादिनं दग्धतथैव च चंद्रे शुभस्थे पातित्र सा वज्रहवा रच अथ केचिदाचार्याः यामोत्तरं प्रहरोत्तरं मृत्युक्रकचदग्धादीन् शुभान् जगुः स एवाह उत्पाते
यमघंटे च काणे च क्रकचे तथा तिथेर्मध्ये च काले च प्रहराभ्यामतः परतः शुभमिति अथान्ये आचार्याः मृत्युक्रकचदग्धादीन् यात्रायामेव निंदितान् जगुः

विपाशैरावतीतीरे शतद्र्वाश्च त्रिपुष्करे विवाहादिशुभे नेष्टं होलिकाप्राग्दिनाष्टकम् ४० मृत्युक्रकचदग्धादीन् निंद्यांस्तेषु
शुभान् जगुः केचिद्यामोत्तरं चान्ये यात्रायामेव निंदितान् ४१ अयोगे सुयोगोपि चेत्स्यात्तदानीमयोगं निहत्यैष सिद्धिं तनोति

विवाहादौ तु न दोषः लल्लः वारर्क्षतिथियोगेषु यात्रामेव विवर्जयेत् विवाहादीनि कुर्वीत गर्गादीनामिदं वचः निंद्येष्विति शेषः अन्यच्च अयोगेषु
च सर्वेषु वर्जयेद्घटिकाद्वयं उत्पातमृत्युकाणानां पंच षट् सप्त नाडिकाः ४१ पुनरप्यपवादं भुजंगप्रयातेनाह अयोगे इति अयोगे क्रकचादौ सति
चेत्सुयोगः सिद्धियोगोपि स्यात् तदा एषः सिद्धियोगः अयोगफलं निहत्य सिद्धिं तनोति निष्पादयति मार्तंडः अयोगः सिद्धियोगश्च द्वावेतौ भवतो यदि अ
योगो हन्यते तत्र सिद्धियोगः प्रवर्तते परे आचार्याः लग्नशुद्ध्या कुयोगादिनाशमाहुः यदाहुः स एव यत्र लग्नं विना किंचित् क्रियते शुभसंज्ञकम् तत्र तेषामयो
गानां प्रभवाज्जायते फलम् अथावश्यककृत्ये कालान्तराभावे परिहारमाह विष्टि पूर्वमिति ॐ ॥ २ ॥ राम ॥ १ ॥

विष्टिर्भद्रा सा पूर्वार्धस्य विष्ट्यादिकं मध्याह्नानन्तरं शस्तमाहुः उक्तंच विष्टिरंगारकश्चैव व्यतीपातः सवैधृतिः प्रत्यरं जन्मनक्षत्रं मध्याह्नात्परतः शुभमिति ४२ अथ भद्रां शालिन्याह शुक्ले इति शुक्ले शुक्लपक्षे ऽष्टम्यां पौर्णिमायां च पूर्वार्द्धे भद्रा स्यात् एकादश्यां चतुर्थ्यां च उत्तरार्द्धे भद्रा कृष्णपक्षे तृतीयां दशम्यां च अत्यार्द्धे उत्तरार्द्धे सप्तम्यां शंभुतिथौ चतुर्दश्यां च पूर्वार्द्धे पूर्वभागे भद्रा स्यात् भद्रास्वरूपं रत्नमालायां उद्वृद्धोद्धटतरेत्यादि ४३ अथ चतुर्थ्यादितिथिषु भद्राया मुखपुच्छविभागं शार्दूलविक्रीडितेनाह पंचद्व्यद्रीति चतुर्थ्यादितिथीनां पंचादिप्रहरेषु आदिघट्यः शराः पंचसंख्या विष्टेर्भद्राया आस्यं मुखं यथा चतुर्थ्याः पंचमप्रहरे आदिभूताः पंचघट्यो भद्रामुखं एवमष्टम्यां द्वितीयप्रहरे एकादश्यां सप्तमप्रहरे पूर्णिमायां चतुर्थप्रहरे तृतीयायामष्टमे

परे लग्नशुध्या कुयोगादिनाशं दिनार्द्धोत्तरं विष्टिपूर्वं च शस्तं ४२ शुक्ले पूर्वार्धेऽष्टमीपंचदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्द्धे कृष्णेंऽत्यार्द्धे स्यात्तृतीयादशम्योः पूर्वभागे सप्तमीशंभुतिथ्योः ४३ पंचद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा विष्टेरास्यमसद्गजेन्दुरसरामाद्र्यश्विबाणाब्धिषु ॥

११सप्तम्यां तृतीये दशम्यां षष्ठे चतुर्दश्यां प्रथम प्रहरे भद्रामुखं स्यात् तदसत् अशुभमित्यर्थः ॥ अथ पुनश्चतुर्थ्यादितिथीनां क्रमेण गजेंदुत्यादिप्रहरेषु अंत्यभवं घटीत्रयं पुच्छसंज्ञं तच्छुभं करं यथा चतुर्थ्या अष्टमप्रहरस्यांत्यघटीत्रयं भद्रा पुच्छम् एवमष्टम्यादिषु प्रथमादिप्रहरस्यान्त्यघटीत्रयं पुच्छं ज्ञेयं तत्र भद्राकर्माणि वसिष्ठः वधबन्धविषाग्न्यस्त्रच्छेदनोच्चाटनादिना दिये त तुरगमहिषोष्ट्रादिकर्म विष्ट्यां तु सिद्ध्यति अंगविभागः कश्यपसंहितायां मुखे पंच गले त्वेका वक्षस्येकादश स्मृताः नाभिश्चतस्रः पुच्छे तु नाडिकाः कार्यहानिर्मुखे मृत्युर्गले वक्षसि निस्वता कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवो जयः अथ विष्टिपरिहारमाह तथेति तिथ्यपरार्द्धजातिथ्युत्तरार्द्धभूता विष्टिर्वासरे यदि स्यात्तदा शुभकरी ॥ छ ॥ छ ॥ रामः ॥ श्रीकृष्णाय ॥

तथा तेनैव प्रकारेण तिथिः पूर्वार्द्धे त्याज्या रात्रौ शुभकरी नापरं निषेधमाह पूर्वार्द्धे त्याज्यपरा निशि तदा विष्टिः शुभायेति कमलासनभाषितं ४४ अथ भद्रा
निवासं तत्फलं चानुष्टुभाह कुंभकर्केति अलेचंद्रे कुंभद्वये कुंभमीनस्थे कर्के सिंहराशिस्थिते मनुष्यलोके तिष्ठति अथ मेषात्रये मेषवृषमिथुनस्थिते अलिमेष
श्चिकस्थे चंद्रे च स्वर्गलोके भद्रा तिष्ठति कन्यातुलाधनुर्मकरराशिषु चंद्रे अधः पाताललोके भद्रा तिष्ठति तत्रैव मर्त्यस्वर्गपातालेषु फलं चोक्तं शुभाशुभमद्वार
रामीसपवाद द्वाराप्रयोजनमुक्तं भवति उक्तं च मेषाद्ये कोऽप्ये मिथुने घटे सिंह मीनककेषु चापमृगतौलिस्तास्तु चंद्रे स्वर्गमर्त्यनागनगरीक्रमशः प्रयाति
विष्टिः फलान्यपि ददाति हितत्र देशे उक्तं च भूपालवल्लभे कटकुंभद्वये भूस्याकौर्प्ये अत्रितये युगा कन्याचापद्वये चंद्रे भद्रा पातालवासिनीति ४५ अथ का

यामेषव्ययघटीत्रयं शुभकरं पुच्छं तथा वासरे विष्टिस्तिथ्यपरार्द्धजा शुभकरी रात्रौ च पूर्वार्द्धजा ४४ कुंभकर्कद्वये मर्त्ये स्वर्गेऽब्जे।
जात्रये लिगे स्त्रीधनुर्जूकनक्रे धो भद्रा तत्रैव तत्फलं ४५ वाप्यारामतडागकूपभवनारंभप्रतिष्ठिव्रतारंभोत्सर्गवधूप्रवेशान
महादानानि सोमाष्टके गोदानाग्रयणप्रपाप्रथमकोपाकर्मवेदव्रतं नीलोद्वाहमथातिपन्नशिशुसंस्कारात्सुरस्थापनं ४६

त्यक्तौ निषेध्यवस्तु निशार्दूलविक्रीडितेनाह वाप्यारामेति वापी दीर्घिका आराम उपवनं तडाग पुष्करिणी कूपः प्रसिद्धः एतेषामारंभप्रतिष्ठा आ
रंभो निर्माणम् प्रतिष्ठा उत्सर्गः तत्र गृहप्रतिष्ठा गृहप्रवेशो ज्ञेयः व्रतानामनन्तव्रतादीनां आरंभः ग्रहणं उत्सर्गं उत्थापनम् महादानानि तुलापुरुषा
दीनि सोमः सोमयागः अष्टका अष्टकाश्राद्धम् गोदानं केशान्तसंज्ञकं कर्म आग्रयणं नवान्नेष्टिः प्रपा जलशाला प्रथमकोपाकर्म प्रथमारभ्यमाणश्रा
वणीकर्म वेदव्रतं महानाम्न्यादित्रयम् महानाम्नीव्रतम् उपनिषद्व्रतम् वेदव्रतं च नीलोद्वाहः काम्यवृषोत्सर्गः अतिपन्नशिशुसंस्काराः अतिपन्नाः।
अतिक्रान्ताः जातकर्मादयः शिशूनां संस्काराः देवस्थापनम् ४६ ॥ ४६ ॥ ४६ ॥ श्रीरामचंद्राय

अथान्यानिशार्दूलविक्रीडितेनाह दीक्षामौंजीति दीक्षामंत्रग्रहणादिका मौंजिविवाहौ प्रसिद्धौ मुंडनंचौलं अपूर्वन्देवेक्षणंतीर्थेक्षणंच सन्यासः प्र
सिद्धः अग्निपरिग्रहोऽग्निहोत्रम् अपूर्वराजदर्शनंराजाभिषेकश्च गमंगमनम् अपूर्वमेव चातुर्मास्यंचातुर्मास्ययागः समावृत्तिर्मौञ्जीविसर्गः श्र
वणाकर्वेधः कर्णवेधः परीक्षातप्तमाषादिरूपादिव्यमितियावत् एतानिकर्माणिबुधोनकुर्यात् कराईज्यसितयोर्बृहस्पतिशुक्रयोर्वृद्धत्वे अस्तेचशिशु
त्वेबाल्येचतथान्यूनाधिमासे अधिमासेचनकुर्यात् अत्रमूलवचनानि शातातपः अस्तंगतेगुरौशुक्रेबालेवृद्धेमलिम्लुचे उद्यापनमुपारंभंव्रतानांनैव
कारयेत् ऋक्षोच्चयः वापीकूपतडागयागगमनंक्षौरंप्रतिष्ठाव्रतंविद्यामंदिरकर्णवेधनमहादानंवनंसेवनम् तीर्थस्नानविवाहदेवभवनंमंत्रादिदेवे
क्षणंदूरेणैवजिजीविषुः परिहरेदस्तंगतेभार्गवे उपनयनंगोदानंपाणिग्रहणंगृहप्रवेशगमनानि अस्तमितेषुनकुर्यात् कररगुरुभृगुपुत्रंचन्द्रेषु ।
अस्तमेयादिफलमाह बादरायणः गुरोरस्तेपतिंहन्याच्छुक्रास्तेचैवकन्यकाम् चंद्रेनष्टेउभौहन्यात् तस्मात्तान्विवर्जयेत् बालभावेविपंहन्यात् वृद्ध

दीक्षामौंजिविवाहमुण्डनमपूर्वंदेवतीर्थेक्षणंसन्यासाग्निपरिग्रहौनृपतिसंदर्शाभिषेकौगमम् ॥ ८ ॥

भावेनरस्तथा तस्माद्बाल्येचवार्द्धेचविवाहंनैवकारयेत् अथाधिमासेवर्ज्यानिमृत्युपरिशिष्टे सोमयागादिकर्माणिनित्यान्यपिमलिम्लुचे तथैवाग्रयणा
धानचातुर्मास्यादिकान्यपि महालयाष्टकाश्राद्धोपाकर्माद्यपिकर्मयत् स्पष्टमासविशेषाख्याविहितंवर्जयेन्मले गर्गबृहस्पती अग्न्याधानप्रतिष्ठांचयज्ञ
दानव्रतानिच वेदव्रतवृषोत्सर्गचूडाकरणमेखला मांगल्यमभिषेकंचमलमासेविवर्जयेत् मरीचिः गृहप्रवेशगोदानस्थानाश्रयमहोत्सवम् नकुर्यान्मल
मासेतुसंसर्पांहस्पतौतथा वसिष्ठः वापीकूपतडागादिप्रतिष्ठायज्ञकर्मच नकुर्यान्मलमासेतुसंसर्पांहस्पतौतथा यदाक्षयमासोभवतितदाक्षयमासस्यपूर्वोत्तराव
धिमासौभवतः तत्रपूर्वः संसर्पः द्वितीयोंहस्पतिः एतानिगुरुशुक्रयोरस्तादावपिवर्ज्यानीत्याह गार्ग्यः बालेवायदिवावृद्धेशुक्रेचास्तगतेगुरौ मलमासइवैतानिवर्जयेद्दे
वदर्शनम् अपूर्वदेवतादृष्टाशुचस्सुनरभार्गवे ॥ ९ ॥

मलमासेप्यनावृत्तीतीर्थयात्रांविवर्जयेत् अनावृत्ता अपूर्वतीर्थयात्रा अत्रनियमकाला निसीमंतनामकरणादीनिपूर्वोर्क्तास्तादिसत्वेपिस्वस्वे कालएवकार्याणि गुरुः मासप्रयुक्तकार्येषुमूढत्वंगुरुशुक्रयोः नदोषकृन्मलेमासेगुर्वादित्यादिकन्तथा अन्यत्रापि सीमंतजातकादीनिप्रा शनांतानियानिवै नदोषोमलमासस्यमौढ्यस्यगुरुशुक्रयोरितिवसिष्ठः अतीतकालान्यखिलानितानिकार्याणिसौम्यायनगे दिनेशे सितेगुरौवाप्य यदृश्यमानतदुक्तपंचांगदिनेप्यखंडे अतएवातिपन्नशिशुसंस्कारादइत्युक्तं ४७ अथसिंहमकरस्थगुर्वादिघतिदेशमाह अस्तेवर्ज्यमितिपद्यः स्तेगुर्वस्तेवर्ज्यंन्निषिद्धमुक्तंतत्सिंहस्थगुरोर्मकरस्थेचगुरौवर्ज्यन्निषिद्धं देवीपुराणेसिंहसंस्थेगुरौयत्ना त्सर्वारंभान्विवर्जयेत् पुत्रभ्रातृकलत्राणि हन्याच्छीघ्रंनसंशयः कारकोव्रजतेनाशंसंतानंम्रियतेचिरात् देवारामतडागानिप्रपोद्यानगृहाणिच विवाहयज्ञोपनयनचूडादिचनसिध्यति यथासिंह

चातुर्मास्यसमावृत्तीश्रवणयोर्वेधंपरीक्षांत्यजेद्दृद्धत्वास्तशिशुत्वईज्यसितयोर्न्यूनाधिमासेतथा ४७ अ
स्तेवर्ज्यंसिंहनक्रस्थजीवेवर्ज्यंकेचिद्वक्रगेचातिचारे ॥

स्थितोजीवस्तथैवमकरस्थितः अयमपिनिषेधोनियमकाला नांनसंग्रहाः वसिष्ठः नीचराशिगतोजीवःप्रशस्तःसर्वकर्मसु नीचेनीचांशकस्थाज्यायस्मादंशाधुनीचता विशेषमाण्डव्येनोक्तः देवीपुराणे मकर स्थायदाजीवोवर्जयेत्पंचमांशकं शेषेष्वपिचभागेषुविवाहःशोभनोमतः तोडरानंदः अतिचारेसप्तदिनेवक्रेद्वादशमेवच नीचस्थितेपिवागीशेमास मेकंविवर्जयेत् ज्योतिर्निबन्धे हरिनीचारिभागेपिव्रतोद्वाहादिमंगलम् ननिषिद्धंयदिस्वोच्चेस्वभेवासंस्थितोगुरुः मघास्थकायदागच्छेत्फाल्गुनीवबृह स्पतिःपुत्रिणीधनिनीकन्यासौभाग्यंसुखमश्नुतइति क्वचिदपूर्वतीर्थयात्रायांमौढ्यादिदोषोनास्ति गोदावर्यांगयायांचश्रीशैलेग्रहणद्वये क्षयाक्षयगुरू णांचमौढ्यदोषोनविद्यते वायुपुराणे त्रिस्थलीसेतौ गयायांसर्वकालेषुपिण्डंदद्याद्विधानतः॥ ॥ ॥ ॥

अधिमासेजन्मदिनेत्यस्तेचगुरुशुक्रयोः नत्यक्तव्यंमयाभ्याद्वंसिंहस्थेचबृहस्पतौ अधिमासेसिंहगुरावस्तेचगुरुशुक्रयोः तीर्थयात्रानकर्त्तव्यागयांमो दावरीविनेति अथगुर्वाद्यस्तेयद्वर्ज्यंतदुक्तंगेगुरौ अतिचारगेपिगुरौवर्ज्यं वात्स्यः यात्रोद्वाहप्रतिष्ठाव्रतगृहचूडाव्रतादिकंवर्जयेद्यत्नतश्चैवजीववक्रा तिचारगे अस्यापवादोराजमार्त्तण्डे वक्रातिचारगेजीवेवर्जयेत्तदनन्तरम् व्रताद्युद्वाहादिचूडाख्यमष्टाविंशतिवासरान् दीपिकायाम् त्रिकोणजाया धनलाभराशौवक्रातिचारेणगुरुःप्रयातः यदातदाप्राहशुभंविलग्नंविवाहपाणिग्रहणंवसिष्ठः अथकेचिद्गुरुसहिते आदित्येएकराशिगतौगुरु सूर्यावितियावत् गुर्वादित्येपिसर्वशुभकर्मवर्ज्यम् शौनकः एकराशिगतौसूर्येजीवौस्यातांयदापुनः व्रतबन्धविवाहादिशुभंकर्माखिलंत्यजे त् अथकेचिद्विश्वघस्रेपिपक्षे यस्मिन्पक्षेतिथिद्वयनाशः सत्रयोदशदिनः पक्षःसोतिनिंद्यः उक्तंच पक्षस्यमध्येद्वितिथीपतेतांतदाभवेद्रौरव॥

गुर्वादित्येविश्वघस्रेपिपक्षेप्रोचुस्तद्वद्दंतरत्नादिभूषाम् ॥ ५८ ॥ रामः॥

कालयोगः पक्षेविनष्टेसकलंविनष्टंमित्याहुराचार्यवराःसमस्ताः तथा त्रयोदशदिनेपक्षेतदासंहरतेजगत् अपिवर्षसहस्रेणकालयोगःप्रकीर्त्तित इति तस्मिन्पक्षेशुभकर्मवर्ज्यमित्याहुः चण्डेश्वरः त्रयोदशदिनेपक्षेविवाहादिनकारयेत् गर्गादिमुनयःप्राहुःकृतेमृत्युस्तदाभवेत् उपनयनंपरिणा यनंवेश्मारंभादिपुण्यकर्माणि यात्राद्विक्षयपक्षेकुर्यान्नजिजीविषुःपुरुषाः अथतद्वत्तेनप्रकारेणदंतरत्नादिभूषां दंताहस्तिदंतास्तत्संबंधिनीभूषां रत्नसंबंधिभूषांच आदिशब्दात्सुवर्णमणिसंबंधिनीचभूषांवर्ज्यांप्रोचुः पूर्वस्मिन्निषेधकालेइत्यर्थः राजमार्त्तण्डः यात्रांचूडांविवाहंश्रुतिविचरविधिंशं खसद्मप्रवेशप्रासादोद्यानहर्म्यंसुरनरभवनारंभविद्याविधाने मौंजीबंधप्रतिष्ठामणिकनकरदाधारणंकुर्वतेये मृत्युःसिंहस्थितेज्येगुरुदिनकरयोरेकरा शिस्थयोश्चेति सिंहस्थगुरोरुपलक्षणत्वात् गुर्वस्तादावपिप्रथमकर्त्तव्यस्सुवर्णादिधारणनिषेधइत्यर्थः । ५८ । ५८ । ५८ । ५८ ।

अथ सिंहस्थगुरोः प्रकारत्रयेण परिहारमुपेंद्रवज्रमाह सिंहेगुराविति अत्र प्रथमम् अंशभेदेन परिहारः सिंहस्थे गुरौ सत्यपि सिंहांशे सत्यंश त्रयोदशां
शे १३।२० भ्योनंतरं सत्यंशमंशत्रयं ३।२० एवं भोनवांशः सिंहांशस्तत्र गुरौ सति विवाहो नेष्टः सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः सर्वदेशेषु
यत्नाज्ज्योद्वहतो निधनप्रदः इति राजमार्तण्डोक्तेः अतोन्यांशेषु विवाहादौ शुभं भवतीत्यर्थः सिंहेपि भगदैवत्ये गुरौ पुत्रवती भवेत् अंशतस्तु
भगांशस्तु धनधान्यसमृद्धिदेत्यादि इतिवचनोक्तेः अथ देशभेदेन द्वितीयपरिहार उच्यते अथ गोदोत्तरतः गोदावरीनद्यास्तस्य उत्तरतीरमारभ्य भा
गीरथीयाम्यतटं दक्षिणकूलमर्यादीकृत्य गोदावरीगंगांतरालवर्ती यो देशः तत्र सिंहस्थगुरुर्वर्ज्यः नान्यदेशेष्वलं गोदावर्युत्तरतीरे यावद्भागीर
थीतटं याम्यं तत्र विवाहो नेष्टः सिंहस्थे देवपतिः पूज्य अर्थाद्गोदावरीदक्षिणतटे भागीरथ्युत्तरदेशे च सिंहस्थगुरुदोषो नास्ति वसिष्ठः भागीरथ्युत्त

सिंहे गुरौ सिंहलवे विवाहो नेष्टोथ गोदोत्तरतश्च यावत् भागीरथीयाम्यतटं च दोषो नान्यत्र देशे तपनेपि मेषे ४९ मघादिपंच
पादेषु गुरुः सर्वत्र निंदितः गंगागोदांतरं हित्वा शेषांघ्रिषु न दोषकृत् ५० मेषेर्के सद्व्रतोद्वाहे गंगागोदान्तरेपि च सर्वः सिंहगु
रुर्वर्ज्यः कलिंगे गौडगुर्जरे ५१ रेवापूर्वे गंडकीपश्चिमे च शोणस्योदग्दक्षिणे नीच इज्यः॥ छ ॥ ६ ॥ . रामः।

रेकूले गोतमाद्दक्षिणे तथा विवाहो व्रतबन्धो वा सिंहस्थेज्यो न दुष्यतीति अत्र विवाहव्रतबन्धावेव निषिद्धौ आम्नामन्यानि शुभकर्माणि
निषिद्धान्येव अपवादस्यसंकोचाश्रयत्वादुपलक्षणायोगात् अथ तृतीयः परिहारः तपने सूर्ये मेषराशौ विद्यमाने सति वा सिंहस्थगुरोर्दोषो
नास्ति ज्योतिर्निबन्धे मंगलानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा भानौ मेषगते सम्यगित्याहुः शौनकादय इति ४९ सिंहराशिगतगुरुनि
षेधवाक्यानां प्रतिप्रसववाक्यानां च निर्गलितार्थमनुष्टुब्द्वयेनाह मघादिपंचपादेष्वित्यादि ५० मेषेर्क इत्यादि च ५१ अथ मकरस्थगु
रोः प्रकारद्वयेन परिहारमाशालिन्याह रेवापूर्वे इति रेवायाः नर्मदायाः पूर्वदेशे गण्डकीनद्याः पश्चिमे विभागे शोणनदस्य उत्तरदक्षिणभागे

र्नाचईज्यः मकरस्थगुरुर्नवर्ज्यः ललः नर्मदापूर्वभागेतुशोणस्योत्तरदक्षिणे गंडक्याः पश्चिमेभागेमकरस्थोनदोषभाक् अन्यदेशेषुनिषिद्धस्तत्रनिषि
द्धदेशानाह अयमिति अयंमकरस्थगुरुः कोंकणदेशेगौडदेसिंधुदेशे चशुभकृत्येषुवर्ज्योनिषिद्धः उक्तंच मागधेगौडदेशेचसिंधुदेशेचकोंकणे व्रतंचू
डाविवाहंचवर्जयेन्मकरेगुरौ एभ्योन्यदेशेषुमंगलमर्थान्मध्यमं ५२ अथलुप्तसंवत्सरदोषंसापवादंवंशस्थविरणाह गोजांत्येतिगौर्वृषः अजोमेषः अंत्योमी
नः कुंभः प्रसिद्धः एभ्यइतरभेअन्यराशौ मिथुनादौअतिचारगोगुरुः महातिचारेणसमागतः सन्पश्चात्कियद्भिर्दिनैः वक्रितः यदापूर्वराशिंनोएतिभुक्त
राशिं नोएतिनागच्छतितदाविलुप्ताब्दः लुप्तसंवत्सरउच्यते सलुप्तसंवत्सरः शुभकृत्येअतिनिंदितः निषिद्धः उक्तंच अतिचारगतोजीवस्तंराशिंनेतिः
चेत्पुनः लुप्तः संवत्सरोज्ञेयोगर्हितः सर्वकर्मसु यदातु गोजांत्यकुंभेषुपूर्वराशेः सकाशान्महातिचारेणयातिपूर्वराशिंचनैतितदानलुप्तसंवत्सरदोषः गुरुः

वर्ज्योनायंकोंकणेमागधेचगौडेसिंधौवर्जनीयः शुभेषु ५२ गोजांत्यकुंभेतरभेतिचारगेनोपूर्वराशिंगुरुरेतिवक्रितः तर्ह्यविलु
प्ताब्दइहातिनिंदितः शुभेषुरेवासरनिम्नगान्तरे ५३ पादोनरेखापरपूर्वयोजनैः पलैर्युतोनाऽस्तिथयोदिनार्धतः ॥ ६ ॥ २

मेषेवृषेमृगेकुंभेयद्यतीचारणेगुरुः नतत्रकाललोपःस्यादित्याह भगवान्यमः इत्यमासभोगानंतरंअतीचारेपिलुप्ताब्ददोषोनास्ति च्यवनः मासान्दशैकादश
वाप्रयुज्यराशेर्यदाराशिमुपैतिजीवः भुक्तोनपूर्वंचपुनस्तथापिनलुप्तसंवत्सरमाहुरार्याः पूर्वराशिभेदेनपरिहारमुक्त्वेदानींदेशभेदेनपरिहारमाह सलुप्तसंवत्सरो
रेवानर्मदासरनिम्नगाभागीरथीतयोर्नद्योरंतरेऽतिनिषिद्धः उक्तंच लुप्ताब्ददोषोत्रिमतेनमध्येसोमोद्भवायाःसरनिम्नगायाः इतिनारदेनसमसप्तकदोषोविवाहे
वर्जितः समदृष्टिर्गुरोः शुक्रस्तन्मासेतुप्रयत्नतः विवाहादिनकुर्वीतनर्मदातीरउत्तरे ५३ अथवारप्रवृत्तिमुपजात्याह पादोनेति रेखाभूमध्यरेखापुरीराक्षसीदेव
कन्याथकांचीमुक्ता लंकांतआरभ्यसुमेरुमस्तकपर्यंतस्थाधोवर्तिदेशास्तेमध्यरेखाशब्देनोच्यंते यस्मिन्देशेवारप्रवृत्तिर्विचिकीर्षितास्तद्देशोरेखावः प्राक्पश्चिमे
यावंतियोजनानिभवंतिवानिस्वचतुर्थांशोनानिकृत्वातावद्भिः पलैः ॥

तिथ्यः पंचदशघटिकायुक्ताना: यदा मध्यरेखातः प्रत्यग्योजनानि तदा युक्ताः यदा तु प्राग्योजनानि तदा हीनाः कार्याः अथ यद्दिने वारप्रवृत्तिर्जाता तद्दिवसे यद्दिनार्धं
चरपलयुतहीना नाडिका पंचचंद्राइत्यादिप्रकारसिद्धम् तस्माद्दिनार्धात् संस्कारविशिष्टाः पंचदशऊनाधिकाश्चेद्भवंति तदा तद्दिवसोद्भवैः पलैर्दिनार्धस्य संस्कारवि
शिष्टपंचदशानां च यद्विवरं अंतरं तत्संबंधेनोत्थैरुत्पन्नैः पलैरूर्ध्वं तथाधो दिनपस्य वारस्य प्रवेशः यदा संस्कारविशिष्टाः पंचदश दिनार्धतश्चेदूनास्तदा सूर्योद-
यादूर्ध्वं वारप्रवृत्तिः यदा संस्कारविशिष्टाः पंचदश दिनार्धतोऽभ्यधिकास्तदा सूर्योदयात्प्राक् वारप्रवृत्तिरित्यर्थः यथा वाराणसी रेखाभिधानात् कुरुक्षेत्रात् प्राक् त्रिषष्टि
योजनानि ६३ पादोनचतुर्थांशेनोनानि ४७।१५ प्राग्योजनत्वादेतैः पलैरूनाः पंचदशघटिका जाताः १४।१३ दिनार्द्धं १६।३० अस्मान्न्यूनादिति विवरं २।१७ ते
नाभिर्घटीभिः सूर्योदयादूर्ध्वं वारप्रवृत्तिः यदा दिनार्द्धं १३।५० अस्मादधिकादिति विवरं ०।२३ एताभिर्घटीभिः सूर्योदयात्प्राक् वारप्रवृत्तिरित्यर्थः ५४ अथ वारप्र-

**ऊनाधिकास्तद्दिवसोत्थदैः पलैरूर्ध्वन्तथाधो दिनपप्रवेशनम् ५४ वारादेर्घटिका द्विघ्नाः खाग्निहृच्छेषवर्जिताः सैकास्तष्टा**
**नगैः कालहोरेशा [illegible] क्रमात् ५५ ॥**

॥वृत्तिप्रयोजनपुरःसरकालहोरामनुष्टुभाह वारादेरिति वारप्रवृत्तिप्रकारेण यस्मिन् क्षणे वा
रप्रवृत्तिर्जाता ततः तद्दृष्टघट्यो द्विगुणाः कार्याः तद्द्विस्थानेस्थाप्याः तत्र पंचभिर्भक्ते यल्लब्धं तेषां ज्यच्छेपं तद्द्विगुणघटीमध्ये वर्जितं कार्यं एवं विधाघट्यः सैक
एकयुक्ताः कार्याः सप्तभिस्तष्टा अवशिष्टाः कालहोरेशाः स्युः ते दिनपात् वारात् क्रमात् गणनीयाः यथा रविवारे इष्टघटिकाः ६। द्विगुणाः १२ पृथग्लब्धा ५ त्रिशे
ष २ प्रवर्जिताः १० सैकाः ११ नगैः ७ स्तष्टाशेषं ४ रविवारे क्रमाद्गणनया चतुर्थो बुधस्तस्य होरा इत्यादि विवाहवृन्दावने उदयमारभ्य होरा उक्ताः यथा तत्कालाः
र्केन्नूनलग्नांशपिंडो भक्तः पंचखाग्निभिर्भुक्तहोराः भास्वच्छुक्रज्ञेन्दुसौरेज्यभौमाः संख्यायैरन्वारतस्ते तदीशा इति अनयोर्विषयविभागो वसिष्ठसंहिता
यां वारप्रवृत्तिविज्ञानं क्षणवारार्थमेव हि अखिलेष्वन्यकार्येषु दिनादिरुदयाद्भवेत् क्षणवारः कालहोरारूपस्तदर्थं वारप्रवृत्तिः अन्यकार्येषु दिक्श्च
ला दिशुनि थिवारप्रयुक्तेषु वा योगेषु च सूर्योदयादेव वारो ग्राह्यः ५५ ॥ ५५ ॥ ५५ ॥ ५५ ॥ छ ॥ ॥

अथ कालहोराप्रयोजनं शालिन्याह वारेप्रोक्तमिति यत्कर्म यस्मिन्वारे प्रोक्तं तद्दिनस्य सदोषत्वात्तस्यावश्यककृत्ये तस्य कालहोरायां कर्त्तव्यम् नारदः यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते ग्रहस्य क्षणवारेऽपि तस्य तत्कर्म सर्वदा अत्र केचित् यस्य वारे कर्म प्रोक्तं तस्य बलिनोऽनवांशे सूर्यश्चंद्रो वा चेत्तिष्ठति तदा तत्कर्म कार्यमित्याहुः उक्तंच यस्य ग्रहस्य दिने कर्म यत्किंचिदभिधीयते यस्यांशसंस्थिते चंद्रे सूर्ये वा तद्विधीयते इति अथ धिष्ण्ये नक्षत्रे यत्कर्म वस्त्रपरिधानादिकमुक्तं तदस्यावश्यकत्वे अस्य धिष्ण्यस्य स्वामितिथ्यंशके स्वामिनो मुहूर्त्ते कुर्यात् नारदः यस्मिन्नृक्षे तु यत्कर्म निखिलं कथितं च यत् तदृक्षेऽपि तन्मुहूर्त्ते कार्यं यात्रादिकं तथेति मुहूर्त्तस्वामिनो विवाहप्रकरणे वक्ष्यन्ते क्षणेषु मुहूर्त्तेषु दिक्शूलाद्यं दिक्शूलं वारशूलं नक्षत्रशूलं चिंत्यं विचारणीयं एवं परिघो दंडः क्षणेषु मुहूर्त्तेषु नैवोल्लंघ्यः दिक्शूलादिकमखिलं परिघदण्डादि विज्ञेयमिति वसिष्ठोक्तेः ५६ अथ मन्वादीन्युगादींश्च शार्दूलविक्रीडितेन

वारेप्रोक्तं कालहोरास्रु तस्य धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकेऽस्य कुर्याद्दिक्शूलादि चिंत्यं क्षणेषु नैवोल्लंघ्यः पारिघश्चापि दंडः ५६ ।
मन्वाद्यास्त्रितिथी मधौ तिथिरवी ऊर्जे शुचौ दिक्तिथी ज्येष्ठेंत्ये च तिथिस्त्विषे नव तपस्यश्वाः सहस्ये शिवाः भाद्रेऽग्निश्च सिते त्वमाष्ट नभसः कृष्णे युगाद्याः सिते गोऽग्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघासिते ५७॥

ना[ ॥ ]ह मन्वाद्या इति सिते शुक्लपक्षे एता मन्वादयः मधौ चैत्रे त्रितिथी तृतीया पौर्णिमे ऊर्जे कार्त्तिके तिथिरवी पूर्णिमा द्वादश्यौ शुचौ आषाढे दिक्तिथी दशमी पूर्णिमे ज्येष्ठे अंत्ये फाल्गुने च तिथिः उभयत्र पूर्णिमैव इषे आश्विने नवमी तपसि माघे अश्वाः सप्तमी सहस्ये पौषे शिवा एकादशी भाद्रपदे अग्निस्तृतीया तु इति पुनः नभसः श्रावणस्य कृष्णपक्षे अमावास्या अष्टमी अथ युगाद्याः श्चत्वारः बाहुलराधयोः बाहुलः कार्त्तिकः राधो वैशाखः तयोः शुक्लपक्षे गोऽग्नी नवमी तृतीये युगादि कार्त्तिकशुक्लनवमी कृतयुगादिः वैशाखशुद्धतृतीया त्रेतादिः भाद्रमाघासिते मदनदर्शौ युगादि मदनस्त्रयोदशी दर्शो अमावास्या भाद्रकृष्णत्रयोदशी कलियुगादिः माघकृष्ण अमावास्या द्वापरादिः अत्र शुक्लादयो मासा ग्राह्याः कार्त्तिके शुक्लनवमी चादिः कृतयुगस्य सा त्रेतादिर्माधवे शुक्ला तृतीया पुण्यसंमिता कृष्णा पंचदशी माघे द्वापरादिरुदीरिता कल्पादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशीति ना

अथ नक्षत्रप्रकरणं व्याख्यायते तत्रादौ नक्षत्रस्वामिनः शार्दूलविक्रीडितेनाह नासत्येति एतेनासत्यांतकादयः क्रमेशानक्षत्रेशाः क्रमात्स्युः १ अथ ध्रुवनक्ष
त्राणि तत्कृत्यं चानुष्टुभाह उत्तरात्रयेति उत्तरात्रयं रोहिणी च एतानि नक्षत्राणि रविवारश्च ध्रुवसंज्ञानि स्थिरसंज्ञानि चेति संज्ञाद्वयं एवमुत्तरत्रापि व्याख्येयम् ॥
ध्रुवनक्षत्रेषु स्थिरादिकर्मकार्यं आदिग्रहणान्मृदुनक्षत्रोक्तं यात्रां वसिष्ठः मृदुचन्द्रे कथितान्यपि स्थिरचन्द्रे तानि कार्याणि इति २ अथ चरभानि तत्कृत्यं
चानुष्टुभाह स्वात्यादित्येति आदिशब्दाल्लघुनक्षत्रोक्तमपि ३ अथोग्रनक्षत्राणि चानुष्टुभाह पूर्वात्रयमिति आदिशब्दाद्दारुणनक्षत्रोक्तमपि ४ अथ मि

नासत्यांतकवन्हिधातृशशभृद्रुद्रादितीज्योरगाः पित्र्योऽभगोर्यमरवीत्वष्टा समीरः क्रमात् शक्राग्नी खलु मित्रइंद्रनिर्ऋ
तिक्षीराणि विश्वे विधिर्गोविन्दो वसुतोयपाजचरणाहिर्बुध्न्यपूषाभिधाः १ उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरम् तत्र स्थिरं
बीजगेहशांत्यारामादिसिद्धये २ स्वात्यादित्ये श्रुतेस्त्रीणि चंद्रश्चापि चरं चलं तस्मिन्गजादिकारोहो वाटिकागमनादिकम्
पूर्वात्रयं याम्यमघे उग्रं क्रूरं कुजस्तथा तस्मिन्घाताग्निशाठ्यानि विषशस्त्रादि सिध्यति ४ विशाखाग्नेयभे सौम्यो मिश्रं
साधारणं स्मृतं तत्राग्निकार्यं मिश्रं च वृषोत्सर्गादिसिद्धये ५ हस्ताश्विपुष्याभिजितः क्षिप्रं लघु गुरुस्तथा तस्मिन्पण्य
रतिज्ञानभूषाशिल्पकलादिकम् ६ मृगांत्यचित्रामित्रर्क्षं मृदु मैत्रं भृगुस्तथा तत्र गीतांबरक्रीडामित्रकार्यविभूषणम्
७ मूलेंद्रार्द्राहिभं सौरी तीक्ष्णं दारुणसंज्ञकं तत्राभिचारघातोग्रभेदाः पशुदमादिकम् ८ ॥ ८ ॥ ८ ॥ रामः

श्राण्यनुष्टुभाह विशाखेति आदिग्रहणादुग्रभोक्तमपि ५ अथ लघुनक्षत्राण्यनुष्टुभाह हस्तेति शिल्पं वर्द्धकिविकृत्यादि कला नृत्यादिकाश्च
तुःषष्टिः आदिशब्दाच्चरभोक्तमपि ६ अथ मृदुनक्षत्राण्यनुष्टुभाह मृगांत्येति ७ अथ तीक्ष्णभान्यनुष्टुभाह मूलेति अभिचारः कर्माणम्
भयंकरकृत्यमारणादि पशुदमः पशुशिक्षा आदिशब्दात् बंधनादिकं स्थिरं च ८ ॥ ८ ॥ ७ ॥ ६ ॥ श्रीकृष्ण

अथाधोमुखोर्ध्वमुखतिर्यङ्मुखनक्षत्राणिइंद्रवज्रयाह मूलाहीति मूलं अहिभं श्लेषा मिश्रं कृत्तिका विशाखे उग्रं पूर्वात्रयमघाभरण्यः एतानिनवभानिअधोमुखानिज्ञेयानि आर्द्रापुष्यः श्रवणत्रयंरोहिण्युत्तरात्रयंचनवभान्यूर्ध्वमुखानि मैत्राणिचित्रारेवत्यनुराधाः हस्तस्वातीपुनर्वसुज्येष्ठा अश्विनीएतानिनवभानितिर्यङ्मुखानि एषुअधोमुखोर्ध्वमुखतिर्यङ्मुखेषुभेषुईदृशंकृत्यंअधोमुखोर्ध्वमुखतिर्यङ्मुखकृत्यंसद्भवति गरुडपुराणे भरणीकृत्तिकाश्लेषामघामूलविशाखिकाः तिस्रः पूर्वास्तथाचैवअधोवक्त्राः प्रकीर्त्तिताः एषुवापीतडागादिकूपभूमितृणानिच देवागारस्यखननं निधानंखननंतथा गणितंज्योतिषारंभंखनीबिलप्रवेशनं कुर्यादधोगतान्येवकार्याणिवृषभध्वज रोहिण्यार्द्रातथापुष्योधनिष्ठाचोत्तरात्रयम् वारुणश्रवणंचैवनवचोर्ध्वमुखास्तथा एषुराज्याभिषेकंचपट्टबन्धंचकारयेत् ऊर्ध्वमुखान्युच्छ्रितानिसर्वाण्येषुचकारयेत् रेवतीचाश्विनीचित्रास्वातीहस्तःपुनर्वसुःअनुराधा

मूलाहिमिश्रोग्रमधोमुखं भवेदूर्ध्वास्यमार्द्रेज्यहरित्रयध्रुवम् तिर्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विभानी।
दृशकृत्यभेषुसत् ९ पौष्णध्रुवाश्विकरपंचकवासवेज्यादित्येप्रवालरदशंखसुवर्णवस्त्रम्॥ १५ ॥ १७॥

मृगोज्येष्ठाएतास्तिर्यङ्मुखाःस्मृताः गजोष्ट्राश्वबलीवर्ददमनंमाहिषस्यच बीजानांवपनंकुर्याद्गमनागमनादिकम् चक्रयन्त्रयारीनांनावादीनांप्लवाहणं पार्श्वपुत्रानिकार्याणिकुर्यादिपुचतान्यपि इदं चनक्षत्रविशेषविहितानांकर्मणामावश्यकर्त्तव्यत्वेमुहूर्त्तालाभेमत्याकर्मणः अधोमुखाद्याकारंज्ञात्वातत्तन्नक्षत्रेषुतानिकर्माणिकार्याणियानिचसर्वथानोक्तानिबिलप्रवेशादीनितान्येषुवनेक्षत्रेषुकार्याणीत्येतदर्थमुक्तम् ९
अथप्रवालादिधारणमुहूर्त्तंवसंततिलकेनाह पौष्णध्रुवेति रेवत्यादिनक्षत्रेषुतथारिक्तातिथिशनिचन्द्रभौमवर्जितेऽह्निदिवसेप्रवालं विद्रुमंशंखः शंखवलयादिवस्त्रंश्वेतं एतानिधार्याणि रक्तंमंजिष्ठादिरंगेनरंजितंवस्त्रंभौमवारेपिधार्यम् अथसुभगासभर्त्तृकाध्रुवादितियुगेरोहिण्युत्तरात्रयेषु अदिति युगेपुनर्वसोपुष्येचप्रवालादिकंनदध्यात् क्वचिच्छुतन्तारायांस्नानमपिनिषिद्धम्॥ १५ ॥ १८॥

उक्तंच रोहिणी गुरुपुनर्वसूत्तरेया बिभर्त्तिनववस्त्रविभूषणम् सानयोषिदवलंबते पतिस्नानमाचरतिवारुणेषुयादिति १० अथनवधाविभक्तस्यवस्त्रस्यरंध्रादिदोषेशुभाशुभफलंशार्दूलविक्रीडितेनाह वस्त्राणामिति वस्त्राणांनवभागाः कार्याः कोणचतुष्टयेअमरादेवाः स्थाप्याः राक्षसामध्यगतांशगताज्ञेयाः नराः दशांसादितिपाशेचपुनर्मध्ययोरंशयोर्ज्ञेयाः तत्रचेंद्रक्षोंशेनवतरेनूतनेवस्त्रेदैवाद्रंध्रेअग्निस्पृष्टे स्फुटितेपाषाणाद्याघातादिभिर्निहते पंकेनकर्दमेनआदिशब्दात् गोमयादिभिरुपहतेसतितद्वस्त्रंनसत् शुभफलजनकंनभवतीत्यर्थः नृस्फुराश्रयोएवंवस्त्रदाहादिकेसति शुभंकल्याणंस्यात् अथसर्वांशकेराक्षसमनुष्यदेवांशकेषुप्रांततः प्रांतभागे असदनिष्टफलगमकं द्वंद्वंशय्यापादुकास्वपिज्ञेयम् श्रीपतिः कज्जलकर्दमगोमयलिप्तेवाससिदग्धवतेस्फुटितेचचिंत्यमिदंनवधाविहितेस्मिन्निष्टमनिष्ट

फधार्यविरिक्तशनिचंद्रकुजेन्हिरक्तंभौमेध्रुवादितियुगेसुभगत्वनदध्यात् १० वस्त्राणांनवभागकेषुचचतुःकोणेमराराक्षसामध्यत्र्यंशगतानरास्तुसदशेपाशेचमध्यांशयोः दग्धवास्फुटितेंबरेनवतरेपंकादिलिप्तेनसद्रक्षोंशेनृस्फुरांशयोः शुभमसत्सर्वांशकेप्रान्ततः ११ विप्राज्ञयातथोद्वाहेराज्ञाप्रीत्यार्पितंत्यजत्॥ ॥ ॥ छ ॥ रामचंद्र

लंचसुधीभिः अत्रराक्षसांशेध्वजछत्रादिसदृशीछेदाकृतिशुभफलाज्ञेया देवमनुष्यांशेपिकाकोलूकसदृशीछेदाकृतिरशुभफलदा कश्यपः शंखचक्रांबुजछत्रध्वजतोरणसन्निभा श्रीवत्ससर्वतोभद्रनद्यावर्त्तगृहोपमा वर्धमानस्वस्तिकेभमृगकूर्मझषाकृतिः छेदाकृतिर्देवभागेप्यापुरर्थप्रदानृणाम् खरोष्ट्रोलूककाकादिजंबूकश्ववृकोपमा त्रिकोणः सूर्याकृतयोदेवभागेप्यशोभनाः निंदितंवसनंद्याद्द्विजेभ्यः स्वर्णसंयुतं आशिषोवचनंकृत्वाचान्यद्वस्त्रंचधारयेदिति ११ अत्रकचिद्दुष्टदिनेपिवस्त्रपरधानमनुष्ठमाह विप्राज्ञयेति धिष्ण्येनसत्रेवारादौवारतिथ्यादौगादौव्यतीपातभद्रादिदुष्टयोगेनिन्द्येपि॥ छ ॥

यद्वस्त्रंब्राह्मणानुज्ञयातथोद्वाहेराज्ञासंतोषेणार्पितंदत्तंतद्वस्त्रंधार्यमितिबुधाजगुः १२ अथलतापादपारोपणराजदर्शनमद्यागोविक्रयमु-
हूर्त्तान्शार्दूलविक्रीडितेनाह राधामूलेति राधाविशाखाएतदादिचतुर्दशनक्षत्रेलतानांवल्लीनांपादपानांवृक्षाणांचारोपोवापनःकार्यः।
अथराजदर्शनं ध्रुवमृदुक्षिप्रश्रवोवासवैः त्रयोदशभैःकार्यं अथमद्यमद्यारंभः तीक्ष्णोग्राबुपभेषुनवनक्षत्रेषुउदितःकथितः अथगवांक्र-
योमूल्येनपरस्माद्ग्रहणम् विक्रयोमूल्यग्रहणपूर्वकंदानं क्षिप्रांत्यवन्हीदुभादित्येंद्राबुपवासवेषुहिनवनक्षत्रेषुशस्तःप्रशस्तः अत्रभीमप-
राक्रमेणपंचदशभान्यभिहितानि हस्तेनुराधात्रितयेसपौष्णेमृमेचपूर्वाश्विविशाखभेषु पुष्येधनिष्ठाद्वितयेदितीशंगवांक्रयंविक्रयमामनंति।

निंद्येपिधिष्ण्येवारादौवस्त्रंधार्यंजगुर्बुधाः १२ राधामूलमृदुध्रुवर्क्षवरुणक्षिप्रेलतापादपारोपो
थोनृपदर्शनंध्रुवमृदुक्षिप्रश्रवोवासवैः तीक्ष्णोग्राबुपभेषुमद्यमुदितंक्षिप्रांत्यवन्हीदुभादित्येंद्रा।
बुपवासवेषुहिगवांशस्तःक्रयोविक्रयः १३ लग्नेशुभेचाष्टमशुद्धिसंयुतेरक्षापशूनांनिजयोनि।
भेचरे रिक्ताष्टमीदर्शकुजश्रवोध्रुवत्वष्ट्रेषुयानंस्थितिवेशनंनसत् १४ ॥ १४ ॥ ॥

न्ति १३ अथपशूनांरक्षामुहूर्त्तंस्थितिनिवेशनिषेधमुहूर्त्तंचेंद्रवज्रयाह लग्नेशुभइति शुभेशुभस्वामिकेलग्नेअष्टमशुद्धिसंयुतेशु-
भपापाक्रांताष्टमभावरहितेसतिपशूनांरक्षारक्षणंप्रवेशादिकंचसत् तथास्वीययोनिनक्षत्रेचरभेचसत् यथाऽश्वानांयोनिभेअश्वि-
नीप्रातत:रके नक्षत्रचतुष्पदानांरक्षाशस्ता तीक्ष्णेपशूनांदमनंवरंस्यात्सशुपोषणमितिवचनात् अथरिक्ता ४।९।१४ ष्टमीदर्शोमावास्याः
कुजोभौमः श्रवःश्रवणम् ध्रुवाण्युत्तरात्रयरोहिण्यः त्वाष्ट्रंचित्राएषुपशूनांयानंगृहाद्बहिर्निःसारणंस्थितिर्गोष्ठादिवेशनंनसत् शुभंन व्यव-
हारोच्चये शूर्वात्रयेधनिष्ठद्वयेपौष्णेसौम्यविशाखयोः आश्लेषायामयाश्विन्यांयात्रासिद्धिश्चतुष्पदामिति १४ ॥ १४ ॥

अथौषधसेव्योमुहूर्त्तमंदाक्रांतमाह भैषज्यंसदिति भैषज्यंऔषधंप्राश्यंभक्षितंचसत् लघुमृदुचरनक्षत्रेमूलेचद्व्यंगलग्नेद्विस्व-
भावराशिषुमिथुनकन्याधनुर्मीनेषुलग्नगतेषुसत्सुशुक्रेंदीज्यबुधेषुद्विस्वभावलग्नस्थेषुसत्सुनपुनस्तेषांशुक्रेंदीज्यबुधानांवारेरवेश्चदिवसे
वारे सतितिथौरिक्तामाररहिततिथौभैषज्यंसत् शुभंस्यात् दीपिकायां द्व्यंगोदयेगुरुबुधेंदुसितेषुसत्स्वेतेषांवारेरवेश्चसुविधौस्थितिथौसुयोगेभेषुक्षिप्र
चरमृदुविशाखशिवेतरेषुजन्मर्क्षविष्टिरहितेषुकृतःशुभायइति अथरिःफद्युनमृतिगृहेलग्नात् द्वादशसप्तमाष्टमगृहेषुशुद्धेषुशुभपापग्रहरहितेषु
सत्सुऔषधंतुवर्षफलग्रन्थादिना आयुर्निश्चयेचसत् द्यूनशत्रुनिधनव्ययशुद्धौसद्गृहेषुनितरांबलवत्सुआयुषश्चहितकारिणियोगकीर्तितानियम
मौषधसेवेतिश्रीपतिभट्टोक्तेः अथजनेर्भेजन्मनक्षत्रेनोभैषज्यंसत् जन्मनक्षत्रगश्चन्द्रःप्रशस्तःसर्वकर्मसु क्षौरभेषजवादाध्व केतवेषुविवर्जयेदिति

**भैषज्यंसल्लघुमृदुचरेमूलभेद्व्यंगलग्नेशुक्रेंदीज्येविदिचदिवसेचापितेषांरवेश्च शुद्धेरिःफद्युनमृतिगृहेसतिथौनोजने। भैस्सूचीकर्माप्यदितिवसुभेत्वाष्ट्रमित्राश्विपुष्ये १५ क्रयर्क्षेविक्रयोनेष्टोविक्रयर्क्षेक्रयोपिन पौष्णाम्बुपाश्विनीवातःश्रवश्चित्राःक्रयशुभाः १६**

वचनात् अथसूचीकर्मसूच्याःसंबंधिकर्मघटनसीवनादितिवसुभत्वाष्ट्रमित्राश्विपुष्यनक्षत्रेसत्स्यात् व्यवहारोच्चये अदिति
र्वासवंत्वष्ट्रमित्रभेदस्रवाजिनः सूचीकर्मतनुत्राणमेभिर्ऋक्षैःप्रशस्यतइति १५ अथान्यदनुष्टुभाह क्रयर्क्षइति क्रयर्क्षेवक्ष्यमाणक्रयनक्षत्रेविक्रयो
नकार्यः तथाविक्रयनक्षत्रेक्रयोपिनकार्यः दीपिकायांयमाहिशक्राग्निविशाखपूर्वानिष्टाः क्रयेविक्रयणेतिशस्ताःपौष्णाश्विचित्राशतविष्णुवा
ताःशस्ताःक्रयेविक्रयणेनिषिद्धाइति ननुयदायेनक्रयःकर्तव्यस्तदाअन्येनविक्रयःकर्त्तव्यस्तत्रक्रयविक्रयनक्षत्राणांमहाभेदाद्भयविधमुहू
र्त्तानुपपत्तिः उच्यते विक्रेतायदामुहूर्त्तेविक्रयार्थंगृह्यतेतदावस्तुपृथक् क्रियतेतत्कर्मविक्रयशब्दवाच्यम् यदाक्रयिणाक्रयार्थंमुहूर्त्तःप्राप्यतेतदा
विक्रयेत्रेमूल्यद्रव्यंदत्वापृथक्कृतविक्रेतवस्तुयात्यतक्रयशब्दवाच्यमितिमत्वायथाकथंचित्समाधेयं तत्रक्रयमुहूर्त्तः रेवतीशततारा अश्विनीस्वाती

अथविक्रयविपण्योर्मुहूर्त्तंशार्दूलविक्रीडितेनाह पूर्वाद्वीशेतिद्वीशंविशाखा पूर्वादिनक्षत्रेषु केंद्रेषुप्रथमचतुर्थसप्तमदशमेषुद्वितीयेकोणेनवपंचमेषुशुभैः॥ सद्भिःषट्त्र्यायेषुपापग्रहैःसद्भिःघटतनुंकुंभलग्नंविनात्यक्त्वासतिथौरिक्तामारहिततिथौविक्रयःसन्शुभोज्ञेयः अथविपणिःपण्यवीथिकागृहेस्थि॰ त्वाक्रयविक्रयार्थंयकर्मरिक्तातिथिभौमवारकुंभलग्नानिवर्जयित्वाम्येषुतिथिवारलग्नेषुमित्राणिमृगरेवतीचित्रानुराधाःध्रुवाणिरोहिण्युत्तरात्रयंक्षिप्रा॰ णिहस्ताश्विपुष्याःएतैर्भैःलग्नेचंद्रस्थितेमूर्तौचंद्रेसितेचसतिव्ययाष्टरहितैःपापग्रहैःसद्भिःशुभैर्द्व्यायखेद्वितीयैकादशमेषुसद्भिर्विपणिःशुभास्यात् १७ अथाश्वगजमुहूर्त्तमिंद्रवज्रयाह क्षिप्रान्त्येति क्षिप्रादिनक्षत्रेषुरिक्ताभौमव्यतिरिक्तदिनेवाजिकृत्यमश्वानांक्रयविक्रयशिक्षास्थानाभरण॰

पूर्वाद्वीशकृशानुसार्पयमभेकेंद्रत्रिकोणेशुभैः षट्त्र्यायेषुशुभैर्विनाघटतनुंसन्विक्रयःसत्तिथौ रिक्ताभौमघटान्विनाच विपणिर्मित्रध्रुवक्षिप्रभैर्लग्नेचंद्रसितेव्ययाष्टरहितैःपापैःशुभैर्द्व्यायखे १७ क्षिप्रांत्यवस्विंदुमरुज्जलेशादित्येष्वरि॰ क्तारदिनेप्रशस्तं स्याद्वाजिकृत्यंत्वथहस्तिकृत्यंकुर्यान्मृदुक्षिप्रचरेषुविद्वान् १८ स्याद्भूषाघटनंत्रिपुष्करचरक्षिप्र॰ ध्रुवैरत्नयुक् तत्तीक्ष्णोग्रविहीनभैरविकुजेमेषालिसिंहेतनौ ॥

॰दिकार्यंप्रशस्तंस्यात् श्रीपतिःपुष्यश्रविष्ठाश्विनसौम्यभेषुपौष्णान॰ लादित्यकराह्वयेषु सवारुणर्क्षेषुबुधैःस्मृतानिसर्वाणिकार्याणितुरंगमाणां अश्वारोहणेचक्रं अश्वाकारंलिखेच्चक्रंसाभिजिद्भानिविन्यसेत् स्कंधेत्रु॰ सूर्यभात्संचपृष्ठंचदशभानिचपुच्छेद्वेस्थापयेत्पादेश्वतुष्पादश्चतुष्टयम् उदरेविन्यसेत्संचमुखेद्वेतुरगस्यच अर्थलाभोमुखेसम्यक्वाजिनश्यति॰ चोदरे चरणस्थेरणेभंगःपुच्छेपत्नीविनश्यति अर्थसिद्धिर्भवेत्पृष्ठेस्कंधेस्कंधपतिर्भवेत् इति अथविद्वान् ज्ञातामृदुक्षिप्रचरनक्षत्रेषुरिक्तामाभौम॰ वर्जितदिनेचहस्तिकार्यंगजानांकार्यंक्रयविक्रयभूषादिकुर्यात् वसिष्ठःहस्तत्रयेसौम्यहरित्रयेचपौष्णद्वयेपुष्यपुनर्वसौचमैत्रेसर्वाण्यपिकुंजरा॰ णांकर्माणिशस्तान्यखिलानियानीति १८ अथभूषणघटनमुहूर्त्तंशार्दूलविक्रीडितेनाह स्याद्भूषेति त्रिपुष्करदिनक्षत्रं[illegible]

वक्ष्यति एवंविधे त्रिपुष्करदिनं चरक्षिप्रध्रुवनक्षत्रेषु भूषाघटनमाभरणघटनं शुभं स्यात् वसिष्ठः क्षिप्राचलचरभे सेरिक्तामावर्जिते शुद्धि-
वसेषु निखिलेष्वपि वारेष्वपि त्रिपुष्करे भूषणकार्यं अथतद्भूषणं रत्नयुतमाणिक्यादियुतं चेत्तदा तीक्ष्णोग्रविहीनभे तीक्ष्णा निमूलज्येष्ठा आर्द्रा-
श्लेषाख्यानि उग्राणि पूर्वात्रयमघाभरण्यः एतद्व्यतिरिक्तेषु अष्टादशनक्षत्रेषु तथा रविभौमवारेऽपि कार्यं तथा मेषवृश्चिकसिंहलग्नेषु च वसिष्ठः स्थि-
रसाधारणचरमेलघुमैत्रेष्वर्ककुजवारे तेषामेव विलग्ने माणिक्यमयभूषणं कार्यमिति कर्करघतुलालग्नेषु कार्यमित्यपि ज्ञेयम् वसि-
ष्ठः क्षिप्रमृदुध्रुवचरभेशशिसितार्यावासरेषु तल्लग्ने मुक्ताफलरजतमयभूषणमखिलं सवस्त्रकं कार्यम् अथ तीक्ष्णा निमूलज्येष्ठार्द्राश्ले-
षाः उग्राणि पूर्वात्रयभरणीमघा अश्विनीमृगौ द्विदैवं विशाखा दहनः कृत्तिका एषु नक्षत्रेषु घटितं शस्त्रं शुभं स्यात् अरितिर्वासववस्त्रमैत्रमेरु

तन्मुक्तासहितं चरध्रुवमृदुक्षिप्रेषु भे सत्तनौ तीक्ष्णोग्राश्विमृगे द्विदैवदहने शस्त्रं शुभं घटितं १७ मुद्राणां पातनं सद्ध्रु-
वमृदुचरभक्षिप्रभे वीन्दुसौरे घस्त्रे पूर्णा जयाख्ये न च शुक्र भृगुजास्ते विलग्ने शुभे स्यात् ॥ ॥ श्रीः ॥

वा जिनः स्त्रीकर्मननुत्राणमेभिर्नक्षैः प्रशस्यत इति क्षेत्रसयोक्तेः अथ स्वर्णरूप्यादिपात्रे भोजनमुहूर्तमाह वसिष्ठः लघुमैत्रध्रुवचरभेषु सि-
तेंदुबुधजीववारेषु हेमरजतादिभाजनभोजनमारोग्यामृतयोमिषु इति १९ अथ मुद्रापातनमुहूर्तं वस्त्रक्षालनमुहूर्तं च स्रग्धराह मुद्राणामिति
ध्रुवमृदुचरक्षिप्रसंज्ञके नक्षत्रैः कृत्वा राजमुद्रां किंतु स्वर्णरूप्यादिनिष्पादनं मुद्रापातनमित्युच्यते टंकसाले तिभाषया वीन्दुसौरे घस्त्रे चंद्रशनिप-
रवर्जितवारे तथा पूर्णा जयाख्ये पूर्णाः पंचमीदशमीपूर्णिमाः जयास्तृतीयाष्टमीत्रयोदश्यः एतासु तिथिष्वित्यर्थः शुभं स्यात् तथा गुरुशुक्रकास्तेन शु-
भे विलग्ने शुभैः लग्ने शुभग्रहैः सद्भिरित्यर्थः उक्तं च मृदुध्रुवक्षिप्रचरे शुभेषु योगप्रशस्तेशशिचंद्रवर्ज्ये वारे तिथौ पूर्णजया द्वये च मुद्राप्रतिष्ठा शु-
भदा नराणां गुर्वस्ते वा सितास्ते वा मुद्राणां घटनं क्वचित् क्रूरग्रहस्पर्शे लग्नेन कार्यं भूतिमिच्छता अथ ध्रुवेव स्वर्धनिष्ठा ॥ ॥ ॥

हयेऽश्विनी दिनकृत् हस्तः तस्मात् संचके हस्त चित्रा स्वाती विशाखा अनुराधासु आदित्ये पुनर्वसौ पुष्ये वस्त्राणां क्षालनं रजकाधानार्थं दा
नमपि शुभं स्यात् रिक्ताः पर्वाणि पूर्वोक्तानि तिथिप्रकरणे षष्ठी पितृदिने श्राद्धदिने एतेषु रविजज्ञेषु शनिबुधवारेषु कदापि वस्त्रक्षालनं
नो कार्यं २० अथ खड्गादिधारणशय्याद्युपभोगमुहूर्तं स्रग्धरयाह संधार्या इति विरिक्ते रिक्तावर्जित शुक्रबृहस्पतिरविवारे तथा मैत्र ध्रुव
लघुसंज्ञकनक्षत्रसहितपुनर्वसु ज्येष्ठा विशाखानक्षत्रेषु कुंतादयः संधार्याः कुंतो भल्लः वर्म कवचं इषवो बाणाः आस्यते अनेनेति ष्वसनं ध
नुः शरो बाणः कृपाणः खड्गः असिपुत्री छुरिका संनाहोपीति केचित् तथा स्थिराख्ये वृषसिंहवृश्चिककुंभाख्ये लग्ने चंद्रे अपिशब्दात् लग्नेपि

वस्त्राणां क्षालनं सहस्र हयदिनकृत्संचकादित्यपुष्ये नो रिक्तापर्वषष्ठीपितृदिनरविजज्ञेषु कार्यं क
दापि २० संधार्याः कुंतवर्मेषुसनशरकृपाणासिपुत्र्यो विरिक्ते शुक्रेज्यार्केऽह्नि मैत्रध्रुवलघुस
हितादित्यशाक्रद्विदैवे स्युर्लग्ने हि स्थिराख्ये शशिनि च शुभदृष्टे शुभैः केंद्रगैः स्याद्धगैः शय्यासना
देर्ध्रुवमृदुलघुहयेंतकादित्यइष्टः २१ ॥ २१ ॥

शुभग्रहदृष्टे शुभैः केंद्रगैः सद्भिः कुंतादिधारणं हितं क्रूरसौम्ययोः पु
ष्येवादितिचित्रपद्मननये शक्रोत्तरारेवती वाजीहस्तविशाखमित्रसहिते भानोर्गुरोर्भार्गवे कुंभे कीटमृगे वृषे मृगपतौ चंद्रे शुभैर्वीक्षिते संनाहं
शरखड्गकुंतछुरिकाधार्यान्नृपाणां हितेति यत्तु दीपिकायां मूलेंदुपूर्वात्रययाम्यपित्र्यशाक्राश्विसर्पानलशूलिनश्च शस्त्रादिसंधारणमेषु कुर्यात्ति
थौ विलग्ने च शुभेषु भाहे इति तदा सन्नियुद्धादिविषयं अथ ध्रुवमृदुलघुनक्षत्रेषु हरौ श्रवणे अंतके भरण्यां आदित्ये पुनर्वसौ एषु शय्यासनादेः शय्या
खड्गादिरूपा आसनं पीठ मृगत्वगादि आदिशब्दात् पादुका तेषामुपभोगः इष्टः हितः दीपिकायां मैत्रेंदुपुष्ययमभादितिवह्निचित्राहस्तोत्तरात्रयहरीज्य
विधातृभानि एतेष्वतीव शयनासनपादुकानां संभोगकार्यमुदितं मुनिभिः शुभाहे इति ॥ २१ ॥ २१ ॥ ॥ श्रीजगदंबा ॥

अथांधादिनक्षत्राणि शार्दूलविक्रीडितेनाह अंधाख्यमिति धाता रोहिणी विधिरभिजित् दहनभं कृत्तिका भगः पूर्वाफाल्गुनी अन्यत्स्पष्टं २१ अं
धादिनक्षत्राणां फलमनुष्टुभाह विनष्टार्थ इति अंधनक्षत्रेषु विनष्टस्यापहृतस्यार्थस्य लाभः शीघ्रं भवति मंदनक्षत्रेषु विनष्टार्थस्य प्रयत्नतो लाभो
भवति मध्ये मध्यमनक्षत्रे विनष्टार्थस्य दूरस्थनगरादौ तीव्र दूरदेशे श्रवणं खरीयद्द्रव्यममुकेन हृतं अमुकस्थले तिष्ठतीति लोकवार्ता भवति ल
भ्यस्तु नास्ति सुलोचनक्षत्रेषु श्रुत्याप्तीन श्रवणमपि लब्धिरपि न भवतीत्यर्थः २३ अथ धनप्रयोगे तिनिषिद्धनक्षत्राण्यनुष्टुभाह तीक्ष्णेति एतै
स्तीक्ष्णदिनक्षत्रैर्यद्द्रव्यं सुवर्णादि दत्तं कालांतरं विनाददत्तं स्वसत्तापरित्यागेन निवेशितं स्वेष्टसमीपे प्रत्ययार्थं स्थापितं प्रयुक्तं कालांतररीति

अंधाख्यं वसुपुष्यधातृजलभद्वीशार्यमांत्याभिधं मंदाक्षं रविविश्वमैत्रजलपाश्लेषाश्विचांद्रं भवेत् मध्याक्षं शिवपि
त्र्यजैकचरणत्वाष्ट्रेंद्रविध्यातकं स्वक्षं स्वात्यतिश्रवोदहनभाहिर्बुध्न्यरक्षोभगम् २२ विनष्टार्थस्य लाभोंधेशीघ्रं मंदेप्र-
यत्नतः स्याद्दूरे श्रवणं मध्येश्रुत्याप्तीन सुलोचने २३ तीक्ष्णमिश्रध्रुवोग्रैर्यद्द्रव्यं दत्तं निवेशितं प्रयुक्तं च विनष्टं च
विष्ट्यापाते च नाप्यते २४ मित्रार्कध्रुववासवांबुपमघातोयांत्यपुष्येंदुभिः पापैर्हीनबले स्तनौ स्मरगुरौ ज्ञे वा भृगौ खेवि

पुरःसरं कस्मै वित्तं विनष्टं चौरादिनाहृतं स्वयमेव वा कुत्रचित्कृतं द्रव्यं निश्चयेन कदापि नाप्यते तथा विष्ट्यां भद्रायां पाते व्यतीपाते महापाते वा हृतं
द्रव्यं नाप्यते चकाराद्ग्रहणेपि वसिष्ठः ध्रुवोग्रसाधारणदारुणर्क्षेनिक्षिप्तमर्थं त्वथवाप्यनष्टं चौरैर्हृतं दत्तमुपप्लुतं वा विष्ट्यां च पातेन न लभ्यते तदिति
अत्रेदमनुसंधेयं तीक्ष्णमिश्रादिपंचदशभेषु मध्ये रोहिण्यार्यमध्विप्रजलभद्वीशेषु दत्तनिवेशितप्रयुक्तद्रव्यस्यैवाऽप्राप्तिः चौरापहृतस्य स्वतो गतस्य वा
धनस्य लाभ एवं तेषां रोहिण्यादीनां मध्यमलोचनेषु पाठसामर्थ्यादिति भावः २५ अथ जलाशयखनननृत्यारंभयोर्मुहूर्त्तं शार्दूलविक्रीडितेनाह मित्रा
र्केति अनुराधादिनक्षत्रेषु सद्भिः पापग्रहैर्हीनबलैर्बलरहितैः सद्भिः तनौ लग्ने स्मरगुरौ सति बुधे वा सति विदशमे ... के सति॥ ६ ॥ २५

आप्येजलराशौविधौसति सर्वतोयाशनीवापीकूपतडागादीनांतोयाधाराणांखननंहितंस्यात् आप्यांबुयांत्यपितृमित्रवसूत्तरार्के
केंद्रीज्यभेषुखननंसलिलाशयानामितिव्यवहारतत्त्वोक्तेः श्रीपतिः लग्नेजीवेज्ञेथवादुर्बलैश्चक्रूरैः शुक्रेवारिमेषुरणस्थे आप्येचंद्रे
सर्वतोयाशयानामारंभाः स्युः सिद्धयेनिर्विकल्पमिति अथनृत्यारंभः तैः प्रागुक्तैर्नक्षत्रैर्व्यंभोमघैः पूर्वाषाढामघारहितैः संद्रभैर्ज्येष्ठासहितैः
मित्रार्कध्रुववासवांबुयांत्यपुष्येंदुज्येष्ठानक्षत्रैः नृत्यारंभः शुभः स्यात् शुभेहिबुकेचतुर्थस्थानेलग्नेज्ञेसति अब्जे चंद्रेज्ञराशौ मिथुनकन्यास्थे
सतीत्यर्थः २५ अथसेवकस्यस्वामिसेवायांमुहूर्त्तंशालिन्याह क्षिप्रेति क्षिप्राणिहस्ताभिजिदश्विपुष्याः मैत्राणिमृगरेवतीचित्रानुराधाः एतेषु
नक्षत्रेषुबुधशुक्रसूर्यवारे सौम्येशुभग्रहेलग्नगेसति अर्केभौमेवाखलाभेदशमेएकादशेवास्थितेसतिसेवकेनस्वामिनः सेवाकार्यातत्र

आप्येसर्वेजलाशयस्यखननंव्यंभोमघैःसेंद्रभैस्तैर्नृत्यंहिबुकेशुभेस्तनुगृहेज्ञेब्जेज्ञराशौशुभं २५ क्षिप्रेमैत्रेविदित्
तार्केज्यवारेसौम्येलग्नेर्केकुजेवाखलाभे योनेर्मैत्र्याराशिपोश्चापिमैत्र्यांसेवाकार्यास्वामिनःसेवकेन २६ स्वात्या
दित्यमृदुद्विदैवगुरुभेकर्णत्रयाश्वेचरेलग्नेधर्मसुतार्थशुद्धिसहितेद्रव्यःप्रयोगःशुभः॥ स्वामिसेवकनक्षत्रयोन्योर्मैत्र्यां

चपुनः राशिपोः सेव्यसेवकयोराशिस्वामिनोर्मैत्र्यांप्रीतौसत्यांसेवकार्यो अन्यथानकार्या २६ अथद्रव्यप्रयोगऋणग्रहणमुहूर्त्तंशार्दूल
विक्रीडितेनाह स्वात्यादित्येति स्वात्यादिचैकादशनक्षत्रेषुचरेमेषकर्कतुलामकराणामन्यतमेलग्नेधर्मेनवमेसुतःपंचमंअष्टमंएतेषांशु
द्धिःनवपंचमयोःपापग्रहराहित्यंअष्टमेतुशुभपापराहित्यमेव रूपाशुद्धिस्तयासहितेलग्नेद्रव्यप्रयोगःऋणदानंशुभंस्यात् भौमपराक्रमेमृ
दुपुष्याश्विनीचैवविशाखाश्रवणत्रयंपुनर्वसात्वसंसंति धनादिनिधिवर्त्तनं वर्त्तनमृणादिरूपणदानं मिश्रनक्षत्रत्वाद्विशाखायांनिषेधेप्राप्ते
ऋणदानेएवविधिः त्वतेनष्टादौनिषिद्धेव शुद्धेषुधर्मात्मजनेधनेषुचरेविलग्नेद्रविणप्रयोगः इतिअथारेभौमवारेऋणंनग्राह्यंऋणंभौमेन

ऋणच्छेदं कुजे कुर्यात्संचयं सोमनंदने अथतु विशेषे संक्रमसंक्रांतिदिवसे वृद्धौ वृद्धियोगे करे हस्तनक्षत्रे अर्के न्हि रविवारे इतियत्तत्रा
पि नग्राह्यमित्येकसंबंधः यत्यस्माद्धेतोस्तद्दणतदंशोऋणगृहीतुः कुलेषु भवेत् तत्पुत्रपौत्रादिभिरपि परिहर्तुमशक्यमित्यर्थः हस्तेः केचिद्रे
संक्रांतौ यदृणं स्यात्कुलेषु तत् वृद्धियोगे तथा त्याज्यमृणच्छेदं तु कारयेदिति ज्योतिः प्रकाशोक्तेः बुधवारे ऋणं कदापि न देयम् २७ अथ हलप्र
वाह मुहूर्त्तं शार्दूलविक्रीडितेनाह मूलद्वीशेति एतैः मूलादिभिरेकोनविंशतिनक्षत्रैः विनार्कशनिरविशनिवारौ वर्जयित्वान्यवारेषु तत्रा
पे हीनबले निर्बलेः चंद्रे जलराशिनवांशके सति शुक्रे चंद्रे च मासले पुष्टे सति उदितेत्यर्थः गुरौ लग्ने च सति तदा प्रथमं हलप्रवहणं शस्तं स्या
त् कश्यपः गुरौ लग्नगते शुक्रे बलिन्याप्यादये विधौ शस्ता कृषिक्रिया तत्र दुर्बलेः क्रूरखचरैः अथ सिंहे घटे कुंभे कर्के अजमेषे एणे मकारे।

नारे स्यात्यमृणं तु संक्रमदिने वृद्धौ करे र्के न्हि यत्तद्वंशेषु भवेद्दणं न च बुधे देयं कदाचिद्धनं २७ मूलद्वीशमघाचरध्रुवम
दुक्षिप्रे विनार्कशनी पापे हीनबले विधौ जललवे शुक्रे विधौ मांसले लग्ने देवगुरौ हलप्रवहणं शस्तं नृसिंहे घटे कर्कजे
णधे टतनोः क्षयकरं रिक्तासु षष्ठ्यां तथा २८ एतेषु श्रुतिवारुणादितिविशाखोडूनि भौमं विना वीजोप्तिर्गदितासुभात्त्रिगुभ।

((तोष्टाग्नी दुरा मंदवः

घटे तुलायां तथा रिक्तासु षष्ठ्यां तथा शब्दोनुक्तसमुच्चयार्थस्तेनाष्टम्यामपि न शस्तः यस्मात्क्षयकरं २८ अथ वीजोप्तिमु
हूर्तं फणिचक्रं च शार्दूलविक्रीडितेनाह एतेष्विति पूर्वोक्तनक्षत्रेषु श्रुतिवारुणादितिविशाखोडूनि विना श्रवणादिवर्जितेषु मूलमघाध्रुवमृदुक्षि
प्रधनिष्ठास्वातीषु भौमं विना भौमवारव्यतिरिक्तवारेषु बीजोप्तिः बीजवापनं शुभं तत्र यनारदः मृदुध्रुवक्षिप्रभेषु पित्र्यवायुवसूडुषु समूलभेषु बीजोप्ति
रत्युत्कृष्टफलप्रदा रवौ रौद्राद्य पादस्थे भूमौ सजायते रजः तस्मात्त्रिदिनपर्यंतं बीजवापं परित्यजेदिति राजमार्त्तण्डे आर्द्राप्रथमदिनत्रयनिषेधः अथ बी
जोप्तौ फणिचक्रं अशुभतो न विद्यते गावो यस्येति अगुः राहुः तस्य भतदाक्रांतनक्षत्रं तस्मादादौ अष्टौ भानि असंति असमीचीनानि नतस्त्रीणि शुभ

ततएकमशुभं ततस्त्रीणिशुभानि ततश्चत्वार्यशुभानि एवंबीजोप्तेः सप्तविंशतिनक्षत्राणांशुभाशुभत्वमुक्तं रत्नमालायां मूर्ध्नित्रीणिगले
त्रयंचजठरेधिष्ण्यानि चहादशेत्यादि लग्नशुद्धिमाह वसिष्ठः भवंत्रिषु सहजेपापेस्त्रिकोणकेंद्रे स्थितैश्शुभैः कथितेशुभधिष्ण्येपिचशुभलग्नेनवी
जवापनंकार्यं अथहलचक्रमुच्यते हलेइतिहलचक्रेअर्काक्रांताद्भात्नक्षत्रात्क्रमेणत्रीणिअसंति अशुभानि ततोष्टभानि संतिशुभानि
ततोनवभानिअसंति ततोष्टौभानिसंति यथा सूर्यआर्द्रायांभुक्तभंमृगः ततआरभ्यत्रीणिअशुभानिततः पुष्यतोष्टभानिशुभानि ततोविशाखा
तोमवभान्यशुभानि ततः शततारकातोऽष्टभानिशुभानि एवमष्टाविंशतिभानिजातानि तथावसिष्ठः अर्कगताद्गतसंस्थैभत्रितयंतेअष्टसुभ॰
यतस्त्रिवेषोडशधिष्ण्यंयनवकंधिष्ण्यमनिष्टंचलांगलेचक्रे कश्यपोपित्रिषष्टसुनवर्क्षेषुसप्तस्वर्क्षविमुक्तभात् हानिर्वृद्धिः कर्तृनाशोलक्ष्मी
प्राप्तिर्यथाक्रमादिति एवंबहुमुनिसंवादेसंतिद्बनमोक्तिमतसीत् त्रिवन्हित्रीषुत्रीषुत्रिरामा ३।३।३।५।३।५।३।३ण्यशुभदशुभानिक्रमात्सांगला

रामेंदुम्निपुगान्यसच्छुभकराण्युप्तोहलेर्कोज्झिताद्भात्रामाष्टनवाष्टभानिमुनिभिःप्रोक्तान्यसत्संतिच २९ ॥

रव्येरितियदुक्तंगणेशदैवज्ञैर्मुहूर्ततत्वेतच्चिंत्यंऋषिवाक्यमूलाभावात् ननुश्रीपतिवाक्यं अर्कक्रांतगतान्यूनडुहानाशायमान्ययुतोवृद्ध्यैभत्रितयं
ततस्तुकृषिकृद्घातायशूलत्रय धिष्ण्यानांनवकंतदंतरगतेस्याताश्रियेपंच केपञ्चान्यत्रितयंतत्स्वगरितचक्रेशुभंलांगलेइतिमूलंचेत् नत्व
पश्चायतिवाक्येशब्दार्थः किंतुमूलवाक्यबोधिनस्वाज्ञानप्रकाशकः वाक्यार्थस्तु अर्कक्रांतगतानि त्रीणिभानिवृषनाशकराणिस्युः ततस्त्रीणिवृद्धे
ततःपंचनक्षत्राण्यपास्य अग्निभाणिनवभानिशूलत्रयेत्रिकंत्रिकंकृषिकृद्घातायस्याप्यानि नन्वत्रपंचनक्षत्रत्यागेकोहेतुरित्यत आह तदंतरग॰
तेपंचकइति तच्छब्देनहलोर्धदंडाशूलार्धदंडानुच्यते अर्कक्रांतगतागतान्यनडुहानाशायमान्ययुतोवृद्ध्यैभत्रितयंअयमंतरस्यपूर्वावधिः मध्येत
ततःपरोपादानात्तुशब्दस्तु आनंतर्यद्योतनार्थःतु अनंतरंशूलत्रये धिष्ण्यानांनवकंकृषिकृद्घातायेति अंतरस्योत्तरावधिः तयोरंतरगतेमध्ये वि
द्यमानाधिष्ण्यानांपंचकंचपंचकंचश्रियेस्यात्पेन नक्षत्रद्वयत्त्यागमेतिमवत् यच्चान्यत्त्रितयंहलस्यांत्यभागे [illegible] एवं [illegible]

अथ शिरामोचन विरेचनादि मुहूर्त्तं शार्दूलविक्रीडितेनाह त्वाष्ट्रादिति त्वाष्ट्रद्वये चित्रास्वात्योः मित्रभाद्वये अनुराधाज्येष्ठे कभाद्वये रोहिणीमृ
गौ श्रोत्रश्रवणः चित्रादिषु एकादशसु नक्षत्रेषु भौमार्कगुरुवारे शिरामोक्षणं रुधिरविहिनी नाडिका शिरा तस्याः सूक्ष्मशस्त्रघातेन नरश्चितो
रक्तमोक्षणं कुर्यात् अथ बुधार्कौ विना बुधरविवारौ त्यक्त्वान्यवारेषु पूर्वोक्तनक्षत्रेषु च विरेकवमनाद्यं औषधेन [illegible] विरेकः वमनं वांत
एतदाद्यं कुर्यात् मित्रक्षिप्रचरध्रुवेषु नक्षत्रेषु रविवारे शुभग्रहवारे च विदोर्बुधस्य लग्नवर्गे जीवस्यापि लग्नवर्गे यस्मिन्कस्मिंश्चिल्लग्ने पि त
रुबुधयोः षड्वर्गे सति तस्मिंल्लग्ने गुरौ च सति कर्त्तुर्गुरुबले च सति धर्मक्रिया कोटिहोमरुद्राधिष्ठानादिरूपा नुगदिता कथिता ३० अथ धान्यच्छेदन

त्वाष्ट्राग्निमित्रकभाद्वये बुपलघुश्रोत्रे शिरामोक्षणं भौमार्केज्यदिने विरेकवमनाद्यं स्याद्बुधार्कौ विना। मित्रक्षिप्रचरध्रुवे
रविशुभाहे लग्नवर्गे विदोर्जीवस्यापि तन्वां गुरौ निगदिता धर्मक्रिया तद्बले ३० तीक्ष्णाजपा वसुवन्हि घस्रश्रुतीं दुस्वाती।
मघोत्तरजलांतकृत क्षपुष्ये मंदारिक्तरहिते दिवसेतिशस्ता धान्यच्छिदा निगदिता स्थिरभे विलग्ने ३१ भान्यर्यमश्रुतिम
घेंद्रविधातृमूलमैत्रान्त्यभेषु कथितं कणमर्दनं स्यात् तीक्ष्णाजपान्निर्ऋतिधातृशतार्यमर्क्षे सस्यरोपणमिहार्किकुजौ विना
सत् ३२ मिश्रोग्रपुरोद्रभुजगेंद्रविभिन्नभेषुककोजतौलिरहितं च तनौ शुभाहे॥ ((गं वसंततिलकेनाह तीक्ष्णाजपादिति एतेषु नक्षत्रेषु विश

तिनक्षत्रेषु तथा भौमशनिरिक्तावर्जितदिने स्थिरलग्ने सति धान्यादीनां यवादीनां छिदा छेदनं निगदिता [illegible] ३१ अथ कणमर्दनं सस्यरोपणं च।
वसंततिलकेनाह भान्यर्यमेति विधिः रोहिणी अंत्यं रेवती एषु नवभेषु कणानां चणकादीनां मर्दनं पशुघातादिना [illegible] रीकरणं तत्समीचीनं स्यात् अथ विशा
खादिषड्नक्षत्रैः आर्किकुजौ विना शनिभौमवारेषु सस्यस्य धान्यस्य रोपणं सत् शुभम् ३२ अथ धान्यस्थितिधान्यवृद्धिं च वसंततिलकेनाह मिश्रोग्रे
ति मिश्रोग्रादि विभिन्नेषु मिश्राश्विदशनक्षत्रेभ्योन्येषु नक्षत्रेषु तथा कर्कमेषतुलारहिते लग्ने मकरस्थिरद्विस्वभावलग्ने शुभाहे चंद्रबुधगुरुशु-

कवारे धान्यानां स्थितिः एकत्र स्थले स्थापनं साशुभकरी निगदिता अथ ध्रुवेज्यादि त्रयोदशनक्षत्रेषु धान्यवृद्धिः ॥ मत्यमेतावद्धान्यं देहि इति तेभ्यो
सहूयानंतरं सपादं सार्धं वा दास्यामीत्येवं रूपा वृद्धिर्निगदिता ३३ अथ शांतिकपौष्टिकादिकं वसंततिलकेनाह क्षिप्रेति क्षिप्रादिनक्षत्रेषु पौष्टि
कमंगलाभ्यां सह पौष्टिककर्मणा ग्रहशांत्या मंगलकर्मणा विना विनायकशांत्या सह शांतिकं दुष्टफलदं मूलादिनक्षत्रोत्पन्नशांत्यादि शुभं स्यात् ल
ग्नात् रवेः दशमे अर्के सति विधौ चंद्रे तु स्वगते चतुर्थे गुरौ लग्नस्थे सति ततः शांतिकं मौढ्यादि दुष्टसमये गुरुशुक्रास्तादि दुष्टकाले नो शुभदं तथा निमित्त
केतूद्युत्पातदर्शने सति गुरुशुक्रास्तादावपि शुभं स्यात् उक्तं च शांतिककर्माणि कुर्वीत रोगे नैमित्तिके तथा गुरु भार्गवमौढ्येऽपि दोषस्तत्र न विद्यते ३४
अथ होमाहुतिशुद्धिमनुष्टुभाह सूर्यभादिति सूर्याक्रांतनक्षत्रात् त्रित्रिभेन नक्षत्रत्रयमध्ये चंद्रे चंद्रनक्षत्रे दिननक्षत्रे सति क्रमात् सूर्यादिक्रूरखे होमा

**धान्यस्थितिः शुभकरी गदिता ध्रुवेज्यहीशेंदुदस्त्रचरभेषु च धान्यवृद्धिः ३३ क्षिप्रध्रुवांत्यचरमैत्रमघास्तु शस्तं स्याच्छांतिकं ।**
**सह च मंगलपौष्टिकाभ्यां खेऽर्के विधौ स्वगते तनुगते गुरौ नो मौढ्यादिदुष्टसमयेऽशुभदं निमित्ते ३४ सूर्यभात्त्रित्रिभे चंद्रे ।**
**सूर्यविच्छुक्रपंगवः चंद्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले ३५ सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवा**
**सः ॥**

हुतिः पतति यथा सूर्याक्रांतनक्षत्रात् नक्षत्रत्रयमध्ये होमारंभे सूर्यमुखे होमाहुतिपातः ततो नक्षत्रत्रयेषु बुधस्य ततः शुक्रस्य ततः पंगोः शनेः ततः
श्चंद्रस्य ततः आरस्य भौमस्य तत इज्यस्य गुरोः ततः राहोः ततः शिखिनः केतोः एवं सति यद्दिने खले पापग्रहस्य मुखे होमाहुतिः पतति सा नेष्टा न शुभदा अर्थात् शु
भग्रहमुखे शुभा सूर्यनक्षत्राच्चंद्रनक्षत्रपर्यंतगणना ३५ अथ यद्दिने होमस्तद्दिने वह्निनिवासवशेन शुभाशुभफलमिंद्रवज्रयाह सैकेति शुक्लादि
गणनया वर्तमानतिथिर्गण्या एकयुता वर्तमानवारयुता चतुर्भक्ताय च्छेषं तच्चेत् गुणमितं त्रिमितं शून्यमितं च तदा भुवि भूमौ वह्निवासो वसतिः फलमाह सौख्या
य होमे होमदिने भूमावग्नेर्वासे सति सौख्यं भवति अथ शशियुग्मशेषे एकमिते शेषेऽग्निवासो दिवि स्वर्गे फलं कर्तुः प्राणनाशः द्विमिते शेषेऽग्निवासो भूतले ॥

तत्फलं कर्तुरर्थनाशः उक्तंच तिथिवारयुतिः सैकावेदभक्तावशेषकात् निवासो निर्व्योम्निरूपे वित्तप्राणविनाशदः पाताले हि कशेषेण धनसंच यनाशनः गुणवेदावशेषेण भूमौ विपुलसौख्यदः संस्कारेषु विचारोऽस्य न कार्यो नापि वैष्णवे नित्ये नैमित्तिके कार्ये न चाब्दे मुनिभिः स्मृतः कैश्चित्तु टस्कृतमपि होमे वर्ज्यमित्युक्तम् तद्यथा अर्कश्चंद्राद्दशमे ज्ञश्चतुर्थे मंदः शुक्राद्दष्टमे गारकश्च राहुर्धर्मे जीवतः खेटरूः षष्ठे होमे नाशः पुनर्दशाधनानामिति ३६ अथ प्रतिवर्षोत्पन्ननवान्नभक्षणमनुष्टुभाह नवान्नमिति वणादिद्वादशभेषु सत्तनौ समीचीनलग्ने शुभग्रहैर्युते दृष्टे चेत्यर्थः नंदातिथयः १।६।११ विष घटी विवाहप्रकरणोक्ताः मधुश्चैत्रः पौषः अर्किः शनिः भूमिजो भौमः एतान्विनावर्जयित्वा नवान्नभक्षणं शुभं ३७ अथ नौकाघटनमनुष्टुभाह याम्यत्रये

सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशो दिवि भूतले च ३६ नवान्नं स्याच्चरक्षिप्रमृदुभे सत्तनौ शुभं विनानंदा विषघटी मधुपौषार्कि भूमिजान् ३७ याम्यत्रयविशाखेंद्रसार्पपित्र्येशभिन्नभे भृग्वीज्यार्कदिने नौकाघटनं सत्तनौ शुभं ३८ मूलार्द्राभरणीपित्र्य मृगे सौम्ये घटे तनौ रूखे शक्रे ष्टमे शुद्धे सिद्धिर्वीराभिचारयोः ३९ व्यन्त्यादितिध्रुवमघानिलसार्पधिष्ण्ये रिक्ते तिथौ चरतनौ वि कवीन्दुवारे॥ ४० ॥ इति याम्यत्रयं भरणीरूपिनकारोहिण्यः ईश आर्द्रा अन्यानि प्रसिद्धानि एभ्यो भिन्ननक्षत्रेषु शुक्रगुरुवारे सत्तनौ शुभपु नदृष्टे लग्ने नौकाघटनं नौकानिर्माणं शुभं नौकाचालनं नौकागमनमुहूर्तौ रीपिकायां शुभाहे विष्णुर्युग्मेदुभमघैमेत्राश्विपाणिषु चालनं घटनस्यानान्नाव:। शुभतिथौ दुषु अश्विकरेज्यस धानिधिपूर्वा मित्रधनाच्युतभेषु भलग्ने तारकयोगतिथौ दुविशुद्धौ नौगमनं शुभदं शुभवारे ३८ अथ वीरसाधनाभिचारयो मुहूर्तमनुष्टुभाह मूलेति मूलादिनक्षत्रपंचके तथा घटे तनौ कुंभलग्ने सौम्ये बुधे सति तथा शक्रे रूखे चतुर्थे अष्टमे शुद्धे ग्रहरहिते नाष्टमे लग्ने वीरसाध नस्य अभिचारस्य कर्मणः सिद्धिः निष्पत्तिः ३९ अथ रोगनिर्मुक्तस्नानं वसंततिलकेनाह व्यंत्येति विगवान्त्यत्यादी निरेवत्यादीनि नवधिष्ण्यानि येभ्य स्तेषु दशशिरनक्षत्रेषु तथा रिक्तासंज्ञासु तिथिषु चरलग्ने तथा शुक्रचंद्रवर्जितवारे॥ ४० ॥ ४ ॥ ६ ॥ श्रीरस्तु ॥

तथा विधौ चंद्रे हीने निषिद्धस्थानस्थे निषिद्धस्थानानि गोचरप्रकरणोक्तानि पापग्रहे भवे एकादशे केंद्रे १।४।७।१० कोणे नवपंचमे स्थाने स्थितैः सद्भिः एवंविधे लग्ने रुजाविरहितस्य रोगनिर्मुक्तस्य जनस्य स्नानं आरोग्यस्नानं शस्तं शुभं नारदः स्थिरेज्यादितिसर्पांत्यपितृवारुणभेषु च नकुर्याद्रोगमुक्तस्य स्नानं वारे ज्ञशुक्रयोरिति ४० अथ शिल्पविद्यामनुष्टुभाह मृदुध्रुवेति मृदुध्रुवादिनक्षत्रे ज्ञे बुधे दशमे लग्ने वा सति अथवा गुरौ दशमे लग्ने वा सति तथा विधौ चंद्रे बुधगुरुषड्वर्गस्थे च सति शिल्पविद्या नानावर्णादिनिर्मितमूर्त्यादिकं तद्विषयाः प्रारंभः शस्यते ४१ अथ संधानमनुष्टुभाह क्रूरेज्येति पुष्यादिनक्षत्रेषु तथाष्टम्यां तिथौ हरौ द्वादश्यां च तिथौ तैतिलकरणे च तथा शुक्रदृष्टे युते वा लग्ने तथा क्रूरग्रहाणां वारे संधानं संधिर्मैत्री तियावत् इष्यते तथा च कश्यपः भाग्यपुष्येसमैत्रे च लग्ने शुक्रेक्षिते युते करणे तैतिले ष्टम्यां द्वादश्यां संधिरिष्यते ४२ अथ परीक्षामुहूर्त्तं वसंततिलकया

**स्नानं रुजाविरहितस्य जनस्य शस्तं हीने विधौ खलखगे भवकेंद्रकोणे ४० मृदुध्रुवक्षिप्रचरे ज्ञे गुरौ वा खलग्नगे विधौ ज्ञजीववर्गस्थे शिल्पविद्या प्रशस्यते ४१ क्रूरेज्यमित्रवसुभेषु वाष्टम्यां तैतिले हरौ शुक्रदृष्टतनौ सौम्यवारे संधानमिष्यते ४२॥**

**स्वक्षाष्टनभूत १४ शनिविष्टिकुजान् जनुर्भमासौ मृतौ न रविविधू अपि भानि नाड्याः॥**

स्वक्षेति भूतश्चतुर्दशी जनुर्भं मासो जन्मर्क्षं जन्ममासश्च जन्मराशेरष्टमं सूर्यं चंद्रं च नाड्याः भानि जन्मभं कर्मभं आदिनक्षत्राणि नाडीनक्षत्राणि एतानि त्यक्त्वा द्युगेहे स्वभावे च लग्ने चरलग्ने वा तन्नवांशे च चंद्रशुद्धौ ताराशुद्धौ गुरुशुद्धौ च सत्यां करोहस्तः अदितिः पुनर्वसुः हरिः श्रवणः इंद्रो ज्येष्ठा कं जलं तत्स्वामी वरुणः तस्य नक्षत्रं शततारका एषु भेषु परीक्षा कार्या अन्यत्स्पष्टं परीक्षानाम सुवर्णस्तेयादिपातकाभिशस्तस्य शुद्ध्यशुद्धिविचारपूर्वकं सप्तमाषादिरूपा दिव्यमितियावत् उक्तं चदीपिकायाम् नोशुक्रास्तेऽष्टमार्कं गुरुसहितरवौ जन्ममासेऽष्टमेंदौ विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ नाडीनक्षत्रहीने क्रूरगुरुरजनीनाथताराविशुद्धौ प्रातः कार्या परीक्षा हितनुचरगृहांशोदये शस्तलग्ने इति व्यवहारोच्चये अष्टम्यां च चतुर्दश्यां नाद्यायश्चित्तपरीक्षणे॥ छ ॥ ॥ छ ॥ ॥

नपरीक्षाधिवासश्चशनिभौमदिने भवेत् ज्येष्ठाश्रवणहस्तश्च शनिभौमदिने भवेत् ज्येष्ठाश्रवणहस्तश्च तथाग्नेयः पुनर्वसुः तद्वच्छतभिषाप्रोक्ता ह्यभियुक्त विच
रणे इति नाडीनक्षत्राणि दीपिकाकारवचनात् जन्मर्क्षमाद्यं दशमं च कर्मसंघातिकं षोडशभं च मानसं त्वात्पंचविंशं समुदायमष्टादशं च योविंशति भं विनाशकं एवं षड्
भोजनः सर्वो जातिदेशाभिषेकभैः नवभिर्नृपतिर्ज्ञेयो नाडीताराख्या अत्र इति नृजातिनक्षत्राणि वसिष्ठसंहितायां पूर्वात्रयं सानलमग्रजानां राज्ञां च पुष्येण सहो
त्तराश्च सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानां आदित्यहस्ताभिजिदश्विनानि वणिग्जनस्वाम्यमुपागतानि मूलत्रिनेत्रानिलवारुणानि भान्युग्रजा
तेः प्रभविष्णुतायाः सौम्येंद्रचित्रावसुदैवतानि सेवाजनस्वाम्यमुपागतानि सार्पं विशाखा श्रवणे भरण्यश्चांडालजातेरभिनिर्दिशंतीति देशो वाराणस्यादिकस्तन्न
क्षत्रं शतपदचक्रम् यथा वाराणस्याः नक्षत्रं रोहिणीति अभिषेकभं यस्मिन्नुष्णादिके नक्षत्रेण राजाभिषेको जातस्तदभिषेकर्क्षमिति राज्ञां नव भा

द्यंगे चरे तनुलवे शशिजीवताराशुद्धौ क्रूरादिति हरींद्रकपे परीक्षा ४३ व्ययाष्टशुद्धोपचये लग्नगे शुभदृग्युते चंद्रे त्रिषड्दशा
यस्थे सर्वारंभः प्रसिध्यति ४४ स्वातीन्द्रपूर्वाशिवसार्पभेषु तिर्ज्वरे न्त्यमैत्रे स्थिरता भवेद्रुजः याम्यश्रवो वारुणतक्षभे शिवाः १
घस्रा हि पक्षो १५ द्व्यधिपार्कवासवे ॥ ४५ ॥ ७ निरुत्तरे पार्थेषु वमानि ४३ अथ सामान्यतः शुभकार्येषु लग्नशुद्धिमनुष्टुभाह व्ययेति व्यया
द्वादशं अष्टमं एतत्स्थानद्वयं शुद्धं ग्रहरहितं यस्मिन् एवं कारके स्वजन्मराशेर्जन्मलग्नाद्वा उपचयभवने त्रिषडेकादशदशमराशौ लग्नमुते शुभैर्दृष्टे युते
च तथा चंद्रे त्रिषड्दशायस्थे सति सर्वेषां शुभकार्याणामारंभः सिद्ध्यतितथा च वसिष्ठः उपचयभे लग्नगते व्ययनैधनशुद्धिसंयुते लग्ने उपचयगे शीत
करे मंगलकर्माणि कार्याणि इति ४४ अथ नक्षत्रेषु ज्वरोत्पत्तौ सत्यां तन्निवृत्तौ दिनसंख्या द्वितीयया पूजातिकयोपेंद्रवज्रयाचाह स्वातीद्रेति मूलाग्नी ति
स्वातीज्येष्ठापूर्वात्रयार्द्राश्लेषासु ज्वरे ज्वरोत्पत्तौ सत्यां मृतिर्मरणं स्यात् अंत्यायमैत्रे रेवत्यनुराधयोर्ज्वरोत्पत्तौ रुजो रोगस्य स्थिरता बहुकालेन रोगनिवृत्तिः
[illegible] श्रवणशततारा: तक्षभं चित्रा एतेषु नक्षत्रेषु शिवाघस्रा: एकादशदिवसाः रोगः द्व्यधिपविशाखा अर्को हस्तः वासवं धनिष्ठा एषु त्रिषु भेषु पं

मूलं अग्निः कृत्तिका दास्त्रमश्विनी एतेषु नव दिवसा रोगः पित्र्यभे मघायां नखाः विंशतिर्दिवसाः बुध्न्यभं उत्तराभाद्रपदा अर्यमा उत्तराफाल्गुनी पुष्य
पुनर्वसुकरोहिणीनगाः सप्त दिवसा रोगः अब्जवैश्वमृगान्तराषाढयोः मासस्त्रिंशद्दिना निरोगस्थैर्यं ततो रोगनिवृत्तिः अत्र शांतिर्वसिष्ठोक्ता अकसेशरूपंक
नकेन कृत्वा तल्लिंगमंत्रैश्च स्रग्गंधपुष्पैः वस्त्रास्तैर्गुग्गुलधूपदीपनैवेद्यतांबूलफलैश्च सम्यक् पूजां च कृत्वा भयनाशनाय द्विजाय दद्यात्तुलं शिवाय।
आमयो रोगः अतुलमपरिमितद्रव्य अथानंतरं यमाहि मूलभे भरण्यां श्लेषा मूले च कृत्तिका विशाखा आर्द्रा मघास्र च सप्तनक्षत्रेषु यस्य कस्यचित् फणिदंशने
दर्पदंशनेन नृतिर्भवेत् अत्र सर्पदंश यस्य एतेषु गोचरवशेन चंद्रबलेन भवति तस्यैव सर्पदंशेन चंद्रबलेन भवति तस्यैक सर्पदंशेन चंद्रबलेन भवति तस्यैव सर्प
दंशेन यद्यत्र चंद्रस्तस्यैव गोचरे वाष्टमभवः तदान्नूनं भवेन्मृत्युः स्फधासक्तदेहिन इति ४६ अथ शीघ्ररोगीमरणे विशिष्टयोगं द्वितीयोपजातिकयाह रौद्रार्द्रति

मूलाग्निदास्त्रेन नवपित्र्यभे नखा २० बुध्न्यार्यमेज्यादितिधातृभे नगाः ७॥ मासोब्जवैश्वे थ यमाहि मूलभे मिश्रे शपित्र्ये फणिदंशनेमृ
तिः ४६ रौद्राहिशाक्राम्बुपयाम्यपूर्वाद्विदैववस्वग्निषु पापवारे रिक्ताहरिस्कंददिने च रोगे शीघ्रं भवेद्रोगिजनस्य मृत्युः ४७ क्षिप्रा
हि मूलेंदुहरीशवायुभे प्रेतक्रिया स्यात् ध्रुवपंचकं भगे विधौ॥ ४८ रौद्रादिनक्षत्रेषु पापवारे सति रिक्ताः प्रसिद्धाः हरिर्द्वादशी स्कंददिनं षष्ठी एतास्

तिथिषु एवंविधे विशिष्टयोगे यस्य रोगोत्पत्तिर्भवति तस्य रोगिजनस्य शीघ्रं मृत्युर्भवेत् ४७ अथ प्रेतदाहमुहूर्त्ते प्रेतदाहादिनिषेधं चोपेंद्रवज्रयाह क्षि
प्रेति क्षिप्रादिनक्षत्रेषु प्रेतक्रिया प्रेतानां मृतानां प्रियउत्तमलोकप्राप्त्यर्थं श्राद्धादिक्रिया स्यात् यदि दाहसमये कारणवशान्नारब्धा अथ ध्रुवं कुंभगे वि
धौ मीनकुंभस्थितौ चंद्रे धनिष्ठोत्तरार्धादिपंचनक्षत्रे प्रेतस्य दाहो ज्वालनं संजेत् च पुनः यमदिग्गमनं दक्षिणदिशि गमनं यात्रा तथा शय्यायाः खट्वा
याः वितानं वयनं तथा गृहगोपनं गृहाच्छादनं आदिशब्देन तृणकाष्ठसंग्रहं त्यजेत् ब्रह्मपुराणे पंचके मरणमपि निषिद्धं कुंभमीनस्थिते चंद्रे मर
णं यस्य जायते न तस्योर्ध्वगतिर्दृष्टा संततेर्न शुभं भवेदिति तेन पंचके मृतस्य पंचके दाह॥ ॐ ॥ ॐ ॥ ॐ ॥ श्रीभगवत्यै नमः॥

प्रा प्तोस स्यांतस्पुत्तल विधिं कृत्वा दाहः कार्यः पश्चाद् शौचं निवृत्यनंतरं शांतिकं कार्यम् यदि पंचक भवने : प्रागेवमृतः प्रतिबंधवशात्संजके दाह प्राप्ते पुत्तल विधिमकृत्वा दाहः कार्यः अशौचं निवृत्यनंतरं शांतिनेकार्या एवं रेवत्यंतमृतस्य रेवतीमपहाय दाहः कार्यः न पुत्तल विधिः अशौचं निवृत्य नंतरं शांति रेव कार्यः मरण निषेध सह निषेध प्रतिपादक वचनद्वयं सद्भावादिति ४८ अथ काष्ठानां गोमय पिंडानां च संग्रह मुहूर्त्तं शार्दूलविक्रीडितेना ह सूर्यस्यादे स्मेरिति स्पष्टार्थ ४९ अथ त्रिपुष्कर योगं सफलं वसंततिलकयाह भद्रा तिथिरिति भद्रासंज्ञक तिथिर्द्वितीया सप्तमी द्वादशी शनि भौमसूर्य वारे भवति तथा द्वीशं विशाखा अर्यमोत्तराफाल्गुनी अजचरणः पूर्वाभाद्रपदा अदितिः पुनर्वसुः वह्निः कृत्तिका वैश्वमुत्तराषाढा एषु नक्षत्रेषु उक्त ति थि वार नक्षत्र रूपे विशिष्ट योगे सति त्रिपुष्करः त्रिपुष्कर एव त्रैपुष्करः स्वार्थेण त्रिपुष्कर संज्ञक योगे भवति कीदृशः मृत्यु विनाश वृद्धौ त्रैगुण्यदः।

प्रेतस्य दाहं यमदिग्गमं त्यजेच्छाया वितानं गृहगोपनादि च ४८ सूर्यस्योर्द्रे सभेरधस्थलगतैः पाकोरसैः संयुतः शीर्षेयु ग्मभितैः शवस्य दहनं मध्यं युगैः सार्यभीः प्रानाशादिषु वेदभैः स्वस्थः त्वहास्यात्संगमोरोगभीः कांथादेः करणं सुखं च गा दितं काष्ठादि संस्थापने ४९ भद्रा तिथी रविजभूतनयार्कवारे द्वीशार्यमाजचरणादितिवह्निविश्वे ॥ ५ ॥ ६ ॥

तद्दिने यदि कश्चिन्म्रियेत तदा पादास्तपो म्रियेरन् यदि किंचिद्वस्तु विनष्टं तदा तस्य तद्वस्तु त्रय नाशः तथा किंचिद्वस्तु लब्धं तदा त्रिगुणस्तद्वस्तु लाभः वसिष्ठः। रवि रविज भौमवारे भद्रायां विषमपादभं चेत् त्रैपुष्कराख्य योगस्त्रिगुण फलो युगुलभे द्विगुणम् यदा नियन्नक्षत्रस्यैव चरणः पूर्वराशौ चरणत्रयमपरराशौ भवति तानि विषमचरणानि द्वीशार्यमेत्यादीनि अथ वंस धनिष्ठा नक्षत्रं चित्रा चार्द्र मृगः एतानि भानि भद्रा तिथयः रवि शनि भौमवारेश्च अत्रापि वि शिष्ट योगे द्विपुष्कर नाम योगे भवति तत्फलम् मृत्यु विनाश वृद्धौ द्वैगुण्य कृद्भवति तत्र शांतिमाह नारदः दुष्टान्त दोष नाशाय गोमयं मूल्यमेव वा द्विपुष्करे द्वयं दद्यात्तद्दोषस्तु सम त्रत रति अथ त्रिपुष्करे कश्यपे नरे वेस्यानेवहस्पतिवारे प्युक्तः॥ छ ॥ शिवः ॥ रामः ॥

भद्रातिथिः शनीज्यारवारे चेद्द्विषमांघ्रिभं त्रिपुष्करं त्रिगुणदं द्विगुणं द्व्यंघ्रिभमृताह इति इदमेव दृष्ट्वा श्रीपतिनाप्युक्तं विषमचरणधिष्ण्यादित्यादि अत्र कश्यपवाक्ये मृतावेव त्रिगुणफलतोक्ता ग्रंथकृतानु श्रीपतिवाक्यानुरोधान्मृत्यविनाशवृद्ध्यादिष्वप्युक्तं ५० अथ शवप्रतिकृतिदाहे निषिद्धकालं शार्दूलविक्रीडितेनाह शक्रारेति एवंविधे दिने शवस्य प्रतिकृतिः पर्णशरादिना सावयवत्वकल्पनं तस्य दाहो न कार्यः कुतः द्विविधो हि प्रेतसंस्कारः प्रत्यक्षशरीरस्यैकः तत्प्रतिकृतेरन्यः तत्र प्रत्यक्षशरीरसंस्कारे दिनविचाराभावः गार्ग्यः प्रत्यक्षशरीरसंस्कारे दिनं नैव विशोधयेत् इति प्रतिकृतिसंस्कारे कालत्रयं अशौचमध्ये वर्षमध्ये वर्षानंतरं चेति अशौचमध्ये क्रियते पुनः संस्कारकर्म चेत् शोधनीयं दिनं तत्र यथासंभवमेव तु अशौचविनिवृत्तौ चेत्पुनः संस्क्रियते मृतः संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदीति गार्ग्यवचनाद्दिनशुद्धिरुच्यते शक्रारा

त्रैपुष्करो भवति मृत्युविनाशवृद्धौ त्रैगुण्यदो द्विगुणकृद्द्व्यकृतस्तु चांद्रे ५० शक्रारार्किषु दर्शभूतमदने नंदासु तीक्ष्णोग्रभे पौष्णे वारुणभे त्रिपुष्करदिने न्यूनाधिमासेऽयने याम्येऽब्दात्परतश्च पातपरिघे दैवज्ञशक्रास्तके भद्रावैधृतयोः शवप्रतिकृतेर्दाहो न पक्षे सिते ५१

किं दिने शक्र भौम शनिवारे शवप्रतिकृतेर्दाहो न कार्य इति प्रत्येकं संबंधः दर्शोऽमावास्या भूतश्चतुर्दशी मदनस्त्रयोदशी नंदाः प्रतिपत्षष्ठ्येकादश्यः आसु तिथिषु तथा तीक्ष्णोग्रभे मूलार्द्राज्येष्ठाश्लेषास्तीक्ष्णानि पूर्वात्रयमघाभरण्युग्राणि पौष्णं रेवती वरुणं शततारा पूर्वोक्ते त्रिपुष्करदिने न्यूनाधिमासे क्षयमासे अधिकमासे अयने याम्ये अब्दात्परतः अब्दमध्ये याम्यायनेऽपि कार्यः नंदामदनभूतामापातं वैधृतिविष्टिषु शक्रार्किभौमपरिघध्रुवमिश्रोग्रमैत्रभैः कर्तुश्चंद्रे च वैरासे जन्मप्रत्यरितारिके त्रिपादृभे सितपक्षेऽयने याम्ये च अब्दतः परम् शवप्रतिकृतेर्दाहः शक्रेज्यास्ताधिमासके नेष्टो मध्यो द्विषान्मेत्रद्वीशादिति भगध्रुवे इति निबंधोक्तेः दिनक्षयोऽपि वर्ज्यः वर्जयेत्तु दिनक्षयमिति गार्ग्योक्तेः पातपरिघपातो व्यतीपातो महापातश्च परिघश्च एतेषु दाहो न कार्यः दैवज्ञशक्रास्तके दाहो न कार्यः भद्रायां वैधृतौ च तथा सिते शुक्लपक्षे इति ५१ ॥८८

अथतेनैवलं दसावर्ज्यैत्तराण्याह जन्मप्रत्यरितारयोरिति कर्त्तुः जन्मप्रत्यरितारयोः जन्मताराउत्पत्तिनक्षत्रं दशमैकोनविंशं चेति प्रत्यरि
ताराजन्मभात्पंचमचतुर्दशत्रयोविंशनक्षत्रे तथाकर्त्तुर्मृतिसुखं वा सेव्ये अष्टमचतुर्थद्वादशस्थेचंद्रे सतिदाहोनसत्नप्रशस्तः अथमध्यमनक्ष
त्राणि मैत्रमनुराधा भगः पूर्वाफाल्गुनी अदितिः पुनर्वसुः ध्रुवाणि रोहिण्युत्तरात्रयं विशाखा द्यं घिभं मृगचित्राधनिष्ठाः ज्ञेबुधेपि शवदाहोमध्यमः
अथोत्तमानि अर्केज्याभ्यांसहितो विधुः अर्केगुरुचंद्रवारे तथा श्रवणहस्तस्वाती अश्विनीपुष्येषुपंचनक्षत्रेषु शवप्रतिकृतेर्दाहः श्रेष्ठः इदमखि
लमाशौचात्परतः अनंतरं मध्येतुयथासंभवं किंचिदुणांगीकारेणविचार्यं ५२ अथमूलनक्षत्रजातस्य विशेषमुपजातिकयाह अभुक्तमिति ना
रदः अभुक्तमूललक्षणं ज्येष्ठांत्यमूलादिभवघटीचतुष्टयंजगौ ज्येष्ठांत्यघटीचतुष्टयंमूलादिघटीचतुष्टयंचेत्यर्थः नारदः येज्येष्ठामूलयोरंतरालप्र

जन्मप्रत्यरितारयोर्मृतिसुखं वा सेव्ये चकर्त्तुर्नेसन्मध्योमैत्रभगादितिध्रुवविशाखवाद्यंघ्रिभेज्ञेपिच श्रेष्ठोर्केज्यविधोर्दि
नेश्रुतिकरस्वात्यश्विपुष्येतथात्वाशौचात्परतोविचार्यमखिलंमध्येयथासंभवं ५२ अभुक्तमूलंहिघटीचतुष्टयंज्येष्ठांत्य
मूलादिभवं हिनारदः वसिष्ठएकद्विघटीमितंजगौबृहस्पतिस्त्वेकघटीप्रमाणकम् ५३॥

हस्तजः शिशुः अभुक्तमूलजः सा
र्पमघानक्षत्रयोरपि अयमेवमुख्यः पक्षः कश्यपादिबहुमुनिसंमतः तुकश्यपः ज्येष्ठांत्यमूलयोरंतरालपादोद्भवः शिशुः अभुक्तमूलजः सोथ
वाश्लेषापित्र्ययोरपि वसिष्ठोपिभुजंगपैत्र्यरपौष्णभानांतरप्रभानांचतराल अभुक्तमूलंप्रहरप्रमाणंत्यजेत्सुतंतत्रभवांसुतां चेति वसि
ष्ठएकद्विघटीमितंजगौ ज्येष्ठांतेएकघटिकामूलाद्यघटिकाद्वयमित्यर्थः इदंवसिष्ठेनकेचिन्मतेमुक्तम् येकस्तदाक्यके चित् अपरेइतिप्रोक्तेः त
दाक्यंच ज्येष्ठांत्यपादघटिकामित्तमेवकेचिन्मूलंत्वभुक्तमपरेपुनरामनंति मूलाद्यपादघटिकाद्वितयेनसार्द्धमशेषसमाः परिहरेदिहजन्मभाजइति।
बृहस्पतिस्तुएकघटीप्रमाणकंजगौ ज्येष्ठांत्यार्धघटिकामूलाद्यार्धघटिकेत्यर्थः गुरुः ज्येष्ठांत्यघटिकार्धंचमूलादौघटिकाद्वयं तयोरंतर्गतानाडीत्यभु

अथान्ये आचार्या उपजातिकयाहुः अथो त्वरन्य इति आचार्याः प्रोचुः मूलस्य प्रथमा अष्टघटिका शाक्रस्य ज्येष्ठायाः अंतिमाः पंचनाडिकाः एवमु-
भयोरंतराले त्रयोदश घटिका अभुक्तसंज्ञकाः प्रोचुः उक्तं च ज्येष्ठांत्याः घटिकाः पंच मूलाद्याश्चतस्रो नाडिकाः अभुक्तमिति तज्ज्ञेयं तत्र जातं शिशुं त्यजेदि-
ति तत्फलमाह तत्राभुक्तमूले जातं शिशुं बालं बालां वा पिता परित्यजेत् त्यागाशक्तौ वा पिता अस्य बालस्याष्टसमाः अष्टौ वर्षाणि मुखं न पश्येत् नारदः अ-
भुक्तमूलजं पुत्रं पुत्रीमपि परित्यजेत् अथवाब्दाष्टकं तातस्तन्मुखं न विलोकयेदिति अत्र घटीनां न्यूनाधिककथनं दोषस्याधिक्याल्पत्वकथनार्थं ज्ञेयं ५४
अथ मूलाश्लेषाजातस्य चरणवशेन फलमुपजातिकयाह आद्ये पितेति मूलप्रथमचरणे जातस्य बालस्य पिता नाशं प्राप्नोति द्वितीयचरणे जननी मा-
ता नाशं प्राप्नोति सापत्नमातरि मातृशब्दो गौणः तेन गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति जननीपदप्रयोगः तृतीयचरणे धनं नश्यति चतुर्थे चरणे बाल-

**अथो त्वरन्ये प्रथमाष्टघट्यो मूलस्य शाक्रांतिमपंचनाड्यः जातं शिशुं तत्र परित्यजेद्वा मुखं पितास्याष्टसमा**
**न पश्येत् ५४ आद्ये पिता नाशमुपैति मूलपादे द्वितीये जननी तृतीये॥ छ ॥**

स्यक्षयः अत्र विशेषो नारदेनोक्तः दिवा
जातस्तु पितरं रात्रौ तु जननीं तथा आत्मानं संध्ययोर्हंति नास्ति गंडो निरामयः वसिष्ठस्तु मूलाद्यपादे यदि रात्रिभागे तदात्मनो नास्ति पितुर्विनाशः द्वितीय-
पादे दिनगो यदि स्यान्न मातुरस्यापि तदास्ति दोषः अथानंतरं शान्त्यम् आश्लेषाशांत्यास्त्वनुष्ठितया सर्वत्र चरणचतुष्टयेपि क्षेमम् अनिष्टफलनाशकत्व-
स्याणं स्यात् शास्त्रोक्तरीत्या खलु सूतकान्ते मासे तृतीयेप्यथ वत्सरान्ते इति कालत्रयं वसिष्ठेनोक्तं गंडे तु विशेषः मातृगंडे सुतं जातं सूतकांते विचक्षणः कुर्याच्छां-
तिं तदोषवातदोषस्याप्यनुत्तये शिष्टास्तु सर्वत्रापि यत्र क्षत्रे जन्मनक्षत्रे एव शांतिरिति व्यवहरंति अथाह द्विभे विलोममिति आश्लेषायां मूलपादोक्तं फलं विलो-
मं विपरीतं ज्ञेयम् मूलस्य प्रथमपादे पितृनाश इत्युक्तं आश्लेषाचतुर्थपादे तत्स्यात् द्वितीयपादे मातृनाशः आश्लेषातृतीयचरणे मूले तृतीयचरणे धननाश उक्तः
आश्लेषाद्वितीयचरणे चतुर्थचरणे शुभम् ॥ ५५ ॥

तदाश्लेषाप्रथमचरणंज्ञेयम् अत्रबहुविचारोस्तिग्रन्थभूयस्त्वभयान्नलिख्यते अथकेश्चिन्मूलवृक्षादिविचारउक्तः जयार्णवेतमूलंस्तंभत्वं
चाशाखापत्रपुष्पंफलंशिखामुनयोष्टौदिशोरुद्राः सूर्याः पंचाब्धयोग्नयः मूलेतुमूलनाशःस्यात्स्तंभेवंशविनाशनं त्वचिमातुर्भवेत् क्लेशः
शाखायांमातुलस्यच पत्रेमन्त्र्यं विजानीयात् पुष्पेमंत्रिपदंस्मृतंफलेचविपुलालक्ष्मीः शिखायामल्पजीवितं अथमूलपुरुष योगेघटीन्यासस्तत्रैव।
मूलस्यघटिकान्यासोमूर्ध्निपंचनृपोभवेत् मुखेसप्तमृतिःपुत्रोः स्कन्धेवेदामहाबलः बाह्वोरष्टौबलीपाण्योस्त्रिसोहत्यान्वितोभवेत् हृदिरवेटाः भूपस्त्रं
त्रीनाभौद्वाब्रह्मविद्भवेत् गुह्येदशातिकामीस्याज्जानुनोःषण्महामतिः पादयोः षट्मृतिस्तस्येत्युक्तवानूक मलासनइति अथमूलोद्भूतंकन्या
याःफलार्थमूलांगविभागस्तत्रैव चतस्रोनाडिकाःशीर्षेकुर्वतिपशुनाशनं मुखेषट्ध निहानिः स्यात्कंठेपंचधनागमः कौटिल्यंतुहृदयेपंच
बाह्वोर्वित्तागमंततः वेदाः पाण्यार्दयोधर्मवेदागुह्येतिकामिनी ज्येष्ठमातुलनाशश्चजंघयोर्युगनाडिका ज्येष्ठभ्रातृविनाशश्चचतस्रोजानुयुग्।

धनंचतुर्थोस्यश्रुभोथशांत्यासर्वत्रसत्यादहिभेविलोमं ५५ स्वर्गेशुचिप्रोष्ठपदेषुमाघेभूमौनभःकार्तिकचैत्रपौषे॥ ६ ॥

ष्मके पादयोर्दशनाड्यश्चतत्रैवधव्यमादिशेत् इतिमूलपरस्तायामुनिभिःफलमीरितं अथाश्लेषाजातयोःपुत्रकन्ययोरंगविभागेनफलंतत्रैव॥
मूर्ध्निपंचवसुराज्याप्तिमुखेसप्तपितुःक्षयः नेत्रेद्वेजननीनाशः ग्रीवायांत्रिषुलंपटः स्कंधेवेदागुरोर्भक्तिः हस्तेष्टौचबलीभवेत् हृद्येकादशभिश्चा।
त्मघातीसजायतेनरः स्त्रीवानाभौभ्रमःषड्भिर्गुह्येनवतयोधमः पादेपंचधनंहंतिसार्पादितत्फलंक्रमात् अथाश्लेषावृक्षोपितत्रैवोक्तः फलंपुष्पंद
लंशाखात्वग्लताकंदएवच सार्पवत्स्यादशाशांकस्वरविश्वार्कसागराः नाडिकास्तद्भवेबालेफलंज्ञेयंयथाक्रमं श्रीःस्त्रीराजभयंहानिः मातृपित्रा
त्मसंक्षयइति अयंविभागोनक्षत्रस्यषष्टिघटिकात्मकोज्ञेयः न्यूनातिरिक्ते अनुपातः ५५ अथमूलनिवासस्सफलमिदवज्रपाह स्वर्गइति शुचिरा
षाढः प्रोष्ठपदोभाद्रपदः इषआश्विनःमाघःप्रसिद्धः एषुमासेषुमूलनक्षत्रेस्वर्गेस्ति श्रावणकार्त्तिकचैत्रपौषेषुभूमौतिष्ठति॥ ७ ॥ ६ ॥राम:

तपस्यः फाल्गुनः शुक्रो ज्येष्ठः फाल्गुनमार्गशीर्षवैशाखज्येष्ठेषु अधः पाताले मूलं तिष्ठति तत्फलं च यदा मूलनक्षत्रं यस्मिन्मासे यत्र भवति तत्रै
व स्वर्गमर्त्यपातालेषु एवं प्रोक्तं शुभाशुभफलं ददाति तेन द्व्याद्यभावे स्वर्गपातालस्थे मूले दोषाभावाच्छान्तेरनावश्यकत्वं ज्ञेयं यदा तु भूमावेव मू
लं तदा शान्तिरवश्यं विधेयेति शक्तेन उक्तं च ज्योतिषार्णवे भूमिष्ठे दोषबहुलं स्वल्पमन्यत्र संस्थितमिति ज्योतिर्निबन्धे मूलाश्विपित्र्यचरणप्रथमे
च नूनं पौष्णेन्द्रयोश्च फणिनश्चतुरीयपादे मातुः पितुः स्ववपुषोऽपि करोति नाशं जातो यदा निशि दिनेष्वथ संध्ययोर्वेति तत्रापि शान्त्या शुभं भवतीति ज्ञेयं
५६ अथ मूलप्रसंगाद्दुष्टेषु गंडान्तादिनिमित्तेषु जातस्यारिष्टपरिहारं च शार्दूलविक्रीडितेनाह गंडान्तेन्द्रभेति एतेषु शिशोः सुतस्मिन्निर्गमस्ताद्दुष्टफल
दा गंडान्तं तिथिनक्षत्रलग्नानां संधिः तल्लक्षणं ज्येष्ठापौष्णभेत्यादिनावक्ष्यति इन्द्रभं ज्येष्ठानक्षत्रम् शूलयोगः पातो महापातः परिघव्याघातगंडयो

मूलं त्वधस्तात्तु तपस्यमार्गवैशाखशुक्रेष्वशुभं च तत्र ५६ गंडान्तेन्द्रभशूलपातपरिघव्याघातगंडावमेसंक्रान्तिव्यतिपातवैधृति।
तिसिनीवालीकुहूदर्शके वज्रे कृष्णचतुर्दशीषु यमघंटे दग्धयोगे मृतौ विष्टौ सोदरभे जनिः पितृभे शस्ता शुभा शान्तितः ५७ ॥

गाः अवमस्तिथिक्षयः संक्रान्तिः सूर्यसंक्रमणपुण्यकालः व्यतीपातवैधृती योगौ सिनीवाली दृष्टेंदुरमावास्या कुहूर्नष्टेंदुरमावास्या सा दृष्टेंदुः सिनी
वाली सा नष्टेंदुकला कुहूरित्यभिधानात् दर्शश्चंद्रदर्शनरहितामावास्या एतद्दूरोऽग्रे प्रतिपादयिष्यते वज्रे वज्रयोगे कृष्णपक्षचतुर्दश्यां यमघंटे
मघाविशाखेत्युक्तं दग्धयोगे सूर्येशपंचाग्निरसाष्टनंदा इत्युक्तेः मृतौ ह्रीशनिभयादित्युक्तेर्मृत्युयोगे विष्टौ भद्रायां सोदरस्य भ्रातुर्भगिन्या वा नक्षत्रे
पित्रभे माता च पिता च पितरौ तयोर्भे मातृभे पितृभे च एषु निमित्तेषु सुतस्य सुतायां वा जन्म चेत्स्यात्तदानिष्टकृत्स्यादित्यर्थः दुष्टनिमित्तस्योपलक्षण
त्वात् त्रीतरजन्माप्यनिष्टम् सजातीयापत्यप्रसवानंतरं विजातीयापत्यप्रसवस्त्रीतरः यथा पुत्रत्रयप्रसवानंतरं कन्याजन्म कन्यात्रयप्रसवानंतरं पुंजन्म
सा जनिः शान्तितः वसिष्ठादिप्रोक्तशान्त्या स्वनुष्ठितया शुभा परिणामसुखदायिनीत्यर्थः ५७ ॥ ५७ ॥ ५७ ॥ श्रीमहाकालीमहालक्ष्मीमहास॰

अथशांतयोलिख्यंते तत्रप्रथमंमूलशांतिरुच्यंते शौनकउवाच अथातःसंप्रवक्ष्यामि मूलजातहितायच मातापित्रोर्धनस्यापिकुलेशांतिहितायच जात
स्यद्वादशेऽहनितुजन्मर्क्षेवाशुभेदिने समाष्टकेवामतिमान्कुर्याद्वाशांतिमादरात् वसिष्ठः सुसमेपुण्यदेशेतुमंडपकारयेद्बुधः कुंडंचतद्बहिःकुर्याद्गृहयज्ञोक्तमा
र्गतः पंचामृतपंचगव्यंपंचत्वक्पल्लवानिच उदुंबरवटाश्वत्थप्लक्षाम्रलकुसपल्लवाः शतौषधीमूलशाखनवरत्नानिमृत्तिकाः कुष्ठंमांसीहरिद्रेद्वेमुराशैलेय
चंदनं वचाचंपकमुस्ताचसर्वौषध्योदशैवहि गजाश्वरथ्यावल्मीकसंगमस्थानसंभवा ह्रदगोराजनगरद्वारतश्चाष्टमृत्तिकाः शतौषधीमूलानि च ॥
अश्मरी १ सहदे २ अपराजिता ३ मुण्डा ४ उशीर ५ बाला ६ अधःपुष्पी ७ शंखपुष्पी ८ ज्येष्ठीमधु ९ कोरकः १० चक्रांकिता ११ विष्णुक्रांता १२ शिव
क्रान्ता १३ मयूरशिखा १४ काकजंघा १५ भृंगराज १६ कुमारी १७ हय १८ कर्णिकार १९ अपामार्ग २० बिल्वं २१ षण्मूला २२ अम्बुज २३ उत्तरा २४
पुत्रजीव २५ दूर्वा २६ काश २७ कुश २८ साल २९ नाल ३० चक्रमर्द ३१ सिंही ३२ व्याघ्री ३३ अर्क ३४ प्लक्ष ३५ पलाश ३६ पिप्पल ३७ वट ३८ उदुं
बर ३९ तुलसी ४० उत्पल ४१ शतपत्र ४२ अतसी ४३ सारिवा ४४ कदंब ४५ बकुल ४६ शमी ४७ गहिक ४८ निर्गुंडी ४९ मुंडी ५० दण्डी ५१ क्रान्ती ५२
अशोक ५३ सूर्यभक्ता ५४ रुद्रजटा ५५ कदली ५६ बीजपूरकं ५७ मदनक ५८ मुसली ५९ पुनर्नवा ६० आम्र ६१ पाटल ६२ श्रीपर्णी ६३ करवीर।
६४ चंपकं ६५ गुडूची ६६ देवदारु ६७ अगरु ६८ चंदन ६९ कुटज ७० शिग्रु ७१ हरिद्रा ७२ जटामासी ७३ वचा ७४ कुष्ठ ७५ तज ७६ दारुहरिद्रा।
७७ बन्धुजीव ७८ सिंधुवार ७९ सही ८० अश्वगन्धा ८१ मुस्ता ८२ कुरंटक ८३ पनस ८४ जीवक ८५ जाती ८६ मालती ८७ मधूके ८८ खदिर ८९
सप्तच्छद ९० सिरीष ९१ काकमाची ९२ शतावरी ९३ केतकी ९४ जंबू ९५ शाक ९६ वेतस ९७ आमलक ९८ सरल ९९ गिरिकर्णी १०० इति तिलमाष।
यवव्रीहिगोधूमानिप्रियंगवः चणकैःसहितासप्तसद्बीजानिचसर्वदा वज्रमौक्तिकवैडूर्यपुष्परागेंद्रनीलकं पंचरत्नमिदंप्रोक्तंमंत्रैःकुंभेषुनिक्षिपेत्।
सुवर्णेनप्रमाणेनतदर्धार्धेनवापुनः। नैर्ऋतिप्रतिमांकुर्याद्वित्तशाठ्यविवर्जितः अत्रविशेषः शौनकेनपलमानेनवार्धेनपादेनाथस्वशक्तितः नक्षत्रदे
वतारूपंकारयित्वाविचक्षणः यद्धामसंस्कृतवर्णस्यस्थापयित्वाप्रपूजयेत् सुवर्णंसर्वदेवत्यंसर्वदेवात्मकोनलः सर्वदेवात्मको विप्रःसर्वदेवमयोहरिरिति

वस्त्राणि षोडशाष्टौ च रुद्रकलशस्थापनप्रयोगः ... ब्राह्मणान्वरयेत् पश्चात्स्वस्तिवाचनपूर्वकं श्रोत्रियाश्चतुरोवाष्टौ द्वादशात्र षोडश प्रधानाचार्यमेते पंचभि
स्तु तत्सतिमर्दने ईशानादि चतुः कोणेष्वव्रणान्जलपूरितान् पूर्वोक्तद्रव्यसंयुक्तान्स्थापयेद्रक्तवर्णकान् विप्रान् पृथक्पृथक् वापि मधुपर्कादि
नार्चयेत् द्वारे कुजापकान् अष्टौ द्वौ द्वौ च वरयेत्पुनः अग्निर्गवां रुणे मन्त्रैः फलपुष्पाक्षतादिभिः तत्तत्कुंभे जलं स्पृष्ट्वा कुशकूर्चैर्जयेदिति रुद्रसूक्तं च भद्रामि
रानोभद्राः इति क्रमात् पुरुषसूक्तं च तन्मन्त्रैर्देवान्ध्यात्वा प्रपत्ततः गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् पंचगव्यमिदं कुंभे क्षिपेत्तज्जमध्यान्वितम् र
द्रघटे क्षिपेत् तत्पात्रापरिन्यस्तं शतच्छिद्रघटे स्थितं ततश्च निर्ऋतिरेव मर्चयेत्स श्रिमा सुरवमोषुणस्त्विति मन्त्रेण फलवस्त्राक्षतादिभिः सूलरूपं वि
धानव्यराम कृष्णपवाहनं खड्गघटधरं चोग्रं द्विभुजं चतुष्कोननम् स्थापयेत्तत्र हाश्वेव वस्त्रगंधादिभिर्यजेत् चरुं च श्रपयेत्तत्र नैर्ऋतं तदुत्तरापह
तत्र चत्वारः कुंभाश्चतुर्दिक्षु स्थाप्याः एकः कुंभो रुद्रस्थापनार्थमन्यः स्थाप्यः एकः शतच्छिद्रः कुंभः तस्मिन्कुंभे देवदारु शैलपर्णीस्याद्योषधानि तथा
सुवर्णमूलं अष्टादशयवपरिमितं निक्षिप्य तदुपरि वंशादिपात्रं निधाय तत्र निर्ऋतिप्रतिमां रुद्रप्रतिमां जलप्रतिमासहितां स्थापयेत् ततः षोडशो
पचारैः पंचोपचारैर्वा पूजयेत् उक्तं च शौनकेन पुण्यग्भिर्मैत्रितैः तोयैः प्रोक्षितायां क्षितौ ततः तत्रादौ कुंभसंश्लक्ष्णं रक्तव्रणविवर्जितं अरुष्णमूलं
याः फलिनीरित्यनया क्षिपेद्रत्नौषधादिकं वस्त्रावगुंठितं कुर्यात्पूरयेत्तीर्थवारिणा कूर्चहेमसमायुक्तं चूतपल्लवसंयुतं स्वस्तिकोपरि विन्यस्य क्षीरद्रुम
सपल्लवैः द्रोणव्रीहीश्च निक्षिप्य ईशाने च निधापयेत् पंचरत्नानि निक्षिप्य सर्वौषधिसमन्वितम् अर्चितं गंधपुष्पाद्यैः श्रीरुद्रं तत्र संजयेत् तत्रै
निरथमक्शनरुद्रानुवाककम् रक्षामंत्रं तथा पुण्यं रसोघ्नं च स्पृशंजपेत् ... व कंजयेत्सम्यगष्टोत्तरसहस्रकम् एकवारं तथा जापी पावमानीस्पृशंजपे
त् जपस्तु पंचकुंभाश्च द्व्यं वा तदलाभतः श्रीरुद्रस्यैककुंभं च सर्वसूक्तानि तत्र तु तथान्यं पंचमं कुंभं पूर्वोक्तलक्षणैर्युतम् चतुःप्रस्रवणं कुर्यात्सचवकं च तत

द्रवेत् वस्त्रावगुंठितंकुर्यात्पूरयेत्तीर्थवारिणा पंचरत्नसमायुक्तताम्रपल्लवसंयुतं एतस्मिन्नपिपंचवल्कलसप्तमृत्तिकाशतमूलं देवदारुप्रभृतीनि
धहेममूलानिक्षिपेत् तत्रशतमूलालाभे विष्णुक्रांतासहदेवीतुलसीशतावरी मूलानीमानिगृण्हीयात्तदलाभे विशेषतः तस्योपरिन्यसेत्पात्रं
र्णंवारोप्यमन्मयं शुद्धवस्त्रेणसंछाद्यशतमूलानिनिक्षिपेत् कुंभोपरिन्यसेद्धिद्वान्मूलनक्षत्रदैवतम् अधिप्रत्यधिदैवौचदक्षिणोत्तरदेशयोः
दैवंजपेद्दोज्येष्ठानक्षत्रदैवतम् एवंप्रत्यधिदेवंचपूर्वाषाढर्क्षदेवतम् स्वलिंगोक्तैश्चमंत्रैश्चप्रधानादीनप्रपूजयेत् पंचामृतेनसंस्नाप्य आवाह्या
थसमर्चयेत् उपचारैःषोडशभिर्यद्वापंचोपचारकैः रक्तचंदनगंधाद्यैःपुष्पैःकृष्णासितादिभिः मेषशृंगादिधूपैश्चघृतदीपैस्तथैवच क्रूरापोलिक
मांसाद्यैः नैवेद्यैर्भोजनादिभिः मत्स्यमांसक्रूरादीनिब्राह्मणानांविवर्जयेत् क्रूरास्थानेप्रदातव्यंक्षीरसैंधवमिश्रितम् पायसंलवणोपेतं मासस्थाने
प्रकल्पयेत् उक्तगंधाद्यलाभेतुयथालाभंसमर्चयेत् पुष्पांतंतुसमभ्यर्च्यहोमंकुर्याद्यथोदितम् निर्वापप्रोक्षणादीनिचरोःकुर्याद्यथाविधि हवि
र्गृहीत्वाविधिवन्नैऋत्येवकृत्वाहुनेत् अत्रवसिष्ठेनविशेषोभिहितः मूलंप्रजामितिमंत्रद्वयस्यकण्वऋषिर्निर्ऋतिर्देवता अनुष्टुप्छंदः मूलायस्वा
हा प्रजापतयेस्वाहेत्युपहोममंत्रौ पलाशसमिदाज्येनचरुणाष्टसहस्रकम् अथवाष्टोत्तरशतंप्रत्येकंजुहुयात्ततः मूलंप्रजामित्यष्टाभिर्वाक्यैर्मंत्र
द्वयेनच सावित्रैःसौम्यनैर्ऋत्यमंत्रैरश्वत्थसंभवैः समिद्भिश्चतिलव्रीहीन्हुत्वाव्याहृतिभिस्ततः मूलंप्रजामित्यष्टौवाक्यान्यर्चकोजपेत्॥
अष्टोत्तरसहस्रंवाशतंवानियतात्मवान् अस्यहोमप्रकारस्तुशाखांतरविषयोध्येयः मोषुणःपरापरितियत्तेसृष्टवतिप्राणुच पायसंघृतसंमि
श्रंहुनेदष्टोत्तरंशतम् समिदाज्यचरूंश्चोक्तितः संख्ययाहुनेत् अधिदैवतयोश्चैवजुहुयात्स्वस्वमंत्रकैः नक्षत्रदेवतायुश्चपायसेनतु
होमयेत् कृणुष्वेतिपंचदशभिर्जुहुयात्क्रमशस्ततः गायत्र्याजातवेदसेत्र्यंबकमितिक्रमात् सीरायुंजंतितासमग्निवास्तोष्पतेत्वमेवच॥
क्षेत्रस्यपतिनागृणानाग्निर्दूतंतथैवच श्रीसूक्तेनतथाविद्वान्समिदाज्यचरून्क्रमात् अष्टोत्तरशतंवाथअष्टाविंशतिभिःक्रमात् आ
ष्टाष्टसंख्ययावापिजुहुयाच्छक्तितोबुधः त्वन्नःसोमेनपायसंजुहुयात्तु त्रयोदश चतुर्गृहीतमाज्यंचयातेरुद्रेतिमंत्रतः स्रुवेणजुहुयात्सप्त

महाव्या हृतिभिः क्रमात् हुत्वा स्विष्टकृतं पश्चात् प्रायश्चित्तादु [illegible] र्भवेत् आचार्यो यजमानो वा अग्नौ पूर्णाहुतिं हुनेत् होमशेषं समाप्याथ वह्नि
मारोपयेत्ततः कुंभानिमंत्रणं कुर्याद्दक्षिणेनाभिमंत्रयेत् मृत्युप्रशमनार्थाय जपेत्त्र्यंबकं शतम् रुद्रकुंभोक्तमार्गेण रुद्रमंत्रस्पृशञ्जपेत् [illegible]
पक्वान्नैवेद्यं कुंभयुग्मे निवेदयेत् प्रसादयेत्ततो देवमभिषेकार्थमादरात् भद्रासनोपविष्टस्य यजमानस्य [illegible] त्विजः दारपुत्रसमेतस्य कुर्युः सर्वेऽभिषेच
नम् अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च आपोहिष्ठेति नवभिरापदहाद्द्वयेन च सहस्राक्षेण चैनापि देवस्य त्वेति मंत्रकैः शिवसंकल्पमं
त्रेण वक्ष्यमाणैश्च मंत्रकैः योऽसौ वज्रधरो देवो महेंद्रो गजवाहनः मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु योऽसौ शक्तिधरो देवो हुतभुङ्मेषवा
हनः सप्तजिह्वश्च देवाग्निर्मूलदोषं व्यपोहतु योऽसौ दंडधरो देवो धर्मो महिषवाहनः मूलजातशिशोर्दोषं व्यपोहतु यमो मम योऽसौ खड्गधरो देवो
निर्ऋतीराक्षसाधिपः प्रशामयतु मूलोत्थं दोषं गंडांतसंभवम् योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः नक्रवाहः प्रचेता नो मूलोत्थाघं व्यपोहतु
योऽसौ देवा जगत्प्राणो मारुतो मृगवाहनः प्रशामयतु मूलोत्थं दोषं बालस्य शांतिदः योऽसौ निधिपतिर्देवः खड्गभृन्नरवाहनः [illegible] शिशोर्दोषं [illegible]
दोषं व्यपोहतु योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः आश्लेषामूलगंडांतदोषमाशु व्यपोहतु विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः सर्वदोषप्र
शमनं सर्वे कुर्वंतु शांतिदाः तच्छ्रेयोऽभिषेकं तु सर्वदोषोपशांतिदम् सर्वकामप्रदं दिव्यं मंगलानां च मंगलम् वस्त्रांतरितकुंभाभ्यां पश्चात्तु स्नापयेद्
धः ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः यजमानो दक्षिणाभिस्तोषयेद् ऋत्विगादिकान् धेनुं पयस्विनीं दद्यादाचार्याय सवत्सकाम् निर्ऋ
तिप्रतिमां कुंभवस्त्रं हेमं च दापयेत् ग्रहार्थवस्त्रप्रतिमास्तस्मै दद्यात्प्रयत्नतः श्रीरुद्रजापिने देयः कुंभो नड्वान्प्रयत्नतः तत्कुंभवस्त्रप्रतिमा [illegible]
स्मै दद्यात्प्रयत्नतः उक्तालाभे ततो दद्यादाचार्यब्रह्मऋत्विजाम् तत्तन्मूल्यं प्रदातव्यं शक्त्या वाथ प्रदापयेत् दद्यात्स्वपायसादि ब्राह्मणान् भोजये
च्छत अलाभे सति पंचाशद्दशकं तदलाभतः सर्वशांते श्च पठनं [illegible] तथा गृही समाप्येद्विप्रान्निर्ऋतिः प्रीयतामिति इति शौनकोक्त [illegible] मू
लशांतिः अथाश्लेषाशांतिरप्येवमेव कार्या नत्र विभवे पूर्वोक्तवत्संच कुंभा स्थाप्याः असंभवे कुंभद्वयम् एकत्र रुद्रस्थापनम् ॥

द्वितीये आश्लेषाप्रतिमास्थापनम् अभिमंत्रणादि पूर्ववत् तत्राश्लेषाप्रतिमा सर्पाकारा अधिदैवतबृहस्पतिप्रतिमा प्रत्यधिदैवतपितृप्रति-
मास्थाप्यापूज्याच नमोस्तु सर्पेभ्य इति पूजामंत्रवृत्तीरितः सर्पो[illegible]स्व द्विभुजः पीतवस्त्रकः कृष्णकादिधरस्त्रीस्त्री दिव्याभरणभूषि-
तः एवं ध्यात्वा नतोभ्यर्च्य होमकर्मसमारभेत् अभिषेके विशेषः आश्लेषोक्तसजातस्य मातापित्रोर्धनस्य च भ्रातृज्ञातिकुलस्यानां दो-
सर्वव्यपोहतु पितरः सर्वभूतानां रक्षंतु पितरः सदा सार्पनक्षत्रजातस्य वित्तं च ज्ञातिबांधवान् सर्पाधीशनमस्तुभ्यं नागानां च गणाधिप गृहा-
णार्घ्यं मया दत्तं सर्वारिष्टप्रशांतये इत्यर्घमंत्रः मूलनक्षत्रवत्कुर्यात्सर्वदोषस्वनामतः एतच्च मूलाश्लेषाशांतिकद्वयं विवाहे उपस्थिते श्वशुरे श्व-
श्रूर्वा श्वसत्वे मूलाश्लेषोत्पन्नयोरपि वधूवरयोस्तत्तदरिष्टनिवृत्यर्थं विधेयम् उपलक्षणत्वाच्च ज्येष्ठाविशाखोत्पन्नाया बध्वा वरस्य ज्येष्ठबंधु-
कष्टशांतये च नारदः मूलजा श्वशुरं हंति व्यालजा च तदंगना ऐंद्री पत्यग्रजं हंति देवरं तु द्विदैवजा शांतिर्वा पुष्कला चेत्स्यात्तर्हि दोषो न कश्चनेति
इत्यश्लेषाशांतिः अथ गंडशांतिः गंडशांतिं प्रवक्ष्यामि सोममंत्रेण भक्तिमान् कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्नव अष्टाभिश्च चतुर्भिर्वा द्वा-
भ्यां वाशोभनं तथा तन्मध्ये पायसं शंखे न नवनीतेन पूरिते राजतं चंद्रमभ्यर्च्य सितपुष्पसहस्रकैः दैवत्तः शुक्लवासास्तु शुक्लमाल्यांबरार्चितः
सोमोहमिति[illegible]च सपूजां कुर्याद्दंतद्विजः दद्याद्द्विजक्षिणामिष्टां गंडदोषप्रशांतये शुक्लं वागीश्वरं दैवतास्त्रपात्रसमन्वितम् गंडदोषोपशांत्यर्थं दद्याद्द्वि-
जेशुचिः अत्रापि पूर्ववत्प्रतिमाकलशहोमाभिषेकादिकं कार्यं तिथिगंडे त्वनड्वाहं नाशात्रो धेनुरुच्यते कांचनं लग्नगंडे तु गंडदोषो विनश्यतु आद्यभागे
पितुर्गंडे त्रयाणामभिषेचनम् इतरत्र शिशोर्मातुरभिषेकं च कारयेत् अत्यल्पउत्तराऽतिष्यचित्राख्यपूर्वाषाढोद्भवस्य च कुर्याच्छांतिं प्रयत्नेन नेत्राकाराजा-
बुधैः चित्राद्यपुष्यपादे द्वितीये पूर्वाषाढधिष्ण्यपादे द्वितीये जातः पुत्रश्चोत्तरायां विधाती माता पित्रोर्भ्रातुरप्यात्मनश्च द्विमासस्योत्तरादोषः पुष्यश्चै-
वत्रैमासिकः पूर्वाषाढाष्टमे मासि चित्राषाण्मासिकं फलम् नव[illegible]सतथाश्लेषा मूलं चाष्टौ समाः स्मृताः ज्येष्ठामासे पंचदशे पुत्रदर्शनवर्जिता
उत्तरे तिलपात्रं स्यात्तिष्ये गोदानमिष्यते अजां चित्रासु वैरेयापूर्वाषा[illegible]चनम् यवांश्चैव द्विमाषांश्च तिलमुद्गांश्च दापयेत् यथावित्तानुसारेण कुर्यां

मु॰ शां॰
नं॰ प॰
३०

ब्राह्मणभोजनम् पितुरायुष्यवृद्ध्यर्थं शांतिरत्रविधीयते इतिगंडांत[illegible]शांतिः अथज्येष्ठाशांतिः भरद्वाजः ज्येष्ठादौमातृजननीमातामहं द्वितीयके तृ
तीयेमातुलंहंतिचतुर्थेजननीन्तथा आत्मानंपंचमेहंतिषष्ठेगोत्र[illegible]भवेत् सप्तमेकुलनाशःस्यादष्टमेज्येष्ठसोदरः नवमेश्वशुरंहंतिसर्वंसर्वंदशा
मेनर्थेति प्रत्येकंघटिकाषट्कस्यफलमुक्तम् अत्रापिमूलशांतिर[illegible] कार्यम् तत्रविशेषःघटिकैकावशेषांतेज्येष्ठादौघटिकाद्वयंक्रमेणसंधि
तिथेयंशिशुगंडांतमीरितम् ज्येष्ठासपादस्तुपितुःस्वस्यचापिविनाशकः ज्येष्ठर्क्षेकन्यकाजाताहंतिशीघ्रंधवाग्रजम् शांतिंतस्यप्रवक्ष्यामिगंडदो
षप्रशांतये तत्रचतुर्दिक्षुकुंभचतुष्टयंसंस्थाप्यतन्मध्येशतच्छिद्रंपंचमंकुंभंसंस्थाप्यपूर्ववत्पूजादिविधायतत्र वज्रांकुशधरंदेवमैरावतगजान्वितम्
कुर्याच्छचीपतिंस्वर्णमिंद्रंसुरनायकम् शालितंडुलसंपूर्णकुंभस्योपरिपूजयेत् इंद्रायेंद्रामरुत्वतइतिमंत्रेणवाग्यतः पूजयेद्विधिनासम्यग्लोक
पालगणान्वितम् रक्तवस्त्रद्वयोपेतंदेवराजंशचीपतिम् पूजयेद्वारुणैर्मंत्रैः कुंभान्धीमान्प्रयत्नतः त्वन्नो अग्नेजयदादौसत्वन्नो द्वितीय
के समुद्रज्येष्ठाइतिचेमंमेगंगेचतुर्थकम् पूजयेद्वस्त्रगंधाद्यैश्चतुरः कलशानपि आनोभद्राज्यपंचाहैभद्रा अस्मे[illegible]कम् इंद्र[illegible]
इजाप्यंजपेन्मृत्युंजयंततः समिद्भिर्ब्रह्मवृक्षस्यशतमष्टोत्तरंशतम् स पिषाचरुणाचैवमूलमंत्रेणवाग्यतः हुनेज्जाप्यंचतेनैवयतइंद्रभयेतिच
तिलान्व्याहृतिभिर्हुत्वाशतमष्टोत्तरंपृथक् ततोभिषेकः ततोरूपंरूपमितिमंत्रेणतच्चक्षुरितिमंत्रेण आज्यावलोकनं पुनर्देवतापूजनंकृत्वा न
मोस्तुसुरनाथायनमस्तुभ्यंशचीपते गृहाणार्घ्यंमयादत्तंगंडदोषप्रशांतये अष्टोत्तरशतसंख्याकुर्याद्ब्राह्मणभोजनम् अन्यत्सर्वंतुपूर्ववत् अथ
ज्येष्ठाशांतिः दिनक्षयेव्यतीपातेव्याघातेविष्टिवैधृतौ शूलेगंडेचपरिघेवज्रेचयमघंटके कालगंडेमृत्युयोगेदग्धयोगसमन्विते तस्मिन्गंडदिनेपि
प्रप्रसूतिर्यदिजायते अतिदोषकरीप्रोक्तातत्रपापयुतेसति विचार्य[illegible]शांतिंकुर्याद्यथाविधि पूजनंदेवतानांचब्राह्मणानांचैवपूजनम् [illegible]
शिवालयेभक्त्यागोघृतेनप्रदापयेत् अभिषेकंशंकरायअश्वत्थस्य[illegible]म् अभीष्टफलसिद्ध्यर्थंकुर्याद्ब्राह्मणभोजनम् गणपत्युपुरुषसूक्तेन[illegible] त्र्यम
रंमृत्युंजयंशुभम् शांतिजाप्यंपुनश्चैवकृत्वामृत्युंजयीभवेत् इत्युत्तरगार्ग्ये दुष्टयोगशांतिः कुमारजन्मकालेतुव्यतीपातश्चवैधृतिः संक्रांतिश्च[illegible]

षेस्तत्रजातोदारिद्र्यकारकः नवग्रहमखंकुर्यात्तस्यदोषस्यशान्तये पृथग्गोमुखाज्जन्मततःशांतिंसमाचरेत् ग्रहस्यपूर्वदिग्भागेगोमयेनानुलिप्य।
च अलंकृतस्वदेशेतुव्रीहिराशिंप्रकल्पयेत् पंचद्रोणमितंधान्यंतदर्धं[illegible]च तदर्धंतुतिलैःकुर्यादन्योन्योपरिकल्पयेत् द्रव्यत्रितयराशौतु[illegible]
लिखेद्बुधः पुण्याहंवाचयित्वातुआचार्यंवरयेत्पुरा राशौप्रतिष्ठितंकुंभम्[illegible]हस्तम् तीर्थोदकेनसंपूर्यसर्वौषधिपल्लवम् पंचगव्यंपंचरत्नंक
युग्मेनवेष्टयेत् तस्योपरिन्यसेत्पात्रंसूक्ष्मवस्त्रेणसंयुत प्रतिमांस्थापयेत्तस्य[illegible]साधिप्रत्यधिदेवताम् चंद्र[illegible]कृतीपार्श्वेमध्येवैप्रतिमर्चयेत् एवमेव
व्यतीपातशांतौसंक्रमणस्यच अधिदेवंभवेत्सूर्यःचन्द्रःप्रत्यधिदेवतम् [illegible]तिपूर्वेणतत्तन्मंत्रेणपूजयेत् त्र्यंबकेनमंत्रेणसोमपूजासमाचरेत्
उत्सूर्यइतिमंत्रेणसूर्यपूजासमाचरेत् आप्यायस्वेतिमंत्रेणसोमपूजांसमाचरेत् ततः[illegible] अष्टोत्तरशतंवाअष्टाविंशतिसंख्याजपंसर्वेसो
रजपंच आनोभद्राअग्नेइतिसूक्तंपुरुषसूक्तं त्रियंबकंएतान्मंत्रान्कुंभ[illegible]जपंकुर्युः त्रियंबकेनमंत्रेणसमिदाज्यचरून्जुहु
नेत् अष्टोत्तरसहस्रम् अष्टोत्तरशतम् अष्टाविंशतिर्वा मृत्युंजयमंत्रेणति[illegible]समाचरेत् ततःसमुद्रज्येष्ठाश्च आपोहिष्ठेत्यृचेनच अक्षी
भ्यामितिसूक्तेनपावमानीभिः त्रियंबकेन उत्सूर्येति आप्यायस्वेतितैर्दिकैर्मंत्रैः सुरास्त्वामभिषिंचंत्वित्यादिकैःपौराणमंत्रैश्चाभिषेकंकुर्यात्
ततआज्यावेक्षणंच अन्यद्दक्षिणादानादिकंपूर्ववत् इत्युक्तगार्ग्य[illegible]पातधृतिसंक्रांतिशांतिः अथकुहूसिनीवालीदर्शशांतिः अत्रय।
स्याः कस्याश्चिदमावास्यायाः अष्टौभागान्कृत्वाप्रथमविभागेचंद्रदर्शनं[illegible]तेनचेतिविचार्यम् यदाचंद्रदर्शनंतदासिनीवाली यदाचंद्रदर्श।
नंतदादर्शः सकलचंद्रक्षयस्तदाकुहूरित्यर्थः तदुक्तंछंदोगपरिशिष्टे इंदुक्षयकालः श्राद्धकालइति प्रस्तुत्येन्दुक्षयकालपरिमाणमुक्तं
अष्टमेंऽशेचतुर्दश्याःक्षीणोभवतिचंद्रमाः अमावास्याष्टमेभागे[illegible]भवेदणुः अत्रेंदुराद्यप्रहरेचतिष्ठत् चतुर्थभागोनकलावशिष्टःत
स्तत्क्षयमेतिकृत्स्नएवहिज्योतिश्चक्रविदोवदंतीति एतद्[illegible]व्याख्यानतद्भाष्यकारेणकृतम् प्रहरनवात्मकश्चंद्रक्षयकालइति
तत्राश्रयाः सप्तमाष्टमप्रहरौकृत्स्नक्षयकालः चतुर्दशीशेषयाम[illegible]यामोपिचंद्रसूक्ष्मताकालइति तत्रायमत्रविषयविवेकः यस्याममावा

क्कर्मसंस्कारवशेनचंद्रस्यादृश्यत्वमागतंस्यामावास्या संपूर्णाकुहूर्नाम चंद्रादर्शनलक्षणसत्वात् तत्रापिकुहूशांतिरादेश्या यस्तुसूर्योदयादनं
तरंकियत्तीषुद्वित्रासुघटीषु अतिक्रांतासु अमावास्याप्रवृत्तिः पूर्ववत्तुदृश्या दृश्यतातस्यामुषसिदृक्कर्मवशतश्चंद्रो दृश्येमावादर्शितथाप्येमावास्याया
द्दर्शनलक्षणानाक्रांतत्वात्तांसंपूर्णामावास्यादर्शोनाम तत्रदर्शजननशांतिर्विधेयेति एवममावास्याभेदेनसिनीवालीकुहूदर्शरूपप्रकृत्रयसावकाश मि
तिगीलत्तानामतम् अथप्रकारांतरेणसिनीवालीसर्ववादिसिद्धासैव कुहूस्तुपरिभाषिकी। यदाहवसिष्ठः नक्षत्रेयस्यदर्शान्तोविषनाड्याभवेद्यदि कु
योगइतिख्यातोव्याधिमृत्युभयादिकृत् अयमर्थः यस्मिन्नक्षत्रेया विषनाड्याउक्तास्तस्मिन्कालेयदिदर्शस्यचरमघटिकाभवेत्तन्नक्षत्रेचयस्यप्रसू
स्यजन्मनक्षत्रजन्मकालेकालांतरेवास्यात्तस्यपुंसोव्याधिमृत्युकृत् कुहूयोगोज्ञेयः तत्रकुहूजननफलेशांतिश्चस्यात् कालांतरेपिकुहूयोगसंभवे।
शांतिर्विधेया अतएवजगन्मोहने यस्यजन्मर्क्षगश्चंद्रो विषनाड्यांकुहूभवेत् अभिचारेणकिंतस्यस्वयमेवमरिष्यतीति अतोविषघटि
कातःपूर्वंकालोदर्शशब्दवाच्यइति एवंप्रकारत्रयेणसिनीवालीकुहूदर्शानांभेदउपादितस्तत्रयथासंप्रदायंव्यवस्थैवलभामितिप्रसंगेन
अथशांतिप्रकारः सिनीवाल्यांप्रसूतास्याद्यस्यभार्यापशुस्तथा गवाश्वमहिषीचैववडवाकस्यापि श्रियंहरेत् येवसंतिद्विजाश्चान्येस्वप्र
सादेभ्यसीविनः वर्जयेत्तानशेषांस्तुपशुपक्षिमृगादिकान् द्विजाः पौर्णेणः कुहूप्रसूतिरत्यर्थंसर्वदोषकरीमता यस्यप्रसूतिरेतेषांतस्यायु
र्धननाशिनी नारीविनाचशेषाणांपरित्यागोविधीयते परित्यागात्तत्र शांतिंकुर्याद्विचक्षणः प्रतिमाकारयेच्छंभोश्चतुर्भुजसमन्वितम्।
त्रिशूलखड्गवरदाभयहस्तांयथाक्रमात् श्वेतवर्णाश्वेतपुष्पाश्वेतं वृषस्थिता त्र्यंबकेनमंत्रेणपूजांकुर्याद्यथाविधि इंद्रश्चतुर्भुजोवज्रांकुश
चापससायकः रक्तवर्णोगजारूढोयतइंद्रेतिमंत्रतः पितरःकृष्णवर्णाश्चचतुर्हस्ताविमानगाः षड्गस्रुवकमंडलुभयानांचधारिणः येसारति
मंत्रेणपूजांकुर्यादनंतरम् कलशस्थापनपूजादिपूर्ववत् समिदाज्यंचहोमेतिलमाषेश्चसर्षपैः अश्वत्थप्लक्षपालाशसमिद्भिःखादिरैःशुभैः अष्टो
त्तरशतंमुख्यप्रत्येकंजुहुयाद्बुधः त्र्यंबकेनमंत्रेणतिलान्व्याहृतिभिर्घृतं शंकरस्याभिषेकंचकुर्याद्राज्यावलोकनम् अन्यत्सर्वमभिषेकादिपूर्ववत्

इतिसिनीवालीकुहूशांतिः अथदर्शशांतिः अथातादर्शजातानामाता पित्रादीनां इता तद्दोषपरिहारायशांतिंवक्ष्यामिनारद तत्रसंकल्पंविधायतन्मध्येकल
शंसंस्थाप्यतन्मध्येनिक्षिपेद्द्रव्यंदधिक्षीरघृतादिकम् न्यग्रोधोदुंबरोश्वत्थः सचूतोनिंबकास्तथा एतेषांवृक्षमूलानांत्वगादीन्पल्लवांस्तथा पंचरत्नानिनिक्षिप्यव
स्त्रयुग्मेनवेष्टयेत् तत्रसर्वेसमुद्राइति आपोहिष्ठात्र्यचेनेतिकयानश्चित्रइत्यृचा यत्किंचेदमृचावैवसमुद्रज्येष्ठइत्यृचा अभिमंत्र्योदकुंभंतमग्नेःपूर्वे
निधापयेत् दर्शश्चदेवतायाश्चसोमसूर्यस्वरूपकाः प्रतिमांस्वर्णजांनित्यंकुर्वीतांतज्जांतथा आप्यायस्वेतिमंत्रेणसवितापश्चात्तमंत्रंच उपचारैः
समाराध्यततोहोमंसमाचरेत् समिधश्चचरुद्रव्यंक्रमेणजुहुयाद्बुधः हुनेत्सवितृमंत्रेणसोमोधेनुंचमंत्रतः अष्टोत्तरशतंवापिअष्टाविंशतिसं
ख्यया अभिषेकादिकंसर्ववत् हिरण्यंरजतंचैवकुंभमाधेनुश्चदक्षिणा ब्राह्मणान्भोजयेत्तत्रकारयेत्स्वस्तिवाचनम् इतिदर्शशांतिः कृष्णपक्षेचतुर्द
श्याःप्रसूतेःषड्विधैःफलम् चतुर्दशीचषड्भागाकुर्यादादौशुभंस्मृतम् द्वितीयेपितरंहंतितृतीयेमातरंतथा चतुर्थेमातुलंहंतिपंचमेवंशनाशनम् षष्ठेतु
धनहानिःस्यादात्मनोवंशनाशनम् तस्मात्सर्वप्रयत्नेनशांतिंकुर्याद्विधानतः प्रतिमांकारयेच्छंभोःकर्षमात्रसुवर्णतः तदर्द्धेनवाकुर्यात्सर्वलक्षण
संयुतां वृषभंचसमासीनंवरदाभयपाणिकम् शुद्धस्फटिकसंकाशंश्वेतमाल्यांबरान्वितम् त्र्यंबकेनमंत्रेणपूजांकुर्याद्विधानतः तत्रमूलशांतिवत्
कलशस्थापनादिकृत्वातत्रशंभुपूजांविधाय तत्रआवाह्यवारुणैर्मंत्रैः नेनचविधानतः इमंमेवरुणेत्यनयातत्वायामीत्यनयातथा त्वन्नोअग्नइत्य
नयासत्वन्नइतिमंत्रतः आग्नेयकुंभमारभ्यपूजांकुर्याद्यथाक्रमात् आनोभद्राश्चसूक्तेनभद्राअग्नेश्चसूक्तवाकंजस्त्वापुरुषसूक्तंचरुद्रंचक्रमाज्ज
पेत् ईश्वरस्याभिषेकंचग्रहपूजांचकारयेत् समिदाज्यचरूंश्चैवतिलमाषांश्चसर्षपान् अश्वत्थप्लक्षपालाशसमिद्भिःखादिरैःशनैः अष्टोत्तरसहस्रं
अष्टोत्तरशतंतुवा अष्टाविंशतिभिर्वापिहोमंकुर्यात्पृथक्पृथक् त्र्यंबकेनमंत्रेणतिलान्व्याहृतिभिःक्रमात् ग्रहाएवंचहोतव्याश्चास्मदुक्तविधानतः अ
न्यत्सर्वमाज्यावलोकनादिपूर्ववत् इतिकृष्णचतुर्दशीजननशांतिः एकस्मिन्नेवनक्षत्रेभ्रात्रोर्वापितृपुत्रयोः प्रसूतिश्चतयोर्मृत्युर्भवेदेकस्यनिश्चया
त् तत्रशांतिंप्रवक्ष्यामिसर्वाचार्यमतेनतु अग्नेरीशानभागेतुनक्षत्रप्रतिमांततः तन्नक्षत्रोक्तमंत्रेणचार्चयेत्कलशोपरि रक्तवस्त्रेणसंछाद्यवस्त्रयुग्मे

नवेष्टयेत् स्वस्वशाखोक्तमार्गेण कुर्यादग्निमुखं ततः अनेनैव तु मंत्रेण हुनेदष्टोत्तरं शतम् प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तं तमेव हि अभिषेकं ततः
कुर्यादाचार्यः पितृपुत्रयोः वस्त्रालंकारगोदानैराचार्यं पूजयेत्ततः ऋत्विग्भ्यो दक्षिणां दद्यान्माषत्रयसुवर्णकम् देवताप्रतिमादानं धान्यवस्त्रादिभिः सुहे
पानशय्यासनादींश्च दद्यात्तद्दोषशांतये भोजयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितः इत्येकनक्षत्रशांतिः अत्रैकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोरे
त्यत्र भ्राता च भ्राता च भ्रातरावितिभ्रातृपुत्रौ स्वसृदुहितृभ्यामिति एकशेषे सोदरयोर्भ्रातृभगिन्योरेव निषेधः स्यान्न तु पुंभ्रात्रोः एवं पितृपुत्रयोरित्यत्रापि
पिता च पुत्रश्चेति द्वंद्वे पितापुत्रयोरेकनक्षत्रजनननिषेधः स्यान्न तु मातृपुत्रयोः न च माता च पिता च पितरौ माता पित्रेत्येकशेषे तथा पुत्रश्च दुहिता च पुत्रौ पित
रौ च पुत्रौ चेति द्वंद्वे पितृपुत्राणामिति बहुवचनं स्यात् तथापि वचनानुरागानुरोधात् इत्थं विषयोपि संगृहीतो भविष्यति यदाह वसिष्ठः पित्रोस्तु जन्मनक्षत्रे जातस्तु पि
तृमातृहा जन्मर्क्षेंशे च तल्लग्ने जातः सपोम्तिप्रदः देवकीर्तिः यद्येकस्मिन्धिष्ण्ये जायन्ते दुहितरोथवा पुत्राः पित्रोरंतकराः स्युर्यद्यपरे प्रीतिरतुला स्यात् अपरे
अन्यनक्षत्रे गर्गः यस्यैव जन्मनक्षत्रे जायेद्भ्राता सुतोपि वा सजातीयः सजात्या वा सोस्य प्राणान्प्रसाधयेदिति अथ मूले उपलक्षणत्वेनास्य विशेषो तिशे
षभूतो गोमुखप्रसवो भिधीयते गर्गः प्रणिपत्य रविं वक्ष्ये प्रायश्चित्तमनुस्मरन् सर्वारिष्टविनाशाय यदुक्तं ज्योतिषार्णवे पितृरिष्टकृतारिष्टमा
त्रारिष्टतथैव च पौष्णाश्विन्योर्गुरौ सार्पमाघचित्रेन्द्रमूलभे एषु नक्षत्रेषु जातस्य कुर्याद्गोजननं तथा जन्मर्क्षे वा त्रिजन्मर्क्षे शुभवारे शुभे दिने कृत्वाभ्यं
गादिकं सर्वं गृहालंकारपूर्वकम् गोमयेनोपलिप्याथ यथावित्तानुसारतः नवं शूर्पं तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् स्थापयित्वा शिशुं तत्र पुनः सूत्रेण वेष्ट
येत् प्राङ्मुखस्तमवाक्पादः तिलगर्भगतं शिशुम् गोमुखं दर्शयित्वा तु पुनर्जातं तु गोमुखात् विष्णुर्योनीति सूक्तेन गव्येन स्नापयेच्छिशुम् गवामंगे
षु मंत्रेण गवामंगेषु संस्पृशेत् विष्णोः श्रेष्ठेन मंत्रेण गोप्रसूतं तु बालकम् आचार्यस्तु समादाय पश्चान्मातुर्ददात्तदा माता जघन्यभागस्था शिशुमानीयतं
मुखात् ततः पित्रे तदा दद्यात्तेतामात्रे प्रदापयेत् वस्त्रे संस्थाप्य तु पिता पुत्रस्य मुखमीक्षयेत् गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् आपो हिष्ठादि
भिर्मंत्रैरपि षिंचेत्ततः शिशुम् मूर्ध्नि चाघ्राय तं पुत्रं तन्मंत्रेण तदा पिता अंगादंगात्संभवसि हृदयादधिजायसे आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥

मूर्द्धनि त्रिरवघ्रायतं शिशुं संस्थापयेत्ततः पुण्याहं वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः दरिद्रायाथ विप्राय तां गां चाभ्यर्च्य दापयेत् गोवस्त्रस्वर्णधान्यादि दत्वादर्की
रितः क्रमात् यथाशक्ति धनं दद्यात्ब्राह्मणेभ्यस्तथा पिता ततो होमं प्रकुर्वीत स्वगृह्योक्तमार्गतः उल्लेखनादिकं कृत्वा चाज्यभागांतमाचरेत् होमस्यैशान
दिग्भागे धान्योपरि शुभं घटम् सपंचगव्यं संस्थाप्य तिलानत्र विनिक्षिपेत् क्षीरिद्रुमकषायांश्च पंचरत्नानि निक्षिपेत् वस्त्रयुग्मेण संछाद्य सीरादिभिरथार्च
येत् विष्णुं वरुणमभ्यर्च्य प्रतिमां च विधानतः आपो हि ष्ठेति तिसृभिः क्रमे सोमस्य तद्विष्णोः परमं पदमसीभ्यामिति सूक्ततः ऋग्भिराभिः प्रत्यृचं च अ
ष्टाविंशति संख्यया अशक्तौ चाष्टसंख्यं वा दधिमध्वाज्यसंयुतम् आदित्यादिग्रहाणां च होमं कुर्यात्समंत्रकम् इति गोमुखप्रसवविधिः अथ प्रसंगात्त्री
तरशांतिः कृतत्रये कृता वेत्स्यात्त्रये वा कृतो यदि मातापित्रोः कुलस्यापि तदारिष्टं महद्भवेत् जातस्यैकादशे वापि द्वादशाहे शुभे दिने आचार्यं वृत्वि
जान्वृत्वा ग्रहयज्ञपुरःसरम् ब्रह्मविष्णुमहेशेंद्रप्रतिमाः स्वर्णतः कृताः पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया
रुद्रसूक्तानि चत्वारिंशांति सूक्तानि सर्वशः द्विज एको जपेद्धोमकाले शुचिः समाहितः आचार्यो जुहुयादत्र समिदाज्यतिलांश्चरून् अष्टोत्तरसहस्रं वा
शतं वा विंशतिं तु वा देवताभ्यश्चतुर्वृक्षादिभ्यो ग्रहपुरःसरम् कांस्याज्यवीक्षणं कृत्वा शेषं पूर्ववदाचरेत् इति त्रीतरशांतिः अथ सूर्यचंद्रग्रहणसमये जन
नशांतिः ग्रहणे चंद्रसूर्यस्य प्रसूतिर्यदि जायते व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् शांतिस्तेषां प्रवक्ष्यामि नराणां हितकाम्यया यस्मिन् ऋक्षे विशेषेण
ग्रहणं संप्रजायते तदृक्षाधिपते रूपं सुवर्णेन प्रकल्पयेत् यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् सूर्यग्रहे सूर्यरूपं सुवर्णेन स्वशक्तितः चांद्रं चंद्रग्रहेपी
मान् रजतेन विशेषतः राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः नागेन सीसकेन शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् तस्योपरि न्यसेद्धीमान् अक्षवस्त्रक
शोभनम् त्रयाणां चैव रूपाणां स्थापनं तत्र कारयेत् रक्ताक्षतं रक्तगंधं रक्तपुष्पांबराणि च सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकरं च यत् श्वेतवस्त्रं श्वेतमाल्यं श्वेतगं
धाक्षतादिभिः चंद्रस्य प्रदातव्यं चंद्रप्रीतिकरं च यत् राहवे चैव दातव्यं कृष्णपुष्पांबराणि च दद्यान्नक्षत्रनाथाय श्वेतगंधानुलेपनम् सूर्यं संपूजयेद्धीमान्
नाकृष्णेनेति मंत्रतः चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः दूर्वाभिर्जुहुयाद्धीमान् राहोः संप्रीणनाय च सर्ववाः समिद्भिर्ब्रह्मरक्षोत्थैः भैषायजुहुयाद्बुधः

भेशायनक्षत्राधिपतये आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः पंचगव्यैः पंचरत्नैः पंचत्वक् पंचपल्लवैः जलैरोषधिकल्कैश्च सहितैः कलशोद्-
कैः औषधिकल्कैः सर्वौषधिकल्कैः अभिषेकं प्रकुर्वीत यजमाने प्रयत्नतः मंत्रैर्वारुणदैवत्यैरापोहिष्ठादिभिः सह इमं मे गंगे पितरस्तत्त्वायामीति मं-
त्रकैः अभिषेके निर्वृत्ते तु यजमानः समाहितः अनेन विधिना शांतिं कृत्वा सम्यग्विशेषतः आकालमृत्युशोकं च व्याधिपीडां न वाप्नुयात् सोऽस्य सौम-
मसंमितं सौभाग्यं लभते नरः इत्थं ग्रहणजातानां सर्वारिष्टविनाशनम् कथितं भार्गवे नेदं शौनकेन महात्मने इति शौनकोक्ता ग्रहणजननशांतिः
अथ ज्वराद्युत्पत्तिकालीननक्षत्रशांतिः तत्रासाधारणो विधिः यस्मिन्नक्षत्रे ज्वरादिपीडा भवति तन्नक्षत्राधिदेवताप्रतिमां स्ववर्णेन कारयित्वा अ-
मुकनक्षत्रसंभूतव्याधिशान्त्यर्थं नक्षत्रशांतिं करिष्ये इति संकल्प्य शुचिप्रदेशे गोमयेनोपलिप्ते तंडुलैश्चतुरस्रं मंडलं निर्माय तन्मध्ये तत्तद्वर्णवर्ण-
वस्त्रद्वयवेष्टितग्रैथिं वस्त्रादि चर्चितं कलशं धान्यस्योपरि विन्यस्य तत्र सर्वौषधीः पंचरत्नानि पंचगव्यानि सप्तमृत्तिकाः पंचपल्लवान् स्वस्वमंत्रेण
कलशे निक्षिप्य सर्वे समुद्रा इति तत्र तीर्थान्यावाह्य तत्त्वायामीति वरुणमावाह्य संपूज्य स्वस्वगृह्योक्तविधिना अग्निं प्रतिष्ठाप्य आज्यभागान्ते तत्तन्नक्षत्रा-
धिदेवतामंत्रेण तन्नक्षत्रपूर्वोक्त नक्षत्रदेवतामंत्रेण तत्तद्द्रव्येण च होमं कृत्वा तेन वरुणविकलशेन यजमानाभिषेके विहिते ताः प्रतिमा रोगी ब्राह्म-
णाय दद्यात् असौ साधारणो विधिः उक्तं च यस्मिन्नृक्षे भवेत्पीडा तन्नक्षत्रस्य देवता सुवर्णनिर्मितं कृत्वा पूजयेत्तु प्रयतः शुचिः गोमयेनानुलिप्तस्य मं-
डलं शुभलक्षणम् चतुरस्रं च संकीर्णं तंडुलैश्च कृताकृतेः कृत्वा तु स्थंडिलं तत्र यत्नतः कुम्भया मृदा तत्पार्श्वे च सुधीः कुर्यात्तंडुलानां महाचयम्
तत्र प्रमाणं खारी वा द्रोणा वा दश शक्त्यपेक्षया अभावे पंच वा द्रोणा द्रोणं वा तदभावतः ईशानकोणदेशे तु कलशं स्थापयेत्सुधीः निधाय द्रविणं तत्र
कलशे शक्त्यपेक्षया पीठं तु पूर्वतः स्थाप्यं नव्यवस्त्रेण संयुतम् स्वस्तिकं तंडुलानां च शुभानां तत्र संलिखेत् तन्मध्ये देवतास्तिस्रो नक्षत्रत्रितयस्य वै
यस्मिन्नृक्षे भवेद्रोगस्तस्य पूर्वापरे सुधीः उडूनी पूजयेद्यत्नादधिप्रत्यधिदैवते देवता यस्य नक्षत्रस्य मंत्रस्तल्लिंग एव च इत्थं च तस्य यस्योक्तं प्रमावं प्रकृतं
तथा तत्सर्वं विदुषानीय होमतंत्रं प्रकल्पयेत् पंचोपचारसंयुक्तां पूजां तत्र प्रकल्पयेत् स्वगृह्योक्तविधानेन कुर्यादग्निमुखं सुधीः कलशं जलपूर्णं च

वस्त्रयुग्मेनवेष्टितम् निधायचौषधीस्तत्रपंचपल्लवसंयुताः सप्तस्थानमृदांकुंभो आलवालंप्रकल्पयेत् इमंमेवरुणइत्येवंजलमंत्रेणवापुनः सर्वेसमुद्राः
सरितइतिमंत्रंचसंस्मरेत् यच्चिद्धितेविशोयथेत्यादिसूक्तंजपेत्पुनः आवाहयेइष्टेदेवंवरुणंपयसांपतिम् एवंनक्षत्रशांत्यर्थंविदध्यात्पूर्वपीठिकाम् सामा
न्योर्थविधिःप्रोक्तोनक्षत्राणांप्रपूजने सर्वौषधीनांदुःप्राप्तौभवेदेकाशतावरी सर्वेषामपिगंधानामभावेचंदनंमतम् शतपत्रंसुमनसांधूपाभावेचगुग्गुलुः ने
वेद्यानामभावेतुपायसंसघृतंस्मृतम् मंत्राणामप्यभावेतुगायत्रीमंत्रउत्तमः होमद्रव्यस्यदुःप्राप्तौतिलाःप्रोक्तामनीषिभिः अष्टोत्तरसहस्रंचतथाशत
मुहूर्त्तमिति अथनक्षत्रदेवताध्यानानि देवतंअश्विनौतत्रद्विभुजौशुक्लवर्णकौ सुधाकलशसंयुक्तौकमंडलुधरौशुभौ १ यमस्तुदेवतातत्रकृष्णवर्णो
द्विबाहुकः तुलापवाहनःश्रीमान्पाशदंडधरःप्रभुः २ अग्निस्तुदेवतातत्ररक्तवर्णोऽजवाहनः चतुर्भुजोघृतामंत्रस्तुवस्नुक्वरदाभयः ३ रक्तवर्णश्चतुर्बाहु
र्हंसारूढश्चतुर्मुखः पद्माक्षसूत्रवरदाभयहस्तोनिरामयः ४ सोमोहिदेवतातस्यश्वेतवर्णःशुभाकृतिः दशाश्वरथमारूढःश्वेताश्वोपिनिगद्यते ५ रुद्रोहि
देवतायस्यवृषारूढश्चतुर्भुजः त्रिशूलखड्गावरदाभयहस्तश्चकीर्तितः ६ चतुर्भुजादितिःपीतसाक्षसूत्रकमंडलुः वरदाभयहस्तासाकार्यास्वर्णमयीशुभा ७ च
तुर्भुजाःपीतवर्णोदेवतास्यबृहस्पतिःदंडाक्षसूत्रपाणिस्तुसाभयःसकमंडलुः ८ सर्पस्तुदेवतातत्रमहामंडलिरूपधृक् सुविस्तृताशिरश्चंडोमकपिंगललोचनः
९ पितरौदेवतातत्रकृष्णवर्णश्चतुर्भुजः भद्राक्षसूत्राभयदकमंडलुधराःशुभाः १० पूर्वाफाल्गुनिकायांचभगोदेवःप्रकीर्तितः रक्तवर्णोम्बुजासीनोद्विभुजोभयप
द्मकः ११ अर्यमादेवतापद्ममध्यस्थःपद्मवर्णकः पद्माभयकरःश्रीमान्स्वर्णमूर्त्तिमहाद्युतिः १२ सवितादेवतातस्यसप्ताश्वरथवाहनः द्विभुजोरक्तवर्णस्यात्
पद्मासनसमाश्रयः १३ त्वष्टापद्मस्थितिश्चित्रवर्णःस्यात्सचतुर्भुजः पद्मासूत्राक्षवलयःपद्मालःपद्मकरःप्रभुः १४ वायुश्चदेवतातत्रमृगारूढश्चमोचकः अ
जाचर्मधरःश्रीमान्द्विभुजःपरिकीर्तितः १५ इंद्राग्नीदेवतातत्रगजाजावाहनौपरौ चतुर्बाहूरक्तवर्णौनिजशस्त्रधरौतथा १६ चापांकुशाभयैर्युक्तौतथा
समविराजितौपद्मासनौरक्तवर्णौमित्रस्तस्यातुदेवता पद्माभयकरःश्रीमान्द्विभुजःपरिकीर्तितः १७ शक्रोदेवतारूढोदिव्यसिंहासनेविभुः श्वेतवर्णोवज्रा
धरोऽभयपाणिर्महाभुजः १८ निर्ऋतिर्देवतातत्रप्रेतारूढश्चमोचकः खड्गखेटकधारीचद्विभुजःपरिकीर्तितः १९ जलंतुदेवतातस्यशुक्लवर्णाशुभाकृतिः ॥

वरुणोस्य जलस्यापि स्वामी पूज्यतमो मतः मकरे वाहने विष्टो भवेत्सप्तकरो ध्रुवम् २० विश्वेदेवा देवताश्च श्वेतवर्णाश्चतुर्भुजाः वरदाभयहस्ताश्च
साक्षसूत्राम्बुभाजनाः २१ विष्णुस्तु कृष्णवर्णः स्यात्सन्नगाशनवाहनः शंखचक्रगदापाणिः पीतवासाश्चतुर्भुजः २२ वसवो देवतास्तत्र श्वेतवर्णाश्च
तुर्भुजाः वरदाभयहस्ताश्च साक्षसूत्राम्बुजासनाः २३ वरुणो देवता तत्र मकरोपरि संस्थिताः यष्टिपाशधरः श्रीमान् गदापद्मधरस्तथा २४ ॥
अजैकचरणो रुद्रो देवतास्य प्रकीर्तिता खड्गचर्मधरो वाग्मी भुजद्वयसमावृतः २५ अहिर्बुध्न्याभिधो रुद्रो देवतास्य प्रकीर्तिता श्वेतश्चतुष्क
रः पद्मवराभयपाशभृत् २६ पूषा तु देवता तत्र पद्मवर्णः सुजासनः द्विभुजः पद्मपाणिः स्यात्सप्तगर्भः श्रियो विभुः २७ इति नक्षत्रदेवताध्यानं
अथोपयुक्तत्वान्मारदीयोक्ता काकमैथुनदर्शनशांतिः दिवा वा यदि वा रात्रौ यः पश्येत्काकमैथुनम् स नरो मृत्युमाप्नोति त्यथवा स्थाननाशनम् ।
काकघातव्रतं यद्वा विदधीताथ वत्सरम् पितॄन्देवान्द्विजान्भक्त्या प्रत्यहं वाभिवादयेत् जितेन्द्रियो जितक्रोधः सत्यधर्मपरायणः तद्दोषशमना
र्थाय शांतिकर्म समारभेत् गृहस्येशानदिग्भागे होमस्थानं प्रकल्पयेत् गृह्योक्तविधिना तत्र प्रतिष्ठाप्य हुताशनम् प्रतिमंत्र्यम्बकेन अथ मृत्युंजयेन
च व्याहृतीभिर्व्रीहितिलैः जपायुतं प्रकल्पयेत् पूर्णाहुतिं च जुहुयात्कर्तोऽक्षः स्वलंकृतः स्वर्णशृंगीं रौप्यखुरां कृष्णां धेनुं पयस्विनीम् वस्त्रालंकारसं
युक्तां निष्कद्वादशसंयुताम् तदर्धेन तदर्धेन दद्यात् दक्षिणया युताम् यथा वित्तानुसारेण न्यूनाधिकत्वकल्पना आचार्याय श्रोत्रियाय तां गां दद्यात्कुटुं
बिने यस्मात्त्वं पृथिवी सर्वा धेनो केशवसन्निभे सर्वमृत्युहरा नित्यं मतः शांतिं प्रयच्छ मे ब्राह्मणेभ्यो विशिष्टेभ्यो यथाशक्त्या च दक्षिणाम् ब्राह्मणान्भोज
येत्पश्चात्स्वस्तिवाचनपूर्वकम् एवं यः कुरुते तस्य कृतस्मात् दोषात्प्रमुच्यते इति काकमैथुनदर्शनशांतिः तत्रैव कपोतादि शांतिः आरोहयेद्गृहं यस्य कपो
तो वा प्रवेशयेत् स्यान्नृहानिर्भवेत्तस्य यद्वानर्थपरंपरा दोषाय धनिनां गेहे दरिद्राणां शिवाय च तस्य शांतिश्च कर्तव्या जपहोमविधानतः ब्राह्मणान्वरये
त्तत्र स्वस्तिवाचनपूर्वकम् षोडश द्वादशाष्टौ वा श्रौतस्मार्तक्रियापरान् देवाः कपोत इत्यादि ऋग्भिः पंचभिर्जपम् संस्कृत्वाग्निं प्रयत्नेन स्वगृह्योक्तवि
धानतः ईशान्यां स्थापयेद्वह्निमुखां तेऽष्टोत्तरं शतम् प्रत्येकं समिदाज्यान्नैः प्रतिप्रणवपूर्वकम् यत इंद्र भयामहे स्वस्तिदा इति त्र्यंबकैः त्रिभिर्मंत्रैश्च जुहु

याद्विलान्याहुतिभिस्ततः जपाहुतीस्ततो हुत्वा कुर्यात्पूर्णाहुतिं स्वयम् विप्रेभ्यो दक्षिणां दद्यात् गोः शांतिं च ततो जपेत् ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः एवं यः कुरुते सम्यक् तस्माद्दोषात्प्रमुच्यते पिंगलायास्स्वरेप्येवं मधुवल्मीकयोरपि संपूर्णं मंदिरं हानिः शून्यसद्मनि मंगलम् प्रकारे च पुरद्वारे देवागारे च वीथिषु ग्रामस्यतत्फलं चैव गुरुकल्पनयाततः शांतिकर्मास्मिन्कार्यं पूर्वोक्तेन क्रमेण तु इति कपोतपिंगलामधुवल्मीकादिशांतिः अथ पल्ल्याः पतने शरठस्य चावरोहणे फलं शांतिं च पादयोर्जघनेपाण्योर्गुरे गुह्ये चजघयोः पल्ल्याः पतितयारोहे शरठस्य फलं न सत् अन्यत्र शुभदं पश्चात्स्नानं चैव स्नान माचरेत् दत्वा शिवालये दीपं मुखमाज्ये विलोकयेत् पल्लीशरठयो रूपं सुवर्णेन विनिर्मितम् तद्यो ग्यं प्रमाणेन वित्तशाठ्यविवर्जितः वस्त्रयुग्मेण संवेष्ट्य श्रोत्रियाय निवेदयेत् इति पल्लीशरठयोः शांतिः अथ नक्षत्रप्रसंगादश्विन्यादीनां तारकाउपजातिकयाह त्रित्र्यंगेति तथा च श्रीपतिः वह्निनिन विषु

त्रित्र्यंगपंचाग्निकुवेदवह्नयः शरेषुनेत्राश्विशरेन्दुभूकृताः वेदाग्निरुद्राश्वियमाग्निवह्नयोऽब्धयः शतद्विद्विरदाभ तारकाः ॥ ५० ॥ अश्वादिरूपंतुरगास्ययोनिक्षुरोऽनःशरणास्यमणिर्गृहं च ॥ ॥ ॥ ॥

गुणेषुकृताग्निभूतबाणाश्विनेत्रशरभूकृतयुगाब्धिरामाः रुद्राब्धिरामगुणवेदशतद्वियुग्मदंताबुधैर्निगदिताः क्रमशो भतारा इति नन्ववसंत ... विंशति भानि प्रतीयते मूलेष्वष्टाविंशतिरिति विशेषः उच्यते उत्तरा चैकद्राग्ध्यीयत्राव्दायश्चतस्रस्तारः पूर्वाषाढान्तराषाढयोर्ज्ञेयाः द्वे पूर्वापाढायांदति नारदेनापि तथैवा भिधानात् तत्राश्विन्यास्तिस्रस्ताराः एवं भरण्यादीनामाभिजितं तारासंज्ञेया तारामानोक्तिप्रयोजनमाह वराहः नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सत्सम्प वर्सैर्ज्वरस्यनाशो व्याधेरन्यस्य वा वाच्यः इति ॥ ५० ॥ अथाश्विन्यादीनामाकृतिमुपजातिकयोइताभ्यामाह अश्वादिरूपमिति अश्विन्यादिनक्षत्राणांरूपमाकृतिरुच्यते तत्राश्विन्यास्तुरगास्यम् अश्वमुखसदृशंरूपं भरण्यायोनिभगसदृशम् कृत्तिकायानापितक्षुरसदृशम् रोहिण्याअनःशकटसदृशम् मृगस्यशीर्ष स्य हरिणमुखसदृशम् आर्द्रायामणिसदृशम् पुनर्वसोर्गृहसदृशम् पुष्यस्यपृषत्कोबाणस्तत्सदृशम् ॥ ॥ ॥ श्रीरामकीजीवन

आश्लेषायाश्चक्राकारम् मघायाभवनंगृहसदृशम् पूर्वाफल्गुन्याः मंचःखट्वाकारम् उत्तराफाल्गुन्योः शय्याकारम् हस्तस्यहस्ताकारम्।
चित्रायामौक्तिकाकारंस्वात्याविद्रुमंप्रवालसदृशम् ५९ तोरणंवलिनिभमिति विशाखायास्तोरणाकारम् अनुराधायावलिर्भक्तः पुंजाकारः
ज्येष्ठायाः कुंडलाकृतिः मूलस्यसिंहपुच्छाकारः पूर्वाषाढायागजदंतसदृशम् उत्तराषाढायामंचकसदृशम् अभिजितस्त्रिकोणकारः श्रव।
णस्यत्रिचरणसदृशम् धनिष्ठायामर्दलसदृशम् शततारायावृत्तंवर्तुलं पूर्वाभाद्रपदायामंचकसदृशम् उत्तराभाद्रपदायायमलाभम् रेवत्या.
मर्दलमृदंगाकारस्वरूपमित्यर्थः ६० अथजलाशयारामदेवप्रतिष्ठामुहूर्त्तंसामान्यतोलग्नशुद्धिर्दैवताविशेषेणलग्नशुद्धिर्नसत्रविशेषं

पृषत्कचक्रेभवनंचमंचः शय्याकरोमौक्तिकविद्रुमंच ५९ तोरणंवलिनिभं
चकुंडलंसिंहपुच्छगजदंतमंचकाः त्र्यस्त्रिचत्रिचरणाभमर्दलौवृत्तमंचकय
माभमर्दलाः ६० जलाशयारामसुरप्रतिष्ठासौम्यायनेजीवशशांकशुक्रे दृश्ये
मृदुक्षिप्रचरध्रुवेस्यात्पक्षेसितेस्वर्क्षतिथिक्षणेवा ६१ रिक्तारवर्जेदिवसेतिशस्ता
शशांकपापैस्त्रिभवांगसंस्थैः॥ . ६ ॥ चोपजातिकपात्रेये णाहजलाशयेति रिक्तारेति शिवोन्मयुग्मेतिच ज

लाशयाः वापीकूपतडागादयः तेषांप्रतिष्ठाउत्सर्गः आरामउपवनम् तस्याप्युत्सर्गः सुरादेवाविष्ण्वादयः तेषांप्रतिष्ठापनम् सौम्यायनेउत्तरायणे तथाजी
वशशांकशुक्रेदृश्येउदितेसति तथामृदुध्रुवक्षिप्रचरनक्षत्रेषु तथासितेशुक्लपक्षेतथास्वर्क्षतिथिक्षणेवा ६१ तथारिक्तारवर्जेदिवसे रिक्तातिथिभौ.
मवारव्यतिरिक्ततिथिवारेषुएवंविधेदिनेप्रतिष्ठाजलाशयारामदेवानांक्रमेणकर्मार्हलोपभोग्यत्वपूजायोग्यत्वरूपाअतिशस्तास्यात् तथाचगार्ग्यः देवता
रामवाप्यादिप्रतिष्ठामुत्तरायणे माघादिपंचमासेषुकृष्णेप्यापंचमीदिनम् दक्षिणेत्वयनेकुर्वननंतफलमवाप्नुयात् परातुदक्षिणायनएवजलस्थितिसंभवः

भविष्यपुराणोक्तेः अथ क्रूरप्रकृतीनां दक्षिणायने पि स्थापनं कार्यमित्युक्तं वैखानससंहितायाम् मातृभैरववाराहनरसिंहत्रिविक्रमाः महिषासुरहं-
त्री च स्थाप्या वै दक्षिणायने नारद: विचित्रैष्वेव मासेषु माघादिषु च पंचसु यद्दिनं यस्य देवस्य तद्दिने तस्य सुस्थितम् अथ लग्नशुद्धिः शशांकपापैः चंद्र-
सूर्यभौमशनिराहुकेतुभिः त्रिभवांगसंस्थैः तृतीयषष्ठैकादशस्थानस्थितैरुपलक्षिते लग्ने तथा सत्खचरैः शुक्रबुधगुरुभिः व्ययाष्टगैः द्वादशाष्टम-
व्यतिरिक्ताखिलस्थानस्थैः सद्भिः देवादिप्रतिष्ठा अथ सूर्यो मृगेंद्रे सिंहलग्ने स्थाप्यः तथा कोऽब्रह्मा घटे कुंभे विष्णुर्युवतौ कन्यायाम् ६२ शिवो महादेवो नृ-
युग्मे मिथुने च पुनर्देव्यो दुर्गादयो द्वितनौ द्विस्वभावराशौ मिथुनकन्याधनुर्मीनलग्नेषु क्षुद्राः देव्यश्चतुःषष्टियोगिनीप्रभृतयः चरलग्ने मेषकर्कतुलामक-
रेषु सर्वे इमे उक्तानुक्ताश्च स्थिरे वृषसिंहवृश्चिककुंभेषु तथा: अथ पुष्ये ग्रहा इति ग्रहाश्चंद्रादयो पुष्यनक्षत्रे स्थाप्याः उपलक्षणमेतत् सूर्यस्य हस्तन-

व्यंत्याष्टगैः सत्खचरैर्मृगेंद्रे सूर्यो घटे को युवतौ च विष्णुः ६२ शिवो नृयुग्मे द्वितनौ च देव्याः क्षुद्राश्चरे सर्व इमे स्थिरर्क्षे पुष्ये ग्रहा
विघ्नपयक्षसर्पभूतादयोऽत्यश्रवणे जिनश्च ६३ ॥ इति मुहूर्त्तचिंतामणौ नक्षत्रप्रकरणम् द्वितीयम् ॥ २ ॥

क्षत्रे स्थापनम् इंद्रब्र-
ह्मणोः पुष्यश्रवणाभिजित्कुबेरस्कंदयोरनुराधायाम् दुर्गादीनां मूले सप्तर्षीणां स्वाधिष्ठितनक्षत्रे लक्ष्मीव्यासवाल्मीकमृगस्त्यानां पुष्ये स्थापनं त-
दुक्तं रत्नमालायाम् पुष्यश्रुत्यभिजित्सु वैश्रवणकयोर्वित्ताधिपस्यंदयोर्मैत्रे तिग्मरुचेः करे निर्ऋतिभे दुर्गादिकानां शुभे सप्तर्षयोऽयत्र वसंति धिष्ण्ये का-
र्याप्रतिष्ठा खलु तत्र तेषां श्रीव्यासवाल्मीकिघटोद्भवानां तथा स्मृतावाक्पतिभे ग्रहाणामिति अथ विघ्नपतिः विघ्नयोगणेशः पर्सो देवयोनिः सर्पा वासुक-
ह्यादयः भूतो देवयोनिः विद्याधरोऽप्सरोयक्षरक्षोगंधर्वकिंनराः पिशाचो गुह्यकः सिद्धो भूतोमी देवयोनय इत्यमरः आदिशब्देन राक्षसासुरप्रथमसरस्व-
तीप्रभृतयः अंत्ये रेवत्यां स्थाप्याः तथा श्रवणे जिनो बौद्धश्च स्थाप्याः उपलक्षणं चैतत् इंद्रकुबेरवर्जितानां लोकपालानां धनिष्ठायां स्थापनम् तथा वश्रीपतिः ग-
णपरिवृढः सो यक्षस्कंदभूतपिशाचसरस्वत्यादिकानां चपौष्णे श्रवसि सुगतनाम्नो वासवे लोकपानां निगदितमखिलानां स्थापनं हि स्थिरेषु ६३ इति श्री

श्रीगणेशायनमः अथसंक्रांतिप्रकरणंव्याख्यायते तत्रप्राग्राशितोपर राशौसंक्रमणंनामगमनंसंक्रांतिस्तस्याः नक्षत्रविशेषवशेनवारवशेन चसंज्ञांफलंच
सार्धवसंततिलकेनाह घोरार्केति विप्रांश्चेति अर्कसंक्रमणमर्कसंक्रांतिः उग्ररवौ उग्रनक्षत्रेषुरविवारे चेत्स्यात्तदा घोरेतिसंज्ञा साशूद्रान्क्षपयेन्नक्षपयतु
सादयेत् उग्ररवाविति उग्रैःसहितोरविः उग्ररविः तस्मिन्नुग्ररवाविति मध्यमपदलोपितत्पुरुषः ततःसप्तम्येकवचनम् अथवासमाहारद्वंद्वे अनित्यमा
गमशासनमितिनुमभावः एवंलघुविधावित्यादिष्वपिसमाधेयम् अथलघुनक्षत्रेषुविधौसोमवारेसूर्यसंक्रांतिर्ध्वांक्षीनाम्नीविशोवैश्यान्क्षपयेत् च
रर्क्षेभौमेचरनक्षत्रेभौमवारेवासूर्यसंक्रमणंचेन्महोदरसुतामहोदरीसंज्ञकाचोरान्क्षपयेत् ज्ञमैत्रेबुधवारेमैत्रसंज्ञनक्षत्रेषुवाऽर्कसंक्रांतिर्मंदाकिनी।
नाम्नीनृपतीन्राज्ञःक्षपयेत् स्थिरगुरौस्थिरनक्षत्रेषुगुरुवारेवार्कसंक्रांतिर्मंदानाम्नीविप्रान्ब्राह्मणान्क्षपयेत् मिश्रभृगौमिश्रनक्षत्रयोःभृगुवारे

घोरार्कसंक्रमणमुग्ररवौहिशूद्रान्ध्वांक्षीविशोलघुविधौचचरर्क्षभौमे चौरान्महोदरसुतान्नृपतीञ्ज्ञमैत्रेमंदाकिनीस्थिरगुरौक्ष-
पयेच्चमन्दा १ विप्रांश्चमिश्रभभृगौतुपशूंश्चमिश्रातीक्ष्णार्कजेंत्यजक्षयंखलुराक्षसीच त्र्यंशेदिनस्यनृपतीन्प्रथमेनि-
हंतिमध्येद्विजानपिविशोपरकेचशूद्रान् २ अस्तेनिशाप्रहरकेषुपिशाचकादीन्नक्तंचरानपितदानृपशुपालकांश्च ॥ ८ ॥

वाऽर्कसंक्रांतिर्मिश्रानाम्नीपशून्क्षपयेत् तीक्ष्णार्कजेतीक्ष्णसंज्ञकनक्षत्रेषुअर्कजेशनिवारेयाराक्षसीनाम्नी अंत्यजक्षयंवाअंत्यजान् चांडालान्क्षप-
यतीति अंत्यजक्षयंवास्यात् १ अथदिनरात्रिविभागेनसंक्रांत्यशुभफलंउत्तरायणदक्षिणायनसंज्ञांचसार्धवसंततिलकयाह त्र्यंशेइति अस्तेइति
अत्रार्कसंक्रमणमित्यनुवर्तते दिनमानेत्रिभिर्भक्तेत्र्यंशोभवति तत्रदिनस्यप्रथमेत्र्यंशेऽर्कसंक्रमणंनृपतीन्हन्ति मध्येद्वितीयत्र्यंशेद्विजान्ब्रा-
ह्मणान्हंति अपरकेतृतीयत्र्यंशेवैश्यान्हंतीत्येवंसर्वत्रव्याख्येयम् अस्तेसूर्यास्तसमयेऽर्कसंक्रमणंशूद्रान्हंति २ अथरात्रिसंक्रांतिफलम् रात्रिप्र-
थमप्रहरेपिशाचकान् आदिशब्देनभूतान् द्वितीयप्रहरेनक्तंचरान्राक्षसान् तृतीयप्रहरेनटान्नर्तकान् चतुर्थप्रहरेपशुपालकान् अभीरान् सूर्यो-
दयसमकालेऽर्कसंक्रमणंसकललिंगिजनंपाखंड्यादिकंहंतीत्यर्थः पाखंडाःसर्वलिंगिजनइत्यभिधानात् क्रूरसौम्यवारपरत्वेनफलमाह वसिष्ठः ॥ ८ ॥

रविरविजसोमवारेसंक्रांतौदिनकरस्यतन्मासेपित्तकफानिलजामयनरपतिकलहस्त्वरष्टिश्च बुधगुरुसितचंद्राहेसतिसंक्रांतावनामयत्वंनृणां क्षिति
पतिनिकरक्षेमंसस्यविरुद्धिर्विधर्मिणांपीडाम् जन्मनक्षत्रेसंक्रांतिफलंदीपिकायां यस्यजन्मर्क्षमासाद्यरविसंक्रमणंभवेत् तन्मासाभ्यंतरेतस्यरोगक्ले
शधनक्षयाः तगरसरोरुहपत्रैरजनीसिद्धार्थलोधसंयुक्तैः स्नानंजन्मन्यक्षेरविसंक्रांतौनृणांशुभदम् अन्यच्चवसिष्ठः अजकन्याझषकर्किणिसंक्रां
तौयदिनचेद्वर्षं आमयमरणंभूभृतयुद्धमनर्घ्यत्वरष्टिश्च वृषवृश्चिकतुलामकरेवृष्टिःस्यात्संक्रमविषये विस्फोटामयतस्करपीडावृष्टिःकृशानुभयं अ
यनसौम्ययाम्यायनमिति मकरकर्कटयोःसंक्रांतिश्चेत्तदाक्रमेणसौम्यायाम्यायनंनिरुक्तम् मकरेउत्तरायणंकर्केयाम्यायनंस्यात् ३ अथावशिष्टसंक्रांति
षुषडशीत्यादिसंज्ञानुष्टुभाह षडशीत्याननमिति धनुर्मिथुनकन्यामीनेषुअर्कसंक्रमणंषडशीत्याननंषडशीतिमुखसंज्ञंस्यात् तुलामेषयोः संक्रांति

**सूर्योदयेसकललिंगिजनंचसौम्ययाम्यायनंमकरकर्कटयोर्निरुक्तम् ३ षडशीत्याननंचापनृयुक्कन्याझषेभवेत् तुलाजौ**
**विषुवंविष्णुपदंसिंहालिगोघटे ५ संक्रांतिकालादुभयत्रनाडिकाःपुण्यामताःषोडशषोडशोष्णगोः ॥ छ ॥ श्रीः ॥**

विषुवसंज्ञा वृषसिंहवृश्चिककुंभेष्वर्कसंक्रांतिर्विष्णुपदसंज्ञकाः ५ संक्रांतौगौणमुख्यकालमुपजात्याह संक्रांतिकालादिति गणितमार्गेणाय
उष्णगोः सूर्यस्यसंक्रांतिकाल आगतः ततउभयत्रऽपूर्वतः परतश्चषोडशषोडशनाड्योघटिकाः पुण्यसंपादकत्वात्पुण्यामताः ब्रह्मसिद्धांतेसंक्रांतेः
प्राक्परस्ताच्चसार्द्धाःषोडशनाडिकाः त्रयस्त्रिंशत्संक्रमस्यपुण्याःसर्वस्यनाडिकाः अनेनसंक्रांतेःपुण्यकालस्तुषोडशोभयतः कलाइतिस्मृतिवाक्येपूर्वतः
परतश्चाष्टौअष्टौघटिकाइत्येवंषोडशेतिव्याख्यात्तत्तदपाकृतंभवति सूर्यसिद्धान्तेपिअर्कमानकलाःषष्ट्यागुणितामुक्तिभाजिताः तदर्धनाड्यःसंक्रांतेरर्वा
क्पुण्यंतथापरेइति अथनिशीथतइति निशीथतोऽर्धरात्रात् अर्वाक् पूर्वपरत्रपश्चाच्चसंक्रांतिकालेसति पूर्वापराहतिमपूर्वभागयोः पूर्वापरयोरह्नोःक्रमेणां
तिमपूर्वभागयोरुभयत्रषोडशषोडशघटिकाःपुण्याइतिपूर्वेणसंबंधः अयमर्थः॥ ॥ छ ॥ ॥ श्रीरामचंद्रार्पणमस्तु॥

यद्यर्द्धरात्रात् प्राक् संक्रांतिस्तदापूर्वदिनस्य उत्तरार्द्धं पुण्यम् यद्यर्द्धरात्रादुपरिसंक्रांतिस्तदोत्तरदिनस्य पूर्वार्द्धमेव पुण्यमित्यर्थः ५ अथार्द्धरात्रसंक्रमणे मक
रकर्कटयोश्च विशेषमुपजातिकयाह पूर्णेइति पूर्णे निशीथे अर्द्धरात्रौ यदि संक्रमः स्यात्तदा दिनद्वयं पूर्वदिनं परदिनं च पुण्यमुक्तम् उक्तोच यद्यर्द्धरात्र एव स्या
त्संपूर्णे संक्रमे रवेः तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु अथेति अथानंतरमुदयास्तात् सूर्योदयात् सूर्यास्ताच्च पूर्वं परस्ताच्च यदि याम्यसौम्यायने कर्कमक
रसंक्रांतौ भवतः तदा पूर्वदिने पुण्ये स्यातां अयमर्थः सूर्योदयात् पूर्वं कर्कसंक्रमणं स्यात्तदा पूर्वदिने एव पुण्यकालो नोत्तरदिने तथा यदि सूर्यास्तानंतरं मकरसंक्रां
तिः स्यात्तदोत्तरदिन एव पुण्यकालो न पूर्वदिने गार्ग्यः यदास्तमानवेलायां मकरं याति भास्करः प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेहनि अर्द्धरात्रे वदूर्ध्वं वा संक्रांतौ दक्षि
णायने पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविरिति वाशब्दार्थे प्रदोषलक्षणं स्कान्दे त्रिमुहूर्त्तः प्रदोषः स्याद्भावस्तंगते सतीति ६ अथादयास्तादि तिवचनस्यापवादमि

निशीथतोर्वागपरत्र संक्रमे पूर्वापराह्नांतिमपूर्वभागयोः ५ पूर्णे निशीथे यदि संक्रमः स्याद्दिनद्व
यं पुण्यमथोदयास्तात् पूर्वं परस्ताद्यदि याम्यसौम्यायने दिने पूर्वपरे तु पुण्ये ६ संध्या त्रिनाडीप्रमि
तार्कबिंबाद्दर्द्धोदितास्ताद्धऊर्ध्वमत्र ॥ ६ ॥ ९ ॥ ६ ॥ श्रीकाली ॥

इवज्रयाह सन्ध्यादिति अर्कमण्डलाद्धोदितादर्धास्ताच्चाधऊर्ध्वं क्रमात्त्रिभिर्नाडीभिर्मिता संध्या संध्याकालः स्यात् अर्द्धोदितार्कबिंबात् पूर्वं त्रिनाडीप्रमि
ता प्रातःसंध्या तथार्धास्तादर्कबिंबादुपरि त्रिनाडीमिता सायंसंध्येत्यर्थः तत्प्रयोजनमिह अत्रेति अत्र प्रातःसंध्यायां सायंसंध्यायां च क्रमात् याम्यसौम्ये अय
ने स्तः तदानीं परपूर्वदिवसौ पुण्यौ यदि प्रातःसंध्यायां दक्षिणायनप्रवृत्तिः तदा सूर्योदयानंतरं संपूर्णमहः पुण्यम् तथा यदि सायंसंध्यायां उत्तरायणप्रवृत्तिस्तदास्त
मयात्पूर्वं संपूर्णमहः पुण्यं स्यादित्यर्थः तदाह नारदः सूर्यास्तमनसंध्यायां यदि सौम्यायनं भवेत् तदोदयादहः पुण्यं पूर्वाह्णः पूर्वतोयदीति उदयसंध्यास्तसंध्ययोर्लक्षणं
तत्रैव अर्धार्कास्तमनात्संध्याघटिकात्रयसंमिता ॥ ६ ॥ ९ ॥ ६ ॥ ९ ॥ श्रीसत्यनारायणाभ्यां नमः इति ॥

तथैवार्द्धोदयास्तात्घटिकात्रयसंमितेति एवंसत्यर्कबिंबस्याधोस्तादर्धोदयाद्वाक्रमात्पश्चात्प्राक् त्रिघटिमिता अस्तसंध्योदयसंध्यवोच्यते
तत्रास्तसंध्यायांयदिमकरसंक्रमः स्यात्तदा दिनएवपुण्यकालोनोत्तरदिने यद्यस्तसंध्यामतिक्रम्यमकरसंक्रांतिस्तदोत्तरदिनएवपुण्यकालोनपू
र्वदिने एवंयद्युदयसंध्यायांकर्कसंक्रांतिस्तदासूर्योदयानंतरमेवपुण्यकालोनप्राग्दिने यद्युदयसंध्यातः प्राक्कर्कसंक्रमस्तदाप्राग्दिनएवपुण्य
कालोनोत्तरदिनेइतिनिष्कृष्टोऽर्थः अथ रात्रौस्नानंनकुर्वीतदानंचैवविशेषतइति रात्रौस्नानदानादिनिषेधेपि नैमित्तिकंतुकुर्वीतस्नानंदानं
चरात्रिष्वितिक्रमंतुवाक्यशेषात् ग्रहणजननेसंक्रांतावुपरागेसूर्यचंद्रयोर्नित्यम् रात्रावपिकर्तव्यंस्नानंदानं विशेषतोनृणामितिवसिष्ठवच
नात् राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु स्नानदानादिकंकार्यंनिशिकाम्यव्रतेषुचेति रात्रौसंक्रमणंरात्रौस्नानप्राप्तम् तत्कर्कमकरसंक्रां
तौस्नानदानादौदेशभेदसिद्धशिष्टाचारेणव्यवस्थावगंतव्या तत्रगौर्जरास्तु ग्रहणवदयनइतिस्वीयसूत्रम् स्नानंदानंग्रहणवत्सौम्ययाम्यायनइ

चेद्याम्यसौम्येअयनेक्रमात्तः पुण्यौतदानीपरपूर्वघस्रौ ७ याम्यायनेविष्णुपदेचाद्यामध्यास्तुलाजयोः ॥ छ ॥

यइतिकश्यपसंहितोक्तंवातुलज्ञास्तुचायनसंभवेसतिसच्यावेवस्नानादिकंकुर्वंति दक्षिणात्यास्तुकार्मुकंतुपरित्यज्यझषंयातिदिवाकरः इत्या
दिभविष्योत्तरादिवाक्यमंगीकृत्यदिवसएवस्नानादिकंकुर्वन्ति तत्रापिनारदोक्तसंध्याकालसंक्रमेविशेषोध्येयइत्यलम् ७ अथपूर्वपराःषोडशघ
टिकाःपुण्याइति पूर्वसामान्येनोक्तमिदानींविष्णुपदादिविशेषमनुष्टुभाह याम्यायनइति कर्कसंक्रांतौविष्णुपदेवृषसिंहवृश्चिककुंभसंक्रांतिषुसंक्रां
तिकालादाद्याः प्रथमाःषोडशघटिकाः अतिपुण्यदाः स्नानदानादौअनंतपुण्यदाज्ञेयाः अग्निमास्तुनतथातुलाजयोः तुलामेषयोः मध्याउभयतःषो
डशघटिकाः संक्रांतिकालात्प्रागष्टौपरतश्चाष्टाविति दीपिकाकारोव्याख्यातंयदुक्तंगुरुणा वर्तमानेतुलामेषेनाड्यस्तूभयतोदशेतिमध्यमात्तृतीयां
शाभिप्रायेणेतिज्ञेयम् तथाषडशीत्याननंमिथुनकन्याधनुर्मीनसंक्रांतिषु ॥ छ ॥ ६ ॥ ३ ॥ श्रीः ॥

सौम्यायने मकरसंक्रांतौ च संक्रांति कालात्परा ऽस्मिन् षोडश घटिका अतिपुण्याः प्रथमस्तु न तथा एवं निर्णीते पुण्यकाले स्नानादिकं विधेयं स्न
स्नानाद्यकुर्वतः प्रत्यवायमाह वसिष्ठः विषुवत्ययने ग्रहणे संक्रांतौ पुण्यदिवसे वा पितृत लिप्निनकरोति हि ह त्वाशापं व्रजति तत सप्त पित्वा षडशीत्यां तु यद्दा
ने विषुवद्द्वये दृश्यते सागरस्यांतस्तस्यां तोनेव दृश्यत इति मरद्वाजोक्तेः अयं च निर्णयश्चन्द्रादीनामपि संक्रमे ज्ञेयः तत्र हेमाद्र्यादौ कालनिर्णयकारा
दिभिः याः पुण्यकालघटिका उपनिबद्धास्ताः स्थूलाः तेन षष्टिघ्न बिंबं ग्रह भुक्तिभक्तमित्यादिप्रकारेण ग्रह मध्यत्र भुक्ति मध्यम विवेरानीताः सूक्ष्मा
घटिका लिख्यंते स्फुटमतिस्फुट विंबैश्च साध्यन्ते ता अतिसूक्ष्मास्तासामतिपतत्वात् श्लोकं अनुपातिवधः मध्यमास्तु पथानाड्यो रामगुणा ३३ रवे
रथ विधोः षट्द्रोः पलैर्युक्ताः हयम २। २६ भौमस्याब्धिपलैर्युता नव ९। ४ विदो युक्ताः पलैः रवाश्विभिः षड् नाड्यो ६। २० ष्टगजा ८८ गुरोरथ भृगोर्नंदाः पलैरष्ट
भिः ९। ८ पुण्याः सुस्फुटाः १६० शनेरुभयतीरास्य षयोः संक्रमेरिति ८ निरयनांशसंक्रांतिमभिधायेदानीं सायनांशसंक्रांतिसपुण्यकालमुपजात्याह तथेति यथार

षडशीत्यानने सौम्ये परा नाड्योतिपुण्यदाः ८ तथायनांशाः स्वरसाहताश्च स्पष्टार्कगत्या विहृता दिनाद्यैः ॥ ६ ॥ ५ ॥

शिसंक्रमा बहुपुण्यदास्तथा चलसंक्रमा अपीति व्यवहितस्तथा शब्दः अयनांशाः षष्ट्या गुण्याः स्पष्टसूर्यगत्या विहृता लब्धैर्दिनाद्यैर्दिनं घटीपलैः कृत्वा मेषादि
द्वादशसंक्रमाः स्युस्ते चलसंक्रमा दाने जपादौ जपश्राद्धहोमादौ बहुपुण्यदा भवंति पुलस्त्यः अयनांशसंस्कृतो भानुर्गोले चरति सर्वदा अमुष्या राशिसंक्रांति
स्तुस्त्रः कालविधिस्तयोः स्नानदानजपश्राद्धव्रतहोमादिकर्मभिः सुकृतं चलसंक्रांतावक्षयं पुरुषोश्नुत इति जाबालिरपि संक्रांतिषु यथा कालस्तदा
येष्वयने तथा अयने विंशतिः पूर्वा मकरे विंशतिः परेति अत्र मकरायणे पूर्वा विंशतिर्घटिकाः पुण्याः मकरसंक्रांतौ तु परा विंशतिर्घटिकाः पुण्यकालः म
कर्षस्यातिरिक्तैकादशसंक्रांतिषु तत्तत्संक्रमवत् पुण्यकालो ज्ञेयः अयनांशानयनादिविचारः सिद्धान्तादवगंतव्याः ईश्वरेच्छा लोकादृष्टवशात्तत
द्राश्यादिभागस्य सूर्यतेजः ॥ ६ ॥

संपर्कं श्चलसंक्रमः मंडलसंक्रमश्चराशिसंक्रमइतिविषयविवेकः तत्रनिरयनगणनयैवसकलव्यवहारः साध्यः सायनगणनातुनियतविषयेव अ
यनांशैः चरान्तव्यालग्नेक्रांतौ चरागमे विचित्रिभेसत्त्रिभेपातेतथाहक्कर्मपातयोरिति एवंद्वयोरपिमानयोरसंकीर्णोव्यवहार इतिसर्वमनाकुलम् पुण्यका
लनिर्णयविधसंक्रमेपिज्ञेयः पूर्वलिखितवाक्यस्यस्वरसात् ९ अथसंक्रांत्युपयोगाज्जघन्यबृहत्समनक्षत्राण्युपजात्याह सममिति मृदुक्षिप्रवसुश्रवो
ग्निमघात्रिपूर्वास्त्रपभंसमम् अस्त्रपभंमूलः एतानिपंचदशभानिसमसंज्ञानिज्ञेयानि ध्रुवद्विदैवादितिभंबृहत्स्यात् ध्रुवादिषड्भानिबृहत्संज्ञकानि सा
र्पांबुपार्द्रानिलशाक्रयाम्यंजघन्यंस्यात् आश्लेषादिषड्भानिजघन्यसंज्ञानि १० अथसंक्रांतिप्रयोजनमुपेंद्रवज्रयाह जघन्यभेइति जघन्यनक्षत्रेऽर्कसंक्रमणे

मेषादितःप्राक्चलसंक्रमाःस्युर्दानेजपादौबहुपुण्यदास्ते ९ समंमृदुक्षिप्रवसुश्रवोग्निमघात्रिपूर्वास्त्रपभं
बृहत्स्यात् ध्रुवद्विदैवादितिभंजघन्यंसार्पांबुपार्द्रानिलशाक्रयाम्यम् १० जघन्यभेसंक्रमणेमुहूर्त्ताःशरेंदवो
१५ बाणकृता ४५ बृहत्सु खरामसंख्यासमभेमहर्घसमर्घसाम्यंविधुदर्शनेपि ११ अर्कादिवारेसंक्रांतौ
कर्कस्याब्दविशोपकाः॥ छ ॥ ॥ छ ॥ श्रीजानकीवल्लभोविजयते ॥

पंचदशमुहूर्ताज्ञेयाः बृहन्नक्षत्रेऽर्कसंक्रमणेबाणकृताःपंचचत्वारिंशन्मुहूर्ताज्ञेयाः समनक्षत्रेऽर्कसंक्रमणेखरामसंख्यास्त्रिंशन्मुहूर्ताज्ञेयाः उक्तंचनारदेनतासांच
मानंघटिकास्त्रिंशन्नवतिषष्टय इतिफलमाह महर्घसमर्घसाम्यमिति पंचदशमुहूर्तायांसंक्रांतौसर्वमन्नंमहर्घंदुष्प्रापंभवति पंचचत्वारिंशन्मुहूर्त्तसंक्रांतौसमर्घं
त्रिंशन्मुहूर्तायांसंक्रांतौसमंयथास्थितंभवति विधुदर्शनेपीति चंद्रदर्शनेप्येवमेवफलंवाच्यम् अयमर्थः जघन्यभेचंद्रदर्शनेमहर्घम् बृहन्नक्षत्रेचंद्रदर्शनेस
मर्घम् समभेचंद्रदर्शनेसाम्यम् ११ अथप्रसंगात्कर्कसंक्रांतौमेघविंशोपकाननुष्टुभाह अर्कादीति कर्कसंक्रांतौअर्कादिवारेसति एतेअब्दविंशोपकाज्ञेयाः
यथा रविवारेकर्कसंक्रांतौदशविंशोपकाः एवंसोमेविंशतिः भौमेष्टौ ॥

ते द्वादश गुरौ धृत्योष्टादश शुक्रेष्टादश शनौ पंचेत्यर्थः १२ अथ कीदृश स्य रवेः संक्रमो जातस्तत्फलमिदं वज्रयाह स्वातीति तिलेत्यादि रविस्तैतिले क
रणे नागकरणे चतुष्पदे चकरणे कृत्वः संक्रमितः स्यात् गरादि पंचगरे वणिजे भद्रायां बवे बालवे च निविष्टः संक्रमितः स्यात् किंस्तुघ्ने सकोलवे शकु
नौ च ऊर्ध्वः ऊर्ध्वे स्थितः संक्रमितः स्यात् इह करणाधिकरणकसंक्रांतौ रविः अर्घवर्षणे अर्द्धे मूल्ये वर्षणे वृष्टौ उपलक्षणत्वात् अन्ये पि क्रमात् निष्टः
समः श्रेष्ठः स्यात् अयमर्थः कृत्वः रविसंक्रमो अर्घवर्षणधान्येषु निष्टः महार्घवृष्ट्याभाव धान्याभावकारकाः एवं विनिष्टः समः तथोर्ध्वः श्रेष्ठः उ
क्तं च श्रीपतिना धान्यार्घवृष्टिषु भवेत् क्रमशः स्तत्व निष्टसमध्येष्टतेति १३ अथ रविसंक्रांतेः करणपरत्वेन वाहन वस्त्रायुधभक्ष्यलेपनजाति पुष्पाणि स
फलानि शार्दूलविक्रीडितत्रयेणोपजातिकया चाह सिंहेति खड्गेति यावश्वेति स्यान्मल्लिकेति बवतो बवमारभ्यैकादश करणेषु क्रमेण वाहना

॥ दिग्रोनरैवा गजाः सूर्या धृत्योष्टादश सायकाः १२ स्वातीतिले नागचतुष्पदे रविः कृत्वो निविष्टस्तु गरादि पंचके किंस्तु
घ्न ऊर्ध्वः शकुनौ सकोलवे निष्टः समः श्रेष्ठ इहार्घवर्षणे १३ सिंहव्याघ्रवराहरासभगजा वाहद्विषट् घोटकाः श्वा
जो मेषश्चरणायुधश्च बवतो वाहा रवेः संक्रमे ॥ ❀ ॥ ❀ ॥ ❀ ॥ श्रीविश्वनाथप्रसन्नोस्तु ॥

दीनि स्युः वाहनानि सिंहादीनि रासभो गर्दभः वाहनाद्विषन्महिषः तुलायां महिषोह्याह द्विषत्कासर सैरभाविति अमरः अजो मेषः चरणायुधः कुक्कुटः नारदे
नात्र विशेष उक्तः खरवाल्हीकवर्गेषु संक्रांतेर्धिष्ण्यवाहनम् अन्यदेशेषु तिथ्यर्धवाहनाः स्युर्बवादय इति अश्विन्यां यदा संक्रांतिस्तदाश्विन्याः यो अश्व
स्तद्वाहनं स्यात् खरवादिदेशेषु एवं सर्वनक्षत्रेषु अथ वस्त्रं श्वेतादि हारितं नीलवर्णं पांडु अरुणवर्णम् आरक्तं मलकं कवर्णम् कालं श्यामम् असि
तं धूम्रवर्णरहितं गर्दभवर्णमित्यर्थः दिग्वस्त्राभावः घनाभं मेघवर्णम् अथ शस्त्रम् भुशुंड्यादीनि आयुधानि प्रसिद्धानि अथ भक्ष्यम् अन्नं भक्तः परमान्नं
पायसम् भैक्ष्यं भिक्षासमूहः पक्वान्नमपूपादि चित्रितान्नं हरिद्रादिरंजितम् ॥ ❀ ॥ ❀ ॥ ❀ ॥ श्रीकालीप्रसन्नोस्तु ॥

अथलेपो विलेपनम् मृगनाभिः कस्तूरी कुंकुमं केशरम् पाटीरं चंदनम् मृत्प्रसिद्धा रोचनं गोरोचनमिति १४। १५ यावो लक्तकः ओतुर्मार्जारो माज्जी
रोमा[illegible] माषया जवादिरिति निशा हरिद्रा अंजनं कज्जलम् कालागरुरगरुविशेषः चंद्रकः कर्पूरः अथ जातिः संकरभवा अनुलोमजाः प्रतिलोमजा
[illegible] अथ पुष्पम् पुंनागकं नागकेशरपुष्पम् मल्लिका वल्लिः जपा ओड्रपुष्पं जासवनम् शेषाणि प्रसिद्धानि सर्वत्र क्वचिद्द्योप्युक्तम् शिशुः
कुमारश्च गतालंका युवा प्रौढा प्रगल्भा च ततश्च वृद्धा वंध्या तिवन्ध्या च सुतार्थिनी च प्रव्राजिका चेति ववादिकानामिति तथा केचित् भोजनम्

वस्त्रं श्वेतस्य पीतहारितकपांडुरक्तकालासितं चित्रं कंबलदिग्घनाभमथ शस्त्रं स्याद्भुशुंडी गदा १४ खड्गो दंडशरासितोम
रमथो कुंतश्च पाशांकुशौ शस्त्रं बाणस्तथ भस्यमन्नपरमान्नं भैक्ष्यपक्वान्नकम् दुग्धं दध्यपि चित्रितान्नगुडमध्वाज्यं तथा श
र्करा थो लेपो मृगनाभिकुंकुममथो पाटीरमृद्रोचनं १५ यावश्चोतुमरो निशांजनमथो कालागरुश्चंद्रको जातिर्देवतभूतस
र्पविहगाः पश्वेण विप्रास्ततः क्षत्रावैश्यकशूद्रसंकरभवाः पुष्पं च पुन्नागकं जाती वाकुलकेतकानि च तथा बिल्वार्कदूर्वा
बुजम् १६ स्यान्मल्लिकापाटलिका जया च संक्रांतिवस्त्राशनवाहनादेः नाशश्च तद्दृत्युपजीविनां च स्थितोपविष्टः स्वपतां च
नाशः १७ संक्रांतिधिष्ण्याधरधिष्ण्यतस्त्रिभे स्वभे निरुक्तं गमनं ततोंगभे॥ त्रमप्युक्तं सुवर्णरौहताम्राणि लोहसीसत्रपुस्तथा कांस्यपाषाण

काष्ठं च मृत्साद्यं वेणुपात्रकमिति एवं संक्रमकाल्यानि वस्त्राशनवाहनादीन्यभिहितानि आदिशब्देनायुधलेपनजातिपुष्पाणि तेषां नाशो भवेत् च पु
नस्तद्वृत्युपजीविनां वस्त्रादिवृत्त्युपजीविनां नाशो भवेत् स्थितोपविष्टः स्वपतां च वस्त्राद्ये तिलेदृत्यादिना सूत्रलादीन्युक्तानि तद्रूपविशिष्टानां नाशः स्यादि
त्यर्थः १६ १७ अथ संक्रांतिवशेन प्रतिमनुष्यं शुभमुपजातमाह संक्रांतीति संक्रांतिर्यस्मिन्नक्षत्रे स्यात्तत्तोऽधरधिष्ण्यं पूर्वं नक्षत्रं तस्मात् स्वजन्मनक्षत्रं
गण्यं तच्चेत्प्रथमत्रिभे भवति तदा गमनं यात्रा स्यात् ततः प्रथमत्रिकानंतरं अंगभेषण्नक्षत्रेषु यदि स्वभे तदा सुखं स्यात् ततस्त्रिभे॥ छि॥ ॰ ॥

पीडनम् शरीरपीडा पुनरंगभे ऽशुभकं वस्त्रादिप्राप्तिः ततः त्रिभे स्वभे ऽर्थहानिः ततो रसभे स्वभे धनागमो प्राप्तिः स्यादित्यर्थः अशुभफलदा॰
यां संक्रांतिदानमाह नारदः तिलोपरि लिखेच्चक्रं त्रित्रिशूलं त्रिकोणकम् तत्र हेम विनिक्षिप्य दद्याद्दोषापनुत्तये इति १८ अथ कार्यविशेषग्र
ह विशेषवलं सामान्यतो ग्रहबलं चोपजात्याह नृपेक्षणमिति रवेरिति ल्यपूलोपपंचमी सूर्यबले सति एतानि कार्याणि कार्याणि यथा रवेः अर्क
बले वा रेवा नृपेक्षणं राजदर्शनं विधेयं एवं चंद्रादावपि व्याख्येयं चंद्रे सर्वकृतिः सर्वकृत्यानि भौमे संगरो युद्धम् बुधे शास्त्रमध्ययनं अध्यापनं वा गुरौ॰
विवाहः शुक्रे गमनं शनौ दीक्षणाभ्यागमादि दीक्षा विधेयेत्यर्थः अथेति ताराबलतो विधुः शुभो ज्ञेयः यदा चंद्रसंक्रमणं स्यात्तदा ताराबलं चेत्तदा स
पाद्दिनद्वयं चंद्रो ऽशुभोपि शुभः तारादौष्ट्ये शुभोप्यशुभः एवंविधो बलाद्रविः संक्रमणे ऽशुभोपि मासपर्यंतं शुभः शुभस्तु सुतरां समीचीन एव चंद्र॰

**स्क्ररवं त्रिभे पीडनमङ्गभे ऽशुभकं त्रिभे ऽर्थहानी रसभे धनागमः १८ नृपेक्षणं सर्वकृतिश्च संगरः शास्त्रं विवाहो गमदीक्षणे**
**रवेः वीर्ये ऽथ ताराबलतः शुभो विधुर्विधोर्बले ऽर्के ऽर्कबले कुजादयः १९ स्पष्टार्कसंक्रांतिविहीन उक्तो मासो ऽधिमासः क्षयमा॰ ॥ सकृत्तु ॥ ६**

दौष्ट्ये शुभेपि अशुभ इत्यर्थः परे भौमादयः संक्रांतिचिकीर्षवस्तत्तद्बलतः सूर्यबलाद् शुभा अपि शुभा ज्ञेयाः रविदौष्ट्ये तु शुभा अ
प्यशुभाः १९ अथाधिमासक्षयमासयोर्लक्षणमुपजात्याह स्पष्टार्केति शुक्लप्रतिपदि दर्शांतश्चांद्रो मासः स चेत् स्पष्टसूर्यसंक्रांत्या विहीनो रहितो भवेत्त
दाधिमास उक्तः चांद्रो मासो ह्यसंक्रांतो मलमासः प्रकीर्तित इति ब्रह्मसिद्धांतोक्तेः तु विशेषकदाचित्स चांद्रो मासो द्विसंक्रमः द्वौ संक्रमौ यस्मिन्स सो द्विसंक्र॰
गः स्फुटसूर्यसंक्रांतिद्वययुतस्तदा क्षयमाससंज्ञक उक्तः आद्यंतदर्शयोर्मध्ये भानोरेव तयोर्यदा संक्रांतिद्वितयं चेत्स्यात्क्षयमासः स उच्यते इति वसिष्ठोक्तेः
तत्र क्षयमासे जातानां वर्षापने मृतानां श्राद्धे च तिथेर्विभ्रमयोः पूर्वोत्तरदलयोः संबन्धेन प्रथमांतसंज्ञा मासौ स्तः स्याताम् तिथिपूर्वार्धजातानां मृतानां च पूर्वेना
सेव वर्धापनं श्राद्धं च विधेयं तिथ्युत्तरार्धे जातानां मृतानां चोत्तरमासे ॥ ६ ॥ ॥ ६ ॥ श्रीजानकीवल्लभो विजयते ॥

वर्धापनश्राद्धं च विधेयम् तिथ्यर्धे प्रथमे पूर्वो परस्मिन्नपरस्तथा मासाविति बुधै श्चिंत्यो ऽस्य मासस्य मध्यगे इति मासादिलक्षणभेदविचारस्तु ग्रंथ
गौरवभयान्न लिखितः २० इति श्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायां स्वकृतमुहूर्त्तचिंतामणिटीकायां प्रमिताक्षरायां संक्रांतिप्रकरणं तृती
यम् समाप्तम् ३ अथ ग्रन्थांतरसंग्रहः योगिनी स्थितकाष्ठातः संक्रांतेरागमो मतः चंद्रस्य दिशि दृष्टिः स्याद्गमनं वारदिक् स्मृतम् इति क्वचित् र
वौ संक्रमणे पूर्वे मुखं जीवे तु उत्तरम् प्रत्यङ्मुखं शनौ सोमे शेषे दक्षिणतो मुखं इति ववे पूर्वमुखं प्रोक्तं बालवे यमदिङ्मुखम् कौलवे पश्चिममुखं तैति
ले चोत्तरे मुखम् गरे वायव्यदिग्वक्त्रं वणिज्याग्नेयदिङ्मुखम् भद्रायामीशदिग्वक्त्रं शकुने नैर्ऋते मुखम् चतुष्पदि च पाताले नागे चोर्ध्वमुखी भवे
त् किंस्तुघ्ने सर्वदिग्वक्त्रं संक्रांतिमुखलक्षणम् अथ दृष्टिः चंद्रे गुरौ दृष्टि विदिक् कृशानौ सूर्ये सिते नैर्ऋतिकोणगा दृक् धात्रीसुते दृक् यवने निरुक्ता

द्विसंक्रमात्तत्रविभागयोस्तः तिथेर्हि मासौ प्रथमांत्यसंज्ञौ २० इति श्रीमुहूर्त्तचिंतामणौ संक्रांतिप्र
करणं समाप्तम् तृतीयम् ३ सूर्योरसांत्यस्वयुगेग्निनन्दे शिवाक्षयोर्भौमशनी तमश्च ॥ ॥

बुधे शनौ रुद्रदिशि क्षणं भवेत् अथ गमनं मंदे चंद्रे गमः सौम्ये बुधे भौमे च वारुणे रवौ शुक्रे गमो याम्ये गुरौ प्रागागमनं स्मृतमिति अथ गोचरप्रकरणं व्या
ख्यायते तत्र जन्मराशेः सकाशाद्ग्रहणं च रवेः शनैश्च शुभाशुभफलं तद्गोचरफलमित्युच्यते तत्र रविचंद्रयोर्गोचरफलमुपजातिकयाह सूर्य इति र
सांत्ये इत्यादौ समाहारद्वंद्वः शिवाक्षयोरित्यादावितरेतरयोगः अंबराब्धाविव यामागमशासनमिति नुमभावो ज्ञेयः एवं सर्वत्र स्वजन्मराशेरिति पंचमश्लो
कस्थमत्राध्याहार्यम् ततः सूर्यः क्रमात् रसांत्येषु शुभो विद्धश्च स्यात् सूर्यो जन्मराशेः सकाशात् षष्ठस्थाने शुभः यदि तत्त एव जन्मराशेर्द्वादशस्थानस्थो अंत्ये
ग्रहांतरैर्विद्धः सूर्यः शुभोप्यशुभफलदाता अत्र शनेः सूर्यपुत्रत्वात्तद्वेधो नांगीकृतः यतः पितुर्जनकस्य सुतसंबंधिनं वेधनं नेच्छन्ति आहुः सुतस्यापि पि
तृसंबंधिनं वेधं नाहुः तथा रवयुगे जन्मराशेर्दशमे सूर्यः शुभः चेच्चतुर्थस्थाने शनिवर्जिता अन्ये ग्रहाः ॥ ॥ ॥ ॥

स्युस्तदा विद्ध इत्येवं श्लोकत्रयं सम्यग्व्याख्येयम् तथाग्निनंदेवृतीयनवमयोः शिवाख्ययोरेकादशपंचमयोः क्रमाच्छुभो विद्धश्च ज्ञेयः भौमेति भौमशनी । तमो
गुश्चत्रयोपि जन्मराशितः रसांकयोः लाभशरेगुणांत्ये क्रमाच्छुभविद्धाश्चेत्यर्थः परंतु शनेः सूर्यवेधो नास्तीत्युक्तं प्राक् चंद्रोंबराब्धोइत्यग्रे १ अथबुधगुरुशुक्र
काणां गोचरफलं त्वपजानिकेन्द्रवज्राभ्यामुपजातिकापूर्वार्द्धेनाह चंद्र इति जन्मभात् अंबराब्धो गुणनंदयोः लाभाष्टमे आद्यशरे रसांत्येनगद्वये चन्द्रः ।
क्रमाच्छुभो विद्धश्च ज्ञेयः चंद्रस्य बुधं वेधो नास्ति अथज्ञ इति द्विशरे अब्धिरामे रसांकयोः नागविधो खनागे लाभव्यये ज्ञो बुधः क्रमात् शुभो विद्धश्च ज्ञेयः ।
अत्र चंद्रवेधो नास्ति अथ देवगुरुरिति जन्मभात् शराब्धौ द्यंसेनवांशे अद्रिगुणे शिवाहौ देवगुरुर्बृहस्पतिः क्रमाच्छुभो विद्धश्च ज्ञेयः अथशुक्र इति
जन्मराशेः सकाशात् कुनागे द्विनगे अग्निरूपे वेदांबरे पंचनिधौ गजेषौ नंदेशयोः भानुरसे शिवाग्नौ शुक्रः क्रमाच्छुभो विद्धश्च ज्ञेयः अत्र दंतास

रसांकयोर्लाभशरेगुणांत्येचंद्रोंबराब्धौगुणनंदयोश्च १ लाभाष्टमेचाद्यशरेरसांत्येनगद्वयेज्ञो द्विशरेब्धिरामे रसांकयोर्नाग
विधौखनागेलाभंव्ययेदेवगुरुःशराब्धौ २ द्यंतेनवांशद्रिगुणे शिवाहौ शुक्रःकुनागेद्विनगेग्निरूपे वेदांबरेपंचनि
धौगजेषौनंदेशयोर्भानुरसेशिवाग्नौ ३ क्रमाच्छुभोविद्धइतिग्रहःस्यात्पितुःकृतस्यात्रनवेधमाहुः ॥ ❀ ॥ २ ॥

र्थम् सूर्योरसांत्येइत्यादि प्राक्पठितस्थानेषु विद्यमानः सन्ग्रहः शुभदः तदनंतरपठितस्थानेषु स्थितो अशुभफलदाता अर्थादेवानुक्तस्थानेषु नशुभो
भोनाप्यशुभइति २ ३ अथवामवेधं शुक्लपक्षे चंद्रबलं चोपजात्युत्तरार्द्धेनाह दुष्टोपीति दुष्टोपि स्वजन्मराशेः सकाशादनंतरपठितविरुद्धस्थानस्थितोपि
विपरीतवेधाद्वामवेधाच्छुभः यथासूर्यो द्वादशेनिष्टइत्युक्तं प्राक् स्वपंचशनिवर्जितैर्ग्रहैः षष्ठस्थानस्थितैर्विद्धः सन्शुभफलदाता एवमुत्तरस्थानस्थितोपि
कश्चित्ग्रहः प्राक्पठितस्थानस्थितैर्ग्रहैर्विद्धः शुभइति सर्वत्रव्याख्येयम् अयमेववामवेधइत्युच्यते कश्यपः अपिविद्धोग्रहः किंचिन्नददातिशुभंफ
लम् वामवेधविधानेनत्वशुभोपिशुभप्रदः ॥ ❀ ॥

द्विकोणे इति सितेशुक्लपक्षे अब्जश्चंद्रो द्वितीयनवपंचमेषु स्थितः शुभदः अत्रापि क्रमेण षष्ठाष्टमचतुर्थस्थानस्थितैर्बुधवर्जितैर्ग्रहैर्य दि नविद्धास्तदा शुभ इति ध्येयं नारदः शुक्लपक्षे शुभश्चंद्रो द्वितीयनवपंचमे रिपुमृत्युबुसं॰॰ श्चनविद्धो गगनेश्चरैरिति ४ अथ द्विविधमतमुपजात्या ह स्वजन्मराशेरिति इह द्विविधवेधविधौ अन्ये नारदादयः स्वजन्मराशेः सकाशात् द्विविधमपि वेधमाहुः तथा चोभयत्रापि नारदेन जन्मत इत्युक्तं। अन्ये कश्यपादयः स पुनर्द्विविधा ग्रहाधिष्ठितराशितः ग्रहो यस्मिन्राशौ तिष्ठति तत एव क्रमाद्व्युत्क्रमाद्वा वामवेधश्च भवति यथा सूर्यो जन्मराशेः षष्ठस्थितः शुभः स सूर्याक्रांतराशेः द्वादशस्थानस्थितैः शनिवर्जितैर्ग्रहैर्नविद्धः तथा सूर्यो द्वादशस्थानस्थितो निष्ठः सूर्यः स्वाक्रांतराशेः षष्ठस्थानस्थितैः शनिवर्जितैर्ग्रहैर्विद्धश्चेत्तदा शुभफलद इत्यर्थः अथ द्विविधविधस्यैव विषयकल्पमोच्यते हेमाद्रीति। हिमाचलविंध्याचलयोर्मध्यवर्त्तिन्येव देशे सवेधो विज्ञे

**दुष्टोपि खेटो विपरीतवेधाच्छुभो द्विकोणे शुभदः सितेब्जः ४ स्वजन्मराशेरिह वेधमाहुरन्ये ग्रहाधिष्ठितराशि तः सः हिमाद्रिविंध्यान्तर एव वेधो न सर्वदेशेष्विति काश्यपोक्तिः॥ ५ ॥ ५ ॥ ५ ॥ ६ ॥**

यः न सर्वदेशेषु इति काश्यपोक्तिः काश्यपवचनेचयदाह सज्ञातव्यं जन्मराशेस्तु निखिलं यद्दूला वलम् हिमाद्रिविन्ध्ययोर्मध्ये वेधजं तद्ग्रहालयात् अपरे तु सर्वत्र संत्यइतिक्रामिके वेधो जन्मराशेरेव ज्ञेयः विपरीतवेधस्तु ग्रहाधिष्ठितराशित एवेति वदंति गुरुः जन्मतः क्रमवेधः स्याद्वामवेधो ग्र हालयादिति इदमपि हिमाद्रिविन्ध्यांतरविषयमेवेत्यन्ये एतज्ज्ञानुर्दुर्घटमित्याह नारदः अज्ञात्वा द्विविधं वेधो योग्रहज्ञो बलं वदेत् स मृषावचनाभाषी हास्यं याति जने सदेति एवं गोचरदोषे यात्रादिनकार्यम् तत्र शांतिमाह नारदः ग्रहेषु विषमस्थेषु शांतियत्नात्समाचरेदिति सौम्ये सितेनिष्फलः शुभदः पापवीक्षितः निष्फलो नो ग्रहोरवन शत्रुणा चावलोकितः नीचराशिगतः स्वस्य शत्रुसित्रगतोपि वा शुभाशुभफलं नैव दद्यादस्तंगतोपि चेति एतादृशस्थले दुष्टत्वाभावादवश्यशान्त्याभाव इति फलितार्थः ५ ॥ ५ ॥ ५ ॥ ६ ॥ ६ ॥ ६ ॥ श्रीरामाय ॥

अथगोचरप्रस्तावात् ग्रहणीयनक्षत्रफलंग्रहणीयराशुगोचरफलंग्रहणाशुभप्रतीकारंचदुष्टंग्रहणदर्शननिषेधंचशार्दूलविक्रीडितेनाह जन्मर्क्षेइति ग्र
स्यजन्मनक्षत्रेग्रहेग्रहणेसतिनिधनंमरणंस्यात् वसिष्ठः यस्यैवजन्मनक्षत्रेग्रस्येतेशशिभास्करौ तस्यव्याधिभयंघोरंजन्मराशौधनक्षयइति वि
शेषोभार्गवीये यस्यराज्यस्यजन्मनक्षत्रेस्वभानुरुपरज्यते राज्यभंगःसुहृन्नाशंमरणंवात्रनिर्दिशेदिति राज्यस्यनक्षत्रेराज्याभिषेकनक्षत्रे अथरा
शिफलंजनिभतइति जन्मराशेरारभ्यग्रहणेसतिक्रमेणघातादिकंफलंभवति यथा जन्मराशौग्रहणेसतिघातः शरीरपीडा द्वितीयराशौक्षितिर्द्र
व्यनाशः तृतीयराशौश्रीर्लक्ष्मीप्राप्तिः चतुर्थराशौव्यथाशरीरपीडा पंचमराशौचिंतापुत्रादीनां षष्ठराशौसौख्यम् सप्तमराशौकलत्रदौस्थ्यस्त्रीक
ष्टम् अष्टमराशौमृतिर्मरणम् नवमराशौमाननाशः दशमराशौसुखम् एकादशराशौलाभप्राप्तिः द्वादशराशौअपायोनाशः आत्मनइतिकिंचित्

जन्मर्क्षेनिधनंग्रहेनिजभतोघातःक्षितिश्रीर्व्यथाचिंतासौख्यकलत्रदौस्थ्यमृतयःस्युर्माननाशःसुखम् ला
भोपायइतिक्रमात्तदशुभध्वस्त्यैजपःस्वर्णगोदानंशांतिरथोग्रहंत्वशुभदंनोवीक्ष्यमाहुःपरे ६॥ ६ ॥९

द्रव्यस्येत्यपरे इदंषण्मासपर्यंतमितिज्ञेयम् तदनंतरंग्रहणान्तरसंभवनाय उक्तंचदैवज्ञमनोहरे घातंहानिमथश्रियंजननभाद्व्यास्तिंचचिं
ताक्रमात्सौख्यंदारवियोजनंचकुरुतेव्याधिंचमानक्षयं सिद्धिंलाभमपायमर्कशशिनोःषण्मासमध्येग्रहइति अथाशुभस्यचक्रग्रहणप्रती
कारमाह तदशुभेति तस्यग्रहणाशुभस्यध्वस्त्यैनाशायजपस्वर्णगोदानंजपोगायत्र्यादिमंत्राणाम् स्वर्णंसुवर्णं गोर्धेनुः भूमिर्वा उपलक्षण
त्वादन्येषांरूप्यादीनाम् यथाशक्त्यादानंकार्यमितिशेषः तद्दौस्थ्यप्रणुकदुक्तंवज्जयविधिस्वर्णादिदानेभवेदित्युक्तेः दानंज्योतिर्निबंधे सुवर्ण
निर्मितंनागंसतिलंताम्रभाजने सदक्षिणंसवस्त्रंचश्रोत्रियायनिवेदयेत् मंत्रश्चतमोमय महाभीमसोमसूर्यविमर्दन हेमनागप्रदानेनममशांति
प्रदोभवेदिति स्कान्दे गोदानंभूमिदानंचस्वर्णदानंविशेषतः ग्रहणक्लेशनाशायदैवज्ञायनिवेदयेत्॥ ६ ॥ ६ ॥ ९ ॥ ६मः॥

इतिव्यासेनोक्तम् सर्वंगंगासमं तोयं सर्वेब्रह्मसमा द्विजाः सर्वंभूमिसमं दानं ग्रहणे चंद्रसूर्ययोरिति अन्यच्च ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीय-
ते मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयत इति सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकमिति शिवरहस्योक्तेः जपमादिशब्दाद्देवार्चनादिकार्यम् अ-
थस्यान विशेषेण ग्रहणमरिष्टजनकमित्युक्तम् तद्दृष्टमुतादृष्टमपीति संशये निर्णयमाह अथो इति तु विशेषे परे आचार्याः अक्षभद्रं ग्रहणं तु नो वीक्ष्यं न द्रष्ट-
व्यमित्याहुः उक्तं च जन्मसप्ताष्टरिःफांकदशमस्थे निशाकरे दृष्टोरिष्टप्रदो राहुर्जन्मर्क्षे निधने तथा जन्मर्क्षं जन्मनक्षत्रं निधनं वधतारा सप्तमी अत्र
दृष्ट इति परश्रवणाद्दर्शनं चाक्षुषं विवक्षितमिति तेषामाशयः तत्र चाक्षुष ज्ञानं एव दर्शनं मुख्यत्वेइति परेषां मतं तदसत् अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रि-
ताः शीघ्रमंदोच्चपाताख्या ग्रहाणां गतिहेतव इति सूर्यसिद्धान्ते पातानामदृश्यतोक्ता पातो राहुश्च पर्यायः दक्षिणोत्तरयो रेवं पातो राहुश्च रं-
हसा विक्षिपत्येव विक्षेपश्चंद्रादीनामपक्रमादिति सूर्यसिद्धान्तोक्तेः अतः पातानामदृश्यत्वात् राहोर्दर्शनमेवानुपपन्नम् ननु ग्रहणे
सूर्यचंद्रयोश्छादको राहुर्दृश्यत एव अत एव राहुग्रस्ते निशाकर इत्यादिपुराणोक्तिरपीति चेन्न भानोर्भार्धे महीच्छाया तत्तुल्येऽर्कसमे।
पि वा शशांकपाते ग्रहणं कियद्भागाधिकोनक इत्युपक्रम्य छादको भास्करस्येंदुरधःस्थो घनवद्भवेत् भूच्छायां प्राङ्मुखश्चंद्रो विशत्यस्य।
भवेदसौ असौ भूच्छाया अस्य चन्द्रस्य छादको भवेदित्यर्थः सूर्यसिद्धांते छाद्यच्छादकभावोऽभिहितः स्पष्ट एव पुराणविरोधपरिहार-
स्तु भास्करेणैव राहुः कुभामंडलगः शशीकमित्यादिनोक्तम् वराहेणापि तस्मिन्काले सान्निध्यमस्य तेनोपचर्यते राहुरित्युक्ता तस्माद्राहोर्दर्श-
नं नास्त्येव तन्मते दर्शनं चाक्षुषमेव विवक्षितम् एवं च राहोर्दर्शनं राहुदर्शनमिति तत्पुरुषो नुपपन्नः तस्माद्दर्शनशब्देनोपरागो लक्ष्यते राहुद-
र्शनं राहूपरागस्तस्मिन्राहुदर्शने इति अयमर्थः राहुर्नाम पातस्तत्संबन्धेन दर्शनमुपरागइति न च राहुरेव लक्षण्यो परागपरस्तस्य दर्शन-
मिति पूर्वपक्षाभिमतार्थसिद्धिरिति वाच्यम् लक्षणया त्वर्थान्तरासंभवे सति वक्तव्याः अस्यंतादर्शना राहोस्तथा चास्य तद्दर्शने प्रजापीडा वि-
निर्देश्या व्याधिदुर्भिक्षतस्करैरिति विष्णुधर्मोत्तरादिवाक्येषु परांतरासन्निधानाद्राहुशब्देनोपसमो लक्ष्यते इह च राहोः सातास्यं पहगतिः।

रूपमर्थान्तरमस्तीत्यतो राहुदर्शनग्रहपातयोः समानार्थकनास्तीत्येव सिद्धमिति प्रागुक्तानां सर्वेषां वचसां ग्रहणे स्नानादि [illegible] वाक्यार्थः प्र
लितो भवति केचित्तु दर्शनादर्शनविषयकयोस्तु विध्योस्तुल्यबलत्वात् सकृद्दृष्टावस्नानादि निवर्तते तदसत् जन्मसप्ताष्टरिःफांकेत्यादिनासा
मान्यतो निषिद्धस्य उपरक्तदर्शनस्य नेक्षेतोद्यतमादित्यं नास्तं यान्तं कदाचन नोपरक्तं न वारिस्थं न मध्यं नभसो गतमिति मनूक्तोपरक्तदर्शनस्य
पुनर्निषेधानुपपत्तेः प्रागुक्तदिशा राहुदर्शनपदस्य राहूपरागलक्षकत्वेन तुल्यबलत्वाभावात् तस्मादुपरक्तयोः सूर्याचंद्रमसोर्यस्य कस्यापि दर्शना
निषेधसत्वात् ग्रहणे च स्नानदानादिमुक्तिस्नानादिकं च ज्योतिःशास्त्रैकदेशगणितग्रंथेभ्यो बुध्वा तस्मिन् काले दानादि विधेयमिति सिद्धांतः अतएव मेघा
द्यावृत्तेषु उपरागेषु स्नानादि विधेयमेव रात्रौ सूर्योपरागे दिवा चंद्रोपरागे स्विवा चंद्रोपरागे च स्नानादिके तु वचनात् न भवति तदुक्तं निगमे सूर्यग्रहो यदा रात्रौ
दिवा चंद्रग्रहो यदि तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचिदिति तादृशे ग्रहणे दृष्टेऽपि दोषो नास्तीत्यपि सूचितं जाबालिवचनं तु संक्रांतेः पुण्यकाल
स्तु षोडशोभयतः कालः चंद्रसूर्योपरागे तु यावद्दर्शनगोचर इति ग्रस्तस्यास्तसमयनपर्यंतं दर्शनगोचरत्वात् तावत्कालः पुण्यकालो भवतीति व्याचख्युः
तदुक्तं विश्वरूपनिबंधे दिवा चंद्रग्रहो रात्रौ सूर्यपर्वेन पुण्यदस्मृ संधिस्थ पुण्यवन्हेय यावद्दर्शनगोचर इति अन्ये तु सूर्यस्यादर्शनरात्रिर्दिनं तद्दर्श
नात्मकम् भुजवृत्तादुपरि च स्थितोऽर्कोदर्शनं स्मृतमिति वसिष्ठसिद्धांतवचनान्मेघावृत्तेऽनावृत्ते चोपरागगणितागतस्थितिघटिकाः पुण्यकाल इ
त्याहुः यत्राकाशो भूम्यासह लग्न इव दृश्यते स प्रदेशो भुजशब्दवाच्यः अर्क इत्युपलक्षणं चंद्रादिग्रहनक्षत्राणाम् विष्णुधर्मोत्तरे अहोरात्रं न भोक्तव्यं
चंद्रसूर्यग्रहो यदा मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति ग्रस्तास्ते गुरुः ग्रस्तावेवास्तमानं तु रवीन्द्वाः प्राप्नुतो यदि तयोः परेद्युरुदये स्नात्वाभ्यवह
रेन्नरः इत्यनयोर्वाक्ययोर्दर्शनोदयशब्दौ भुजवृत्तोपरिस्थितत्वलक्षकौ अन्यथा मेघाद्यावरणेन परेद्युर्दिवसेऽपि दर्शनाभावे उपवासः प्रसज्येत तथा च पत्र स
र्शकाले ग्रहणं दृष्टा स्नानं विहितं तयोस्तरे मेघावरणाद्रविचंद्रयोर्दर्शनाभावो दिवसद्वयं त्रयं वा स्यात्तत्राप्युपवासः प्रसंगः स्यात् न वशिष्टास्तथाचरंति।
तस्माद्दृष्टिर्दर्शनार्थ एव तस्माच्छास्त्रीयग्रहणज्ञाने सति मेघावृत्तेऽपि ग्रहणे ग्रहणमदृष्टैव चक्षुष्मता अंधेन गंतुमशक्तेन च वृद्धादादिना स्वा।

स्मीयविधेयमितितात्पर्यार्थः अतएवभागवतेकुरुक्षेत्रस्नानार्थंमिलितानांपांडवीयलोकानांमध्ये धृतराष्ट्रोपिपरिगणित इतिशिष्टाचारोप्येवंमे।
वास्ति एवंचारिष्टजनकत्वेतस्माज्जन्मसप्ताकतिपयनिर्मूलत्वादुपेक्ष्यं किंच मत्सतोलब्धवसिष्ठपुराणादिवाक्येदर्शीपदाभावाच्च अतएवमूलेप
रेइतिपदमप्रयुक्तं शांतिस्तुदर्शनाभावेपिविधेया यतोरिष्टयोगाः स्वरूपसत्तामेवारिष्टजनकत्वात् अथग्रहणशांतिः येषांतुविषमस्थानि
राहुश्चंद्रमुपक्रमेत् कर्मस्वपरिक्लेशात् प्राप्नुवंतिचतेजनाः पितृपक्षविनाशायसूर्यस्थाने भवेद्ग्रहः मातृपक्षविनाशायचंद्रस्थानेभवेद्ग्र
हः होरायागत्यतेयस्यनक्षत्रेवानिशाकरः प्राणसंदेहमाप्नोतिसर्वामरणमृच्छति यस्यत्रिजन्मनक्षत्रेग्रहणेशशिभास्करे तज्जातानांभवेत्
पीडायेनराःशांतिवर्जिताः संक्रमइनस्ययेषांजन्मतृतीयेथवाग्रहणबहुरोगमृत्युजननोदानाहुतयोजपाश्चकर्त्तव्याः तस्माद्दानंचहोमंच
देवार्चनजपौतथा उपरागाभिषेकंचकुर्याच्छांतिर्भविष्यति नक्षत्रदानंयथा रूपंविधायभुजगस्यतुकांचनेनपिष्टेनवाहिमकरेदिवसा
धिपेच ग्रस्तेत्रिजन्मदिवसेतमसाग्रहस्थाद्विप्रायवेदविदुषेस्रुपरीक्षिताय यस्यराशिसमासाद्यभवेद्ग्रहणसंभवः तत्रस्नानंप्रवक्ष्यामिमं
त्रौषधिसमन्वितम् चंद्रोपरागसंप्राप्यकुर्याद्ब्राह्मणवाचनम् संपूज्यचतुरोविप्रान् स्रक्कमाल्यानुलेपनैः पूर्वमेवोपरागस्यसमानीयोषधादिकं
स्थापयेच्चतुरःकुंभानव्रणान्सागरानिति गजाश्वरथ्यावल्मीकसंगमात् ह्रदगोकुलात् राजद्वारप्रदेशाच्च मृदमानीयनिक्षिपेत् पंचगव्यंचकुंभेषु
रत्नमुक्ताफलानिच रोचनंपद्मकंशंखंपुष्पवस्त्रसमन्वितम् स्फाटिकंचंदनंश्वेततीर्थवारिचपल्लवान् जसरंतवकुदसर्षपोशीरगुग्गुलून् तत्रवेनि।
क्षिपेत्पूर्वकुंभेष्वावाहयेत्सुरान् सर्वेसमुद्राःसरितत्तीर्थानिजलदानदाः आयांतुममशान्त्यर्थंदुरितक्षयकारकाः तिलहोमंव्याहृतिभिः सहस्रं
चाष्टसंयुतम् एवंकृत्वाप्रयत्नेनस्नानकर्मसमारभेत् आमंत्र्यनवभिर्मंत्रैःकुंभात्संकल्पपूर्वकम् योसौवज्रधरोदेवोआदित्यानांप्रभुर्मतः सहस्रनयनः
शक्रोग्रहपीडांव्यपोहतु मुखंयःसर्वदेवानासप्तार्चिरमितद्युतिः चंद्रोपरागसंभूतामग्निःपीडांव्यपोहतु यःकर्मसाक्षीलोकानांधर्मोमहिषवाहनः यमश्चं।
द्रोपरागोत्थांग्रहपीडांव्यपोहतु निर्ऋतिःकोणयोदेवः प्रलयानलसंभवः। खड्गव्यग्रोतिभीमश्चरक्षःपीडांव्यपोहतु नागपाशधरोदेवः सदामकरवाहनः

सजलाधिपतिश्चंद्रग्रहपीडांव्यपोहतु प्राणरूपोहिलोकानांसदाकृष्णमृगप्रियः वायुश्चंद्रोपरागोत्थां ग्रहपीडां व्यपोहतु योसौनिधिपतिर्दे
वःखड्गशूलगदाधरः चंद्रोपरागकलुषधनदोत्रव्यपोहतु योसाविंदुयुतोदेवोभवानीपतिरीश्वरः चंद्रोपरागजांपीडांसनाशयतुशंकरः
त्रैलोक्येयानिभूतानिचततोमैत्रान्विलिख्यकान्वितान् वस्त्रेपट्टेऽथवाभूर्जेपंचरत्नसमन्वितान् यजमानस्यशिरसिनिरध्युस्तेद्विजोत्त
माः ततोतिवाहयेद्वेलामुपरागानुमानिनी प्राङ्मुखंपूजयित्वातेनवाचाभीष्टदेवते चंद्रग्रहेविनिर्वृत्ते कृतशौचात्ममंगलः कृतस्नानं
चतत्सर्वंब्राह्मणायनिवेदयेत् अनेनंविधिनायस्तुग्रहस्नानंसमाचरेत् नतस्यग्रहपीडास्यान्नचबंधुधनक्षयः सूर्यग्रहेसूर्यनामसवा
मंत्रेषुकीर्त्तयेत् यइदंशृणुयान्नित्यंश्रावयेद्वापिवानराः सर्वपापविनिर्मुक्तःसर्वत्रसुखवान्भवेदिति इतिमत्स्यपुराणोक्ताग्रहणशांतिः अ

**पापांतःपापयुक्द्यूनेपापाच्चंद्रःशुभोप्यसत् शुभांशेचाधिमित्रांशेगुरुदृष्टोऽशुभो**
**पिसत् ७ सितासितादौतदृष्टचंद्र[illegible]शुभावुभौ॥ ७॥ २॥ ७॥**

थौषधीभिर्ग्रहणशांतिः रोचनंपद्मकंशंखंकुंकुमंरक्तचंदनम् शुक्तिस्फटिकतीर्थांबुसितसर्षपगुग्गुलून् मधुकंदेवदारुंचविष्णुक्रांतासि
तावरी वेलांचसहदेवींचनिशाद्वितयमेवच दूर्वांकुरोशीरशमीशिलाजितसर्वौषधयस्सर्वौषधिपंचमृद्भिः स्नानंविदध्याद्ग्रहणरवींद्वोःपीडाकरंशा
तिवहंचयस्येति ६ अथचंद्रबलेविशेषमनुष्टुभ्द्वयेनाह पापांतइति शुभफलदोपिचंद्रःपापांतःपापद्वयमध्यवर्ती पापयुक्पापग्रहयुक्तःपापात्
द्यूनेसप्तमेववर्त्तमानस्तदाशुभोपिअसत् अशुभएवयदा[illegible]चशुभोपिचंद्रःशुभांशशुभग्रहनवांशे अथवाधिमित्रनवांशे तथागुरुणादृष्टःसत्
शुभफलदाताभवेत् ७ अन्यदप्यनुष्टुभाह सितेति [illegible]रसादौप्रतिपदिसमीचीनचंद्रेसतिसंपूर्णः शुक्लःशुभःअसितादौकृष्णपक्षप्रतिपदि
दृष्टेचन्द्रेसतिसंपूर्णः कृष्णःशुभः [illegible]यासेचपूर्वोक्तादर्थाद्विपरीतेद्वावपिपक्षावनिष्टो यदाशुक्लप्रतिपदिचंद्रेदृष्टश्चेत्तदासकलपक्षोऽनिष्टः॥ २॥

कृष्णप्रतिपदि चंद्रः शुभश्चेत्तदा संपूर्णः कृष्णपक्षोऽनिष्टः इदमेतावत् अब्जबलं चंद्रबलं संकटे विवाहयात्रादौ अवश्यकर्त्तव्ये तात्कालिक
चंद्रबलाभावे च ग्राह्यं नान्यथेत्यर्थः ८ अथ ग्रहदौष्ट्यपरिहारपूर्वकं तुष्टिसंपादनार्थं नवरत्नसमुदायधारणं शालिन्याह वज्रमिति अत्र
सुवर्णमुद्रिकायां नवधा भक्तायां प्रागादिक्रमेण नवरत्नानि निधेयानि तत्र प्रागिति पञ्चम्यंतमव्ययं पंचमी चेयं ल्यप्लोपे तेन प्रागादिदि
क्ष्वित्ययमर्थो जातः तत्र शुक्रप्रीतये पूर्वस्यां दिशि वज्रं श्वेतहीरकं निधेयम् एवं चंद्रप्रीतये मुक्ता शोभनमुक्ताफलमाग्नेय्याम् भौमप्री
त्यर्थं दक्षिणस्यां प्रवालम् अगौ राहौ नैर्ऋत्यां गोमेदम् अर्कौ शनौ पश्चिमायां शोभनं नीलम् केतौ वायव्यां वैडूर्यं गुरो उत्तरस्यां पुष्पकं पुष्परागं बुधे ईशा

व्यां सेचाशुभौ प्रोक्तौ संकटे ब्जबलं त्विदम् ८ वज्रं शुक्रेऽब्जे सुमुक्ता प्रवालं भौमेऽगौ गोमेदमार्कौ सुनीलं केतौ वैडू
र्यं गुरौ पुष्पकं ज्ञे पाचिः प्राङ् माणिक्यमर्कैतु मध्ये ९ माणिक्यमुक्ताफलविद्रुमाणि गारुत्मकं पुष्पकवज्रनीलं गोमेदवैडू
र्यकमर्कतः स्यू रत्नान्यथोज्ञस्य मुदे सुवर्णम् १० धार्यं लाजावर्त्तकं राहुकेत्वोरौप्यं शुक्रेंद्वोश्च मुक्ता गुरोस्तु ॥ छ ॥ २ ॥

न्यां पाचिः मध्ये मध्यमकोष्ठे अर्कप्रीत्यै माणिक्यं निधेयम् ९ अथ सति सामर्थ्ये नवरत्नसमुदायस्य धारणमुक्तं इदानीमसति सामर्थ्ये यद्ग्रहकृतदौष्ट्यं
तद्ग्रहरत्नधारणमिंद्रवज्रयाह माणिक्येति सूर्यप्रीत्यर्थं माणिक्यं धार्यम् एवं चंद्रस्य मुक्ताफलम् भौमस्य विद्रुमं प्रवालं बुधस्य गारुत्मकं गरुडःपाचिः
गुरोः पुष्पकं पुष्परागः शुक्रस्य वज्रं हीरकः शनेर्नीलं लहसुणिया राहो गोमेदम् केतोर्वैडूर्यमित्येवमर्कतोऽर्कादीनां ग्रहाणां रत्नानि धार्याणि स्युः तत्र यद्ग्रहकृ
तदौष्ट्यं तस्य ग्रहस्य तुष्ट्यै तद्रत्नमेव धार्यमित्यर्थः अथो ज्ञस्य मुदे सुवर्णमित्यग्निमश्लोकेन संबन्धः १० अथ महामूल्यरत्नधारणस्यासामर्थ्ये अल्प
मूल्यानि रत्नानि नाराबलेच शालिन्याह धार्यमिति अथो ज्ञस्य बुधस्य मुदे संतोषार्थं सुवर्णं यथाशक्ति धार्यम् राहुकेत्वोस्तुष्ट्यै लाजावर्त्तकं मणिविशे
षो धार्यः शुक्रेंद्वोस्तुष्ट्यै रूप्यम् ॥ छ ॥

गुरौस्तुष्ट्यै मुक्ताफलं शनेस्तुष्ट्यै लोहं आरभान्वोस्तुष्ट्यै प्रवालं धार्यम् तारेति यद्दिने ताराबलं चिकीर्षितं तद्दिने याता तारा सा जन्मनक्षत्रात् त्रिरावृत्तितः प्र
नरावृत्तित्रयेण गणनीया स्यात् त्रिरिति स्फुटं तमव्ययं जन्मनक्षत्रात् दिननक्षत्रगणिते नवभिर्भक्ते तिस्र आवृत्तयो भवंति अवशिष्टतारायाः शु
भमशुभं च व्याख्यामिति फलितोऽर्थः ११ अथ शेषक्रमेण सकलास्ताराः संज्ञा अनुष्टुभाह जन्माख्येति स्पष्टोऽर्थः १२ अथावश्यकृत्ये दुष्टतारा
याः प्रकारद्वयेन परिहारं शार्दूलविक्रीडितेनाह मृत्यौ स्वर्णतिलानिति मृत्यौ वधतारायां स्वर्णं तिलान् यथाशक्ति ब्राह्मणाय दद्यात् विपदि विपत्तारायां गु
डमिश्रं विकारं दद्यात् त्रिजन्मसु तिसृषु जन्मतारासु शाकं वृंताकादि दद्यात् अथ प्रत्यरितारकासु पंचमतारायां लवणं दद्यात् नारदः जन्मत्रिपंचसप्ता

**लोहं मंदस्यारभान्वोः प्रवालं ताराजन्मर्क्षात्त्रिरावृत्तितः स्यात् ११ जन्माख्यसंपद्द्विपद्द्विपदः क्षेमप्रत्यरिसाधकाः वधमैत्रातिमैत्राः स्युस्ताराना मसदृक्फलाः १२ मृत्यौ स्वर्णतिलान्विपद्यपि गुडं शाकं त्रिजन्मस्वथो दद्यात्प्रत्यरितारकासु लवणं सर्वो विपत्प्रत्यरिः मृत्युश्चादिमपर्यये न शुभदोथैषां द्वितीयेंशका नादिप्रांत्यतृतीयका अथ शुभाः सर्वे तृतीये स्मृताः १३ षष्टि ६० घ्नं गतभं भुक्तघटीयुतं युगाहतम्॥**

स्यातारा निष्टफलाः स्मृताः शाकं गुडं च लवणं सतिलान्कांचनं क्रमा
त् अनिष्टपरिहाराय दद्याद्दानं द्विजातये इति अथ द्वितीयः परिहारः तत्रादिमपर्यये प्रथमावृत्तौ विपत्प्रत्यरिमृत्युश्च तृतीयपंचमीसप्तम्यस्ताराः
सर्वा अपि सामान्यतः षष्टिघटिकात्मिका न शुभदाः स्युः अथ द्वितीयपर्यये द्वितीयावृत्तौ विपत्प्रत्यरिमृत्यूनां आदिप्रांत्यतृतीयका अंशा न शुभदाः
विपत्तारायामाद्यांशः प्रथमश्चरणो निषिद्धः प्रत्यरितारायां प्रांत्यांशश्चतुर्थचरणस्त्याज्यः मृत्युतारायां तृतीयांशः तृतीयचरणस्त्याज्य इति अथ तृतीया
वृत्तौ विपत्प्रत्यरिमृत्युश्चैते सर्वे षष्टिघटिकात्मिका अपि शुभाः उक्तं च दीपिकायां पर्याये प्रथमे वर्ज्या विपत्प्रत्यरिनैधना इति १३ अथ चंद्रावस्थागण
नोपायमाह षष्टिघ्न इति अश्विनीमारभ्य गतभानि षष्ट्या॥ छ ॥ छ ॥ छ ॥ छ ॥ श्रीरामाय तस्मै नमः

गुण्यानि वर्त्तमाननक्षत्रभुक्तघटीयुतानि पुनर्युगेश्चतुर्भिराहतानि शराब्धिहृत् ४५ पंचचत्वारिंशता भाज्यानि यल्लब्धमागतं गतावस्थास्ताः शेषं
वर्तमानायस्थायाः तत्र लब्धांकस्यापि द्वादशाधिकेये द्वादशभिर्भागशेषं प्रवासाद्यवस्थाचंद्रस्य गताः स्युः ता अवस्था मेषराशेः पुंसः प्रवासादि
संज्ञाः वृषराशेर्नष्टादिसंज्ञाः एवं मिथुनादिद्वादशराशिषु मृतादिसंज्ञावस्थादितो द्वादशावस्थाः क्रमेण भवंतीत्यर्थः १४ अथ द्वादशावस्थानामानि स
फलान्याह प्रवासनाशाविति स्पष्टार्थं १५ अथ ग्रहणां वैकृतिपरिहारार्थं सौषधस्नानं दक्षिणाश्च शार्दूलविक्रीडितेनाह लाजा कुष्ठेति लाजाभ्र
ष्टशालयः इति केचित् वस्तुतस्तु औषधीसाहचर्यात्तु लाजाशब्देन लज्जावती गृह्यते कुष्टं प्रसिद्धम् बला वरियारा प्रियंगुः फलिनी घनो मुस्ता

शराब्धि ४५ हृल्लब्धतोऽर्कशेषेऽवस्थाः क्रमाद्द्विधोः १४ प्रवासनाशौ मरणं जयश्च हास्यारतिक्रीडि।
तसुप्तभुक्ताः ज्वराख्यकंपस्थिरता अवस्था भिषात्क्रमान्नामसदृक्फलास्युः १५ लाजाकुष्ठब
ला प्रियंगु घनसिद्धार्थैर्निशादारुभिः पुंखालोध्रयुतैर्जले निगदितं स्नानं ग्रहोत्थाघहृत् धेनुः कंबुरु
णो वृषश्च कनकं पीतांबरं घोटकः श्वेतो गौरसिता महासिरजइत्येता रवेर्दक्षिणाः १६ सूर्यास्सौम्यास्फुजि
तोक्षनागसप्ताद्रिपक्षान्विधुरग्निनाडीः॥ गुसिद्धार्थाः सर्षपाः निशा हरिद्रा दारुः देवदारुः पुंखा शरपुंखा लोध्रं प्रसिद्धं

एतैरोषधैर्युतैर्जलैः स्नानं ग्रहोत्थाघहृत् दुष्टग्रहसूचितारिष्टनाशकं स्यात् सप्रियंगुरजनीद्वयमांसीकुष्ठलाजतिलसर्षपखंडैः वारिभिः सह वचैः सहलो
ध्रैः स्नानमतिनिखिलग्रहपीडामित्युक्तेः अथ रवेः रविमारभ्य दक्षिणा उच्यंते सूर्याय धेनुम् चंद्राय कंबुः शंखः शंखः स्यात्कंबुरस्त्रियामित्यमरः भौम
यारुणो वृषः बुधाय स्कवर्णं गुरवे पीतांबरम् तच्च यथाविभवं कार्या संकोशजंवा शुक्राय श्वेतो घोटकः शनये श्यामवर्णा गौः राहवे महासिर्महामूल्यस्खड्गः
केतवे च्छागो मेषः एताः दक्षिणाः १६ अथ ग्रहाः गंतव्यराशेः प्राक् कियद्भिर्दिनैः फलं दद्युरित्येतदुपजात्याह सूर्यारेति ॥ ६ ॥ ९ ॥

जिगमिषितराशेः पुरस्तात् पूर्वंतत्तत्संख्यघटीदिवसमासान् शुभाशुभफलदाः स्युः यथासूर्योगंतव्यराशेः प्राक् पंचदिनानि फलप्रदः भौमोष्टदिव
सान् बुधः सप्तदिवसान् शुक्रोपिसप्तदिवसान् चन्द्रोग्निनाडीत्रयम् राहुर्गंतव्यराशेः पूर्वंत्रिमासान् शनिःषण्मासान् गुरुर्मासद्वयपूर्वंफल इत्यर्थः।
१७ अर्थवश्यकृत्येतिथ्यादौ शालिन्यादानमाह दुष्टेयोग इति राजादुष्टेव्यतीपातादियोगेतथानाड्याघटिकायांदुर्मुहूर्त्तादिदुष्टार्थास्तुवर्णय
थाशक्तिदद्यात् एवंसर्वत्र शेषंस्पष्टम् १८ अथवसंततिलकयान्यादाह राश्यादीति पूर्वार्धंस्पष्टम् अध्वान्नेति यस्मिन्मासेस्वजन्मनक्षत्र ववेशेसूर्या
दिवाराश्चेत्स्युस्तस्मिन्मासेअध्वादीनिफलानिवाच्यानि यत्रमासिरविवारेजन्मनक्षत्रेसेति अध्वामार्गोभवति एवंचंद्रवारेअन्नंभस्यप्राप्तिरि

॥ तमोयमेज्यास्त्रिरसाश्विमासान्गंतव्यराशेःफलदाःपुरस्तात् १७ दुष्टेयोगेहेमचंद्रंचशंखंधान्यंतिथ्यर्द्धे।
तिथौतंदुलांश्च वारेरत्नंभेचगांहेमनाड्यांदद्यात्सिंधूसंचतारासुराजा १८ शय्यादिगोरविकुजौफलदौसिते।
ज्यौमध्येसदाशशिसुतश्चरमेङ्गसंदे। अध्वान्नवन्हिभयसन्मतिवस्त्रसौख्यदुःखानिमासिजनभेरविवासरादौ
१९ इतिगोचरप्रकरणंचतुर्थम् ४ आद्यंरजःशुभंमाघमार्गराधेषुफाल्गुने॥ ॥ ॥ ॥

त्यादि १९ इतिश्रीदैवज्ञविरचितायांस्वकृतमुहूर्तचिंतामणिटीकायांगोचरप्रकरणंचतुर्थंसमाप्तम् ४ अथसंस्कारप्रकरणंव्याख्यायते तत्रसंक्षि
यतेअनेनश्रौतेनस्मार्तेनवाकर्मणापुरुषइतिसंस्कारः स्वीयस्वीयजातौसामान्यविशेषविहितवैदिकस्मार्त्तकर्मानुष्ठानद्वाराहृष्टविशेषाधायकइतिया
वत् लक्षणयातदर्थोक्तादिमशुद्ध्यादिकंसंस्कारशब्देनोच्यते तस्यप्रकरणमुपक्रमः तत्रसंस्कारागर्भाधानाद्योऽष्टाचत्वारिंशत् तत्रगर्भाधानंत्रथमसंस्का
रः सचरजस्वलास्यधीनः ततोरजोदर्शमाहशुभाशुभफलमुक्तवसिष्ठेन प्रथमरजोदर्शनतः शुभाशुभंभवतिसर्वलोकानामिति तत्रशुभस्त्रूक।
रजोदर्शनमनुष्टुभाह आद्यमिति राधोवैशाखः इषआश्विनः अन्येप्रसिद्धाः एषुमासेषुआद्यंरजः प्रथमोद्भवरजोदर्शनंस्त्रीधर्मः॥ ॥

शुभंभविष्यच्छुभसूचकं तथाशुक्लेशुक्लपक्षे कृष्णपक्षेतुदशमीपर्यंतंमध्यमंज्ञेयंकृष्णपक्षस्यदशमीमध्यमंफल मारिष्टेदिति यावदिति।
शेषः सद्वारेसतांचंद्रबुधगुरुशुक्राणांवारे सन्तनौसमीचीनलग्नेशुभस्वामिकलग्नेदिवादिवसेआद्यरजोदर्शनंशुभमित्यर्थः अत्राशुभफ।
लापवादमाह वसिष्ठः अशुभमपिसमस्तंवार्त्तवेसंप्रभूतंक्रूरगुरुसितयुक्तेमीक्षितेवाथलग्नेन तिमिरमिवकठोरंज्योतिरुसत्तिकालेक्षय।
मथसमुपैतिप्रायुपादीक्षितानि कठोरज्योतिः सूर्यः १ अथात्रशुभमध्याशुभनक्षत्राण्यनुष्टुभाह श्रुतित्रयेति श्र वणत्रयमृदुक्षिप्रध्रुवस्वा
तीनक्षत्रेषु सितांबरे श्वेतवस्त्रेचाद्यरजः शुभमितिपूर्वेणसंबन्धः मूलेदितिभेपुनर्वसुः पितरोमघा मिश्रेकृत्तिकाविशाखे एतेषुनक्षत्रेषुम
ध्यमम् परेषु भरणीज्येष्ठार्द्राश्लेषापूर्वात्रयेषुअसत् अनिष्टम् अत्रविशाखामूलयोर्मध्यमत्वाभिधानंवसिष्ठवाक्येदुष्टफलश्रवणात् द्विदै

॥ज्येष्ठश्रावणयोःशुक्लेसद्वारेसत्तनौदिवा १ श्रुतित्रयमृदुक्षिप्रध्रुवस्वातौसितांबरे मध्यंचमूलादितिभेपित्र्यमिश्रे
परेष्वसत् २ भद्रानिद्रासंक्रमेदर्शरिक्तासंध्याषष्ठीद्वादशीवैधृतेषु रोगेष्टम्यांचंद्रसूर्योपरागेपातेचाद्यंनोरजोदर्शनंसत्
३ हस्तानिलाश्विमृगमैत्रवसुध्रुवाख्यैःशक्रान्वितैःशुभतिथौशुभवासरेचस्नायात्स्त्रियालेववतीमृगपौष्णवायुहस्ता।
श्विधातृभिररंलभतेचगर्भम्॥ ४ ॥ ध्रुवभेपुष्पवतीप्रमताकुत्वैवमोघामयवैरिसंघामूलेप्रकामाधिकहीनसत्वाव्यसुर्भुभसोद्भुतदोष
चित्तेति २ अथनिंद्यरजोदर्शनंशालिन्याह भद्रेति भद्राप्रसिद्धा निद्रानिद्रावस्थायासंध्याप्रातर्मध्यान्हसायंसंध्या उपरागेग्रहणेपातेव्यतीपातेमहा
पातेच शेषंस्पष्टं आद्यरजोदर्शनंनोसत् अनिष्टफलमित्यर्थः ३ अथरजस्वलास्नानमुहूर्त्तंवसंततिलकयाह हस्तानिलेति एषुएकादशनक्षत्रेषु शुभ
तिथौरिक्तामारहिततिथौ शुभवारेचंद्रबुधगुरुशुक्रवारे आर्तववतीऋतुमतीस्त्रीस्नायात् अथविशेषमाह मृगेति मृगरेवतीस्वातीहस्ताश्विनीरोहिणी
नक्षत्रैः स्नाताऋतुमतीअरंशीघ्रंगर्भंलभते लघुक्षिप्रमरंद्रुतमित्यमरोक्तेः दाक्षिणात्यास्तुचतुर्थदिवसएवंस्नानंकुर्वंति अन्येविहितदिनेकुर्वंति तत्रदे

अथगर्भाधानंशार्दूलविक्रीडितशालिनीभ्यामाह गंडांतमिति अत्रस्वपत्नीगमेगर्भाधानेएतान्दोषांस्त्यजेदितिसंबन्धः एतान्कान्कान्त्रिविधंतिथिनक्ष
त्रलग्नानांगंडांतं श्रीपतिः नक्षत्रतिथिलग्नानांगंडांतंत्रिविधंस्मृतम् नवपंचचतुर्थानांद्व्येकाद्विघटिकामितमिति निधनजन्मर्क्षे निधनतारांवधतारां
जन्मतारांच मूलम् अंतकंभरणी दास्रमश्विनी पौष्णंरेवती मघाउपरागग्रहणं पातंव्यतीपातंमहापातंच वैधृतिं पित्रोःमातापित्रोः श्राद्धदिनं
दिवादिवसे परिघयोगस्याद्यार्धम् उत्पातहतानिदिव्यभौमांतरिक्षस्त्रिविधोत्पातैर्हतानिदूषितानिभानि जन्मर्क्षतः जन्मराशेर्जन्मलग्नाद्वामृत्युभवनम
ष्टमलग्नम् पापयुतंभम् ५ भद्राषष्ठीति पर्वाणिविष्णुपुराणेचतुर्दश्यष्टमीचैवअमावास्याचपूर्णिमा पर्वाण्येतानिराजेंद्ररविसंक्रांतिरेवचेतिस्कां
दे तु कृष्णाष्टमीचतुर्दश्योपूर्णिमादर्शसंक्रमइति संध्यात्रयम् भौमसूर्यशनिवारान् आद्यरात्रीः रजोदर्शनमारभ्यदिनचतुष्टयंत्यजेत् कालवि

गंडांतंत्रिविधंत्यजेन्निधनजन्मर्क्षेचमूलांतकंदास्रंपौष्णमघोपरागदिवसान्पातंतथावैधृतिम् पित्रोःश्राद्धदिनं
दिवाचपरिघाद्यर्द्धंस्वपत्नीगमेभान्युत्पातहतानिमृत्युभवनंजन्मर्क्षतःपापभं ५ भद्राषष्ठीपर्वरिक्ताश्चसंध्याभौमार्का
र्कीमाद्यरात्रीश्चतस्रः गर्भाधानंत्र्युत्तरेंद्वर्कमैत्रब्राह्मस्वातीविष्णुवस्वंबुपेसत् ६ केंद्रत्रिकोणेशुभेश्चपापेस्त्र्यायारिगेःपुं

ग्रहदृष्टलग्ने॥ ६॥

धाने षष्ठ्यष्टमीपंचदशीचतुर्थीचतुर्दशीमप्युभयेत्रहित्वा शेषाः शुभाः स्युस्तिथयोनिषेकेवाराःशशांकार्यसितेकुजा
नामिति गर्भाधानमिति त्र्युत्तराःइंदुर्मृगः अर्कोहस्तः मैत्रमनुराधा रोहिणीस्वातीश्रवणधनिष्ठाशततारकास्तुगर्भाधानंसत् शुभंगुरुः हरि
हस्तानुराधाश्चस्वातीवरुणवासवं उत्तरात्रितयंसौम्यंरोहिण्यश्चशुभास्मृताःआधानेमूलसार्पात्यमशुभंसममन्यभमिति अथगर्भाधानेल
ग्नमिंद्रवज्रयाह केन्द्रेति शुभैःकेंद्रत्रिकोणेषुसद्भिः पापग्रहैस्त्र्यायारिगेः सद्भिःउग्रैः रविभौमगुरुभिर्दृष्टलग्नेसति तथाऽक्षेचंद्रेओजांशगे विष
मराशीनांनवांशगेसतिअपिशब्दात्॥ ६ ॥ ६ ॥ २ ॥ ६ ॥ २ ॥ श्रीजगन्नाथायनमोनमः॥

लग्नेपिविषमांशगेयुग्मरात्रौसमरात्रौगर्भाधानंविर्यम् मध्यमान्याह चित्रादितीज्याश्विषुतद्गर्भाधानमध्यमंस्यात् गुरुः चित्रादित्येतथा शिष्येतुरगेचेतिमध्यमा शेषान्यस्तानिदुष्टानिस्युर्निषेकाख्यकर्माणीति एतंगर्भाधानंनिधायपुंसाकिंकार्यमित्याह विष्णुःनिद्रासमयमासाद्य तांबूलंचंदनात्यजेत् पर्यंकास्वमदेभालांस्रग्पुष्पाणिमस्तकात् इतिगर्भाधान ७ अथसीमंतोन्नयनंशार्दूलविक्रीडितेनाह जीवार्केति गुरु रविभौमवारेनिर्ऋतिमूलम् त्र्यधमंहस्तः एतैर्नक्षत्रैः रिक्ता४।९।१४ अमा३० अर्कौ१२ रसाः६ अष्टअष्टमी आभिर्वर्जिततिथिभिः उपलक्षितेदिनेमासादिमिपीवरेपुष्टेसतीत्यर्थः एतादृशसमये अष्टमषष्ठमासिअष्टमेमासेषष्ठमारेवासीमंतः सीमन्तकर्माख्योग र्भसंस्कारः कार्यः तत्रशुभग्रहैः केन्द्रत्रिकोणसद्भिः खलैःपापैः लाभारित्रिषुसद्भिः पुभांशकेलग्नेपुरुषराशौविषमराशौलग्नेन

ओजांशकेऽपिचयुग्मराशौचित्रादितीज्याश्विषुमध्यमंसत् ७ जीवार्करदिनेमृगेज्यनिर्ऋतिश्रोत्रादितित्र्यधभेरिक्तामार्करसाष्टवर्ज्यतिथिभिर्मासाधिपेपीवरे॥ ११ वांशेचविषमराशौसति तदासीमंतःशुभः अत्रविशेषमाह॥

कश्यपः चंद्रोपिशुभदोज्ञेयः त्यक्त्वाषष्ठाष्टमव्ययान् सीमंतलग्नादेकोपिक्रूरः पंचारिष्टः फलः हंतिसीमंतिनींसोपितद्गर्भेवानसंशयः ननैधनेतयोर्लग्नेनैधनेशुद्धिसंयुते तयोःस्त्रीपुंसयोः अस्यापवादः लग्नोदष्टमराशीशः केंद्रगः शुभवीक्षितः यद्यप्यष्टमस्थोक्तं दोषमाशुव्यपोहति गर्गः सीमंतोन्नयनंकार्यंशुभांशेशुभलग्नवो कुलीरयुगकन्याश्ववर्ज्याः शेषाश्चशोभनाइति अत्रग्रहबलेसति कुलीरमिथुनकन्याअपिग्राह्याइतिज्ञेयम् अतएवमूलेलग्नविचारोनकृतः कारिकायांपुनःनक्षत्राणिचेतानि तिष्योहस्तःपुनर्वसुः अभिजिच्छ्रोत्रपाञ्चैवअनूराधाश्वियुक्तथा ऋक्षस्यमध्यमेपादद्वयेसीमंतइष्यतेइत्युक्तम् अथमतांतरम् वाध्रुवांत्यसदहेध्रुवाणिरोहिण्युत्तराअंत्यंरेवतीएषुतथासतांशुभग्रहाणांचंद्रज्ञगुरुशुक्राणांवारेवाकार्यं गुरुः रोहिण्यैंदवमादित्यपुष्यहस्तोत्तरात्रयम्॥ ९॥

पौस्ंबेष्णवमंचैवसीमंतेसौम्यवासराइति सीमंतादिषुशोभनाइत्यर्थः जन्मभंसीमंतेनिषिद्धमाह वसिष्ठः बालान्नभुक्तौव्रतबन्धनेच
राजाभिषेकेखलुजन्मधिष्ण्यम् शुभंत्वनिष्टंसततंविवाहसीमंतयात्रादिषुमंगलेषु गुरुःमासत्रयुक्तकार्येषुमृत्वंतंगुरुशुक्रयोः नदोषस्त
त् मलोमासोगुर्वादित्यादिकंतथा यद्यपिपुंसवनस्यप्रथमकर्तव्यत्वात् तत्पूर्वनिरूपणमावश्यकम् तथापिकचित्सीमंतेनसहैवविधानात
बहुषुतथैवाचारदर्शनात्सीमंतमुहूर्तएवप्रथममुक्तः नृसिंहः सीमंतोन्नयनस्योक्ततिथिवारभैराशिषुपुंसवकारहृयेहिहान्नसहैवैकदिने
स्यादिति ८ अथमासेश्वराः स्त्रीणांचन्द्रबलंचवसंततिलकेनाह मासेश्वराइति अष्टममासेआधानलग्नाधिपःस्त्रीणामिति विवाहेगर्भसं
स्कारेगर्भाधानपुंसवनसीमंतादिरूपेस्त्रीणामपिचंद्रबलंग्राह्यम् इतरकर्मसुवस्त्रालंकारादिधारणादिषुभर्तुरेवचंद्रबलंग्राह्यं यदाभर्ता

सीमन्तोष्टमषष्ठमासिशुभदैःकेंद्रत्रिकोणेखलैर्लाभारित्रिषुवाध्रुवांत्यसरहेलग्नेचपुंभांशके ८ मासेश्वराःसित
कुजेज्यरवींदुसौरचंद्रात्मजास्तनुपचंद्रदिवाकराःस्युः स्त्रीणांविधोर्बलमुशंतिविवाहगर्भसंस्कारयोरितरकर्मसु।
भर्तुरेव ९ पूर्वोदितैःपुंसवनंविधेयंमासेतृतीयेत्वथविष्णुपूजा मासेष्टमेविष्णुविधातृजीवैर्लग्नेशुभेमृत्युगृहेचशुद्धे॥

मृतस्तदापुनस्त्रीणामेव राजमार्तण्डः विवाहकार्यंकुसुमप्रतिष्ठागर्भप्रतिष्ठाविशुद्धे अन्यानिकार्याणिधवस्यशुद्धोपत्यौविहीनेप्रमदासशुद्धा। ९
अथयेषांएथगेवपुंसवनमित्याचारः तदर्थेपुंसवनमुहूर्तंविष्णुपूजामुहूर्तंइंद्रवज्रयाह पूर्वोदितैरिति पूर्वोदितैःसीमंतकर्मण्युदितैस्तिथ्यादिनिरूपलक्षि
ततृतीयेमासिपुंसवनाख्यकर्मविधेयम् पुंसात्मपतःनेनेतिपुंसवनकर्मणःपुंस्त्वहेतुना अथेति सीमंतानंतरमष्टमेमासिविष्णुविधातृजीवैःश्रवणरो
हिणीपुष्येउपलक्षितेदिवसेतथालग्नेशुभेशुभस्वामिकेशुभयुतदृष्टेवा मृत्युगृहेअष्टमस्थानेशुद्धेसर्वग्रहरहितेचसतिविष्णुपूजाकार्या १० ॥ ६
॥ ६ ॥ ९ ॥ ६ ॥ ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्योनमोनमः ॥ ६ ॥ ९ ॥

अथजातकर्मनामकरणयोर्मुहूर्त्तंउपजात्याह तज्जातकर्मादीनि जातकर्मयद्यपिजन्मनानंतरमेवविहितंतथापिसंक्रांतिव्यतीपातादिदुष्टविवा
सतपापित्राद्यसन्निधानेवत नकृतंतदामुहूर्त्तविचारणेनकार्यंगर्गः व्यतीपातेचसंक्रांतौग्रहणेवैधृतावपिश्राद्धंविनाशुभंकर्मप्राप्तेकाले
पिनचरेदिति अतएवकालविकल्पोक्तोनारदेन तस्मिन्जन्ममुहूर्त्तेतुसूतकान्तेतदाशिशोः जातकर्मचकर्त्तव्यंपितृपूजनपूर्वकमिति अत
एवकाम्यमिति जातकर्मादीनितस्यजातस्यशिशोर्जातकर्मआदिशब्दान्नामकर्मोच्यते पर्वाणिचतुर्दश्यष्टमीकृष्णेत्यादिपूर्वोक्तानि रिक्ताभिन्न
उनतिथौशुभेन्हिशुभवारे तथाएकादशेद्वादशेवापिघस्रेदिवसे तथामृदुध्रुवक्षिप्रचरनक्षत्रेषुशस्तेःस्यादितिक्रांतंजातकर्मादिविधेयंकर्त्तव्य
तच्चश्रवणानंतरंसचैलस्नानंकृत्वाकार्यम् वसिष्ठः श्रुत्वाजातंपितापुत्रंसचैलंस्नानमाचरेत् उत्तराभिमुखेमूलानदीवापीषुवातके तच्चश

तज्जातकर्मादिशिशोर्विधेयंपर्वाख्यरिक्तोनतिथौशुभेन्हि एकादशेद्वादशकेपिघस्रेम
दुध्रुवक्षिप्रचरोडुषुस्यात् ॥ ११ ॥ तारकेन कुर्यान्नैमित्तिकंस्नानंशीताभिःकाम्यमेवचेति रात्रावपिकार्यंवसि
ष्ठः पुत्रजन्मनियज्ञेचतथासंक्रमणेरवेः राहोश्चदर्शनेस्नानंप्रशस्तंनान्यथानिशीति सूतकेतिसमुत्पन्नेपुत्रजन्मयदाभवेत् कर्त्तुस्तात्कालि
कीशुद्धिः पूर्वाशौचेनसिध्यति रात्रौजलाशयेगर्भनाशक्तौसांख्यायनः दिवायदाहृतंतोयंकृत्वास्वर्णयुतंतुलत रात्रिस्नानेतुसंप्राप्तेस्नायादन
लसंनिधाविति जातकर्मप्रयोजनमाह गुरुः जातकर्मक्रियाकुर्यात्पुत्रायुःश्रीविवृद्धये ग्रहदोषविनाशायसूतकाशुभविच्छिदे कुमारग्र
हनाशायपुंसांसत्वविवृद्धयेइति वसिष्ठः एकादशेन्हिविप्राणांक्षत्रियाणांत्रयोदशेवैश्यानांषोडशेनामंमासांतेशूद्रजन्मवइति वसिष्ठेनमासना
मान्युक्तानि चैत्रादिमासनामानिवैकुंठोथजनार्दनः उपेंद्रोयज्ञपुरुषोवासुदेवस्त्रिविक्रमः योगीशःपुंडरीकाक्षःकृष्णोऽनंतोऽच्युतस्त
था चक्रधारीतिचैतानिक्रमादाहुर्मनीषिणइति ११ ॥ ॥ ॥ ॥ ॥

पोष्णेति हयोश्विनी एषुरेवासादिनक्षत्रेषु समित्रभरवीज्यकुजेषु अनूराधानक्षत्रसूर्यगुरुभौमवा
अथसूतिकास्नानमुहूर्त्तंवसंततिलकेनाह
रसहितेषु सूता: प्रसूतायाः स्त्रियाः स्नानंशस्तम् आर्द्रात्रयेश्रवणमघाभरणी मिश्रेकृत्तिकाविशाखेमूलचित्रास्नानंशस्तम् बुधवारेशनिवारेवस
रष्टमीषट्षष्ठीरविद्वादशी रिक्तातिथिषुचनशस्तम् स्तन्ययानमुहूर्त्तंदैवज्ञवल्लभे रिक्ताभौमंपरित्यज्यविष्टिंपातंसवैधृति मृदुध्रुवक्षिप्रभेषु स्त
नयानंहितंशिशोरिति १२ अथप्रसंगात् प्रथमादिमासोत्पन्नदंतफलंशार्दूलविक्री डितेनाह मासेचेदिति बालश्चेज्जन्मानंतरप्रथमेमासेचेत्सदशनाद
न्तयुक्तोभवेत् तदास्वयंबालोनश्येत् ततोद्यादिके द्वितीयादिमासे अनुजातभागिनीमात्रग्रजानक्रमादिति द्वितीयेमासियदिदंतोत्पत्तिस्तदा
नुजातंकनिष्ठभ्रातरंहंति एवंतृतीयेभगिनीं चतुर्थेमातरं पंचमेज्येष्ठभ्रातरंषष्ठादिमासेषु अतुलभोगंलभते सप्तमेताता त्पितुः सुखं अष्टमेपुष्टताम्॥

पोष्णमधुवेंदुकरवातहयेषुसूतीस्नानंसमित्रभरवीज्यकुजेषुशस्तं नार्द्रात्रयश्रुतिमघांतकमिश्रमूलत्वाष्ट्रेज्ञसौरिव
स्रुषद्विरिक्ततिथ्याम् १२ मासेचेत्प्रथमेभवेत्सदशनोबालोविनश्येत्स्वयंहन्यात्सक्रमतोनुजातभगिनीमात्रग्रजान्द्व्या॥ दिके॥

नवमेलक्ष्मीं दशमेसौख्यम् अग्रेपिसुखाधिक्यमेव अथोद्विति अथोजनेजन्मकालएवसदशनः दंतयुक्तः स्वपित्रादिहा स्वमात्मा
नंपितरंच आदिशब्दान्मातरमपिनाशयतीतिस्वपित्रादिहा वोर्ध्वमिति वा अथवाऊर्ध्वंऊर्ध्वपंक्तौ जन्मानंतरविहितेनिषिद्धेपिकालेसदशनश्चेत्
स्यात्तदापिस्वपित्रादिहा आत्मपितृनाशकृदिति उक्तंचविष्णुधर्मोत्तरे उपरिप्रथमं यस्यजायंते चशिशोर्द्विजाः तैर्वासहचयस्यस्यात् जन्मभा
गवसत्तम मातरंपितरंचाथस्वदेहात्मनमेवचेति तत्रैवशांतिरपि गजपृष्ठगतमलंनोस्थ्यवास्नापयेद्विजः तदभावेतुधर्मज्ञकांचनेतुवरासने सर्वौष
धीःसर्वगंधैःवीजैःपुष्पैः फलैस्तथा पंचगव्येनरत्नैश्चमृत्तिकाभिश्चभार्गव॥ ॥ ॥ ॥ ॥ ॥

स्थालीपाकेन धातारं पूजयेत्तदनंतरम् सप्ताहं चात्र कर्त्तव्यं तथा ब्राह्मणभोजनम् अष्टमेऽह्नि विप्राणां तथा देया च दक्षिणा कांचनं रजभा गाश्व भुवं वासनमेव चेति १३ अथ दोलाचक्रमनुष्टुभाह दोलेति तत्र बालस्य दोलायां रोहे दोलायां स्थापने अर्कभात् सूर्यक्रांतनक्षत्रात् पंचनक्षत्रैर्नैरुज्यम् तदग्रिमपंचनक्षत्रैर्मरणम् तदग्रिमपंचनक्षत्रैर्देहकार्श्यं कृशत्वं स्यात् तदग्रिमैरिषुभिः पंचनक्षत्रैर्व्याधिः रोगः ततः सप्तनक्षत्रैः सौख्यं स्यात् शिशोरेवं फलं संस्कार्यत्वात् उक्तं च सूर्यभाच्चंद्रभं यावत्संचपंचचतुर्दशांमध्येतु सप्त देया निर्दोलिकाचक्रमुत्तमम् पूर्वभागे निरोगत्वं दक्षिणे मरणं ध्रुवम् पश्चिमे तु कृशो बाल उत्तरे व्याधिसंभवः शेषेषु सप्तधिष्ण्येषु बालकः शयने स्फुरवीति १४ अथ दोलारोहणमुहूर्त्तं वसंततिल

षष्ठाद्दोलभतेहि भोगमतुलं तातात्स्वपुष्टतान् लक्ष्मीसौख्यमथो जनौ सदशनो वोर्ध्वं स्वपित्रादिहा १३ दोलारोहेऽर्कभात्संवशरपंचेषुसप्तभैः नैरुज्यं मरणं कार्श्यं व्याधिः सौख्यं क्रमाच्छिशोः १४ दंतार्कभूपधृतिदिङ्मितवासरे स्याद्धीरे शक्रभेमृदुलघुध्रुवभैः शिशूनां दोलाधिरूढिरथ निष्क्रमणं चतुर्थमासे गमोक्तसमयेर्कमितेन्हि वा सत् १५ कवीज्यास्तचैत्राधिमासेनपौषे जलं पूजयेत्सूतिकामासपूर्तौ॥ ऽ।कापूर्वार्द्धेनोत्तरार्द्धेन निष्क्रमणं मुहूर्त्तं चाह दंतार्केति दंता द्वात्रिंशत् अर्का द्वादश भूपाः षोडश धृतयोऽष्टादश दिशो दश एतस्मिन्दिवसे तथा शक्रभवारे मृदुलघुध्रुवनक्षत्रैरुपलक्षितं बालानां दोलाधिरूढिः दोलायामधिरूढिरारोहः स्यात् अथ चतुर्थमासे गमोक्तसमये यात्राप्रकरणोक्तसमीचीनकाले शिशूनां निष्क्रमणाख्यसंस्कारपूर्वकं गृहाद्बहिर्गमनं स्यात् वा अथवा अर्कमितेन्हि द्वादशदिवसे कुर्यात् गृहान्निष्क्रमणं सूनोश्चतुर्थे मासि कारयेत् यत्रोक्तेसमयेमासि तृतीये द्वादशेन्हि वेति गुरुवचनात् १५ अथ जलपूजामुहूर्त्तं भुजंगप्रयातेनाह कवीज्यास्तेति शुक्रगुर्वोरस्ते चैत्रे अधिमासे पौषेमासे समाप्तो सूतिका [illegible]

सहितेदिनेजलंपूजयेत् पा॰

एतद्व्यतिरिक्तकालेतथाबुधचंद्रगुरुवारेरिक्तावर्जिततिथौदिनिश्चितंश्रवणपुनर्वसुमृगहस्तमूलअनुराधाएभिर्नक्षत्रैः सहितेदिनेजलंपूजयेत् धात्रीपूज्यपूजां विधाय १६ अथान्नप्राश

थकचिदुग्धपानमुहूर्त्तः एकत्रिंशेवासरेवाद्वितीयेजन्मर्क्षवाक्रुद्धलग्नेनुकूले शंखेक्षीरंसन्निदध्याच्छिशूनांचक्रे धात्रीपूज्यपूजां विधाय १६ अथान्नप्राश

नस्रग्धरयाह रिक्तानंदेति अथोनिष्क्रमणानंतरमेवंविधेकालेबालकानांअन्नप्राशनंसत्शुभंस्यात् तत्रैतान्हित्वा एतेवर्ज्याः रिक्तानंदाष्टदर्शा

५।९।१४।१।६।११।८ ३॰ हरिदिवसंद्वादशी उपलक्षणत्वातिथिक्षयंहित्वा शनिभौमरविवारान् श्चहित्वाजन्मर्क्षलग्नाष्टमगृहलवगंलग्नंचहित्वाजन्म।

र्क्षेजन्मलग्नेताभ्यामष्टमलवोऽष्टमगृहं अष्टमलवाष्टमनवांशस्तोगच्छतिप्राप्नोतिएवंविधंलग्नंत्यजेत् इत्यर्थः जन्मराशिविलग्नाभ्यांनेधनेशेच्चविवर्जि

रिक्तानंदाष्टदर्शंहरिदिवसमथोसौरिभौमार्कवारान् ल

बुधेंद्वीज्यवारेविरिक्तेतिथौहिश्रुतीज्यादितीदूर्कनैर्ऋत्यमैत्रे १६ रिक्तानंदाष्टदर्शंहरिदिवसमथोसौरिभौमार्कवारान् ल

ग्नंजन्मर्क्षलग्नाष्टमगृहलवगंमीननमेषालिकंच हित्वापश्चात्समेमास्यथहिमृगदृशांपंचमादोजमासे नक्षत्रैःस्या।

त्स्थिराख्यैःसमृदुलघुचरैर्बालकान्नाशनंसत् १७ ॥ दुर्ध्येदितिकश्यपोक्तेः तथामीननमेषालिकेचअलिर्वृश्चिकः एतानिल

ग्नानिहित्वागोश्चकुंभतुलाकन्यासिंहकर्कनृयुग्मकाः शुभदाराशयश्चैतेनमीनमेषवृश्चिकाः इतिकश्यपोक्तेः षष्ठादिति षष्ठमासमारभ्यसममासेषष्ठा

ष्टमदशद्वादशमासेषुबालानामन्नप्राशनंकार्यम् पुंबालविषमंमेतत् अथानंतरंहिनिश्चयेनमृगदृशांकन्यानांपंचमारोजमासेपंचमसप्तमनवमैका

दशमासेषुअन्नप्राशनं तथाचवसिष्ठः युग्मेषुमासेषुचषष्ठमासात्संवत्सरेवानियतंशिशूनां अयुग्ममासेषुचकन्यकानांनवान्नसंप्राशनमिष्टमेतत्

इति अत्रानेककालाभिधानेपिस्वगृह्योक्तकालोमुख्यस्तत्रशुभकालादिविचारोनास्ति इतरेषुगौणकालेषुशुभकालविचार आवश्यक एवेति।

नक्षत्रैरिति मृदुलघुचरसहितैः स्थिरनक्षत्रैः कुर्यात् १७ ॥ १७ ॥ १७ ॥ ॥ ॥ रामः ॥

लग्नबलं वसंततिलकेनाह केंद्रत्रिकोणेति लग्ने खदशमशुद्धसहिते सर्वग्रहरहिते दशमे इत्यर्थः केंद्रत्रिकोणसहजेषु शुभैः सद्भिः त्रिलाभ रिपुभैः पापैः सद्भिः लग्नाष्टषष्ठस्थानरहितं चंद्रं च अन्नप्राशने प्रशस्तं वदंति नारदः दशमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके शुक्लपक्षे च पूर्वाह्ने सौम्ययुक्त निरीक्षिते त्रिषष्ठलाभगैः पापैः केंद्रधीधर्मगैः शुभैः व्यया रिनिधनस्थेन चंद्रेणप्राशनं शुभं विशेषमाह गुरुः शुक्राज्ञाः क्रमाद्याताः सप्तमाष्टमधर्मगाः भोज्यं भोक्तुर्नवत्वे तु सर्वदा मरणप्रदाः इति भोज्यमन्नं गोधूमादि तस्य नवत्वेन भक्षणीयत्वे सति भोक्तुरन्नप्राशनकर्तुर्बालस्य नवत्वे सति वा। शुक्रः सप्तमः भौमेष्टमः बुधो नवमः एते ग्रहाः मरणप्रदा इत्यर्थः मैत्रेति अनुराधा शततारका स्वाती जन्मनक्षत्राणि केचित् असद्वदंति श्रीपतिना अनुक्तत्वादिति भावः जन्मनक्षत्रनिषेधो गुरुणोक्तः जन्मर्क्षे कर्मनक्षत्रे आधाने च विवर्जयेत् कर्णवेधं तथा पानसरकर्मान्नभोजनमिति जन्म

केंद्रत्रिकोणसहजेषु शुभैः खशुद्धे लग्ने त्रिलाभरिपुगैश्च वदंति पापैः लग्नाष्टषष्ठरहितं शशिनं प्रशस्तं मैत्रांबुपानिल ।
जनुर्भमसच्च के चित् १८ क्षीणेंदुपूर्णचंद्रेज्यज्ञभौमार्कार्किभार्गवैः त्रिकोणव्ययकेंद्राष्टस्थितैरुक्तफलं ग्रहैः १९ ॥८

नक्षत्रेऽन्नस्य भोजनमिति मत्रान्नस्य भोजनमिति व्युत्पाता वार्षिकनवान्नभोजनविषयमेतत् नपुनर्बालान्नप्राशनपरं तत्र नारदेनातिप्राशस्त्याभिधानात् तथा च नारदः पदृवन्धनचौलान्नप्राशने चोपनायने शुभदं जन्मनक्षत्रं अशुभं त्वन्यकर्मणीति १८ अथ ग्रहाणां स्थानवशात् फलान्यनुष्टुप्द्वयेनाह क्षीणेन्द्विति त्रिकोणव्यापकेंद्राणि दशमरहितानि ९।५।१२।१।४।७ अष्टौ ८ एषु स्थितैः क्षीणेंद्वादिभिः अष्टभिः क्षाशीत्यादि फलं भवति यथा एषु स्थानेषु स्थितः क्षीणचंद्रश्चेत्तदान्नप्राशनकृत् बालो भिक्षाशी दरिद्रः स्यात् पूर्णचंद्रश्चेत्तदा ज्योतिष्टोमादियज्ञकृत गुरुश्चेद्दीर्घजीवी बुधश्चेत् ज्ञानी भौमश्चेत् पित्तरुक् पित्तकृता रुग् यस्यासौ पित्तरुक् अर्कश्चेत् कुष्ठी आर्किः शनिश्चेत् अन्नाभावसंबंधी क्लेशोन्नक्लेशः वातप्रधानो व्याधिर्वातव्याधिः एतौ विद्येते यस्य सोऽन्नक्लेशवातव्याधिमान् स्यात् राहुकेत्वोरप्येतदेव फलम् शुक्रश्चेद्भोगभाक् स्यात् क्षीणं

अथभूम्युपवेशनंवसंततिलकेनाह पृथ्वीमितिकुजेविशुद्धेभौमबलेसति रिक्तावर्जितेतिथौपंचममासिव्रजतिलग्नेसतिशुभेन्हिशुभग्रह
वारे तथाध्रुवमृगेज्यानुराधालघुनक्षत्रेरुपलक्षितेकालेकटिसूत्रपट्टसूत्रादिनिर्मितंकटिस्थलेबध्वाकोपृथिव्यांबालमुपवेशयेत् मंत्रपाठपुरः
सरउपवेशनाख्यसंस्कारंकुर्यात् मंत्राश्चपद्मपुराणे रक्षैनंवसुधेदेविसदासर्वगतंशुभे आयुःप्रमाणंसकलंनिक्षिपस्वहरिप्रिये अचिरादायुष
स्तस्यये किंचित्परिपंथिनः जीवितारोग्यवित्तेषुनिर्दहस्वाचिरेणतान् धारिण्यशेषभूतानांमातस्त्वमधिकाह्यसि कुमारंपाहिमातास्त्वंब्रह्मातद
नुमन्यताम् तस्योपवेशनंकृत्वाभूमौब्राह्मणभोजनं ततःकृत्वाततःकार्यमुत्सवंपूर्ववद्द्विजइति उत्सवोनीराजनादि इदंकन्यापुत्रयोःसाधा

भिक्षाशीयज्ञकृद्दीर्घजीवीज्ञानीचपित्तरुक् कुष्ठीचान्नलेकेतवातव्याधिमान्भोगभागिति २० पृथ्वीवराहमभिपूज्य।
कुजेविशुद्धेरिक्तंतिथौव्रजतिपंचममासिबालम् बध्वाशुभेन्हिकटिसूत्रमथध्रुवेंदुज्येष्ठर्क्षमैत्रलघुभेरुपवेशयेत्
कौ २१ तस्मिन्कालेस्थापयेत्तत्पुरस्ताद्वस्त्रंशस्त्रंपुस्तकंलेखनींच स्वर्णंरौप्यंयच्चगृण्हातिबालस्तैराजीवैस्तस्यवृत्तिःप्र।
दिष्टा २२ वारेभौमार्किहीनेध्रुवमृदुलघुभैर्विष्णुमूलादितीद्रस्वातीवस्वभ्युपेतैर्मिथुनमृगरुतातुंभगोमीनलग्ने सौम्यैः
कें द्रत्रिकोणेरशुभगगनगैःशत्रुलाभत्रिसंस्थैस्तांबूलंसार्धमासद्वयमितसमयेप्रोक्तमन्नाशनेवा २३ ॥ ६ रणं विशेषाभा

वात् इतिभूम्युपवेशनम् २१ अथजीविकापरीक्षाभूम्युपवेशनकालएवशालिन्याह तस्मिन्कालइति स्पष्टार्थं आजीवि जीविकाभिः ग्रीवा।
जीविकीवार्त्तेत्यभिधानात् २२ अथशिशोस्तांबूलमुहूर्त्तंस्रग्धरयाह वारेभौमार्किहीनेइति भौमशनिवर्जितेवारेश्रवणमूलपुनर्वसुज्येष्ठा।
स्वातीधनिष्ठासहितैः ध्रुवमृदुलघुनक्षत्रैरुपलक्षितेकाले मिथुनमकरकन्याकुंभवृषमीनानामन्यतमेलग्नेसौम्यग्रहैःकेन्द्रत्रिकोणगतैः अ
शुभगगनगैः पापग्रहैः षष्ठैकादशतृतीयगैः सार्द्धमासद्वयेसमयेबालकस्यतांबूलदानंप्रोक्तम् वाऽथवाअन्नाशनेअन्नप्राशनसमयेप्रोक्तं

अथकर्णवेधमुहूर्त्तंस्रग्धरयाह हित्वेतामिति एतान्पदार्थान्हित्वाकर्णवेधः प्रशस्तः इत्यन्वयः हरिशयनं आषाढशुक्लैकादशीकार्त्तिकशुद्धैकाद
शीपर्यन्तम् जन्ममासंयस्मिन् चांद्रमासेचैत्रादौजन्मसजन्ममासः केचित् आरभ्यजन्मदिवसंयावत्त्रिंशद्दिनंभवेत् जन्ममासःसविज्ञेयोवर्जितःस
र्वकर्मसुइतिलक्षणलक्षितंवर्जयंतिरिक्ताम् ४।९।१४ युग्माब्दंसमवर्षंद्वितीयचतुर्थादिकम् जन्मतारांप्रथमदशमैकोनविंशात्मिकांचहित्वा।
ऋत्विति ऋतुमुनिवसुभिःसंमितेमासिषष्ठसप्तमाष्टममासेषु अथोवा जन्माहात्सूर्यैःद्वादशभिः भूपैःषोडशभिः परिगणितेदिवसेसौरसावनेबुधगु
रुशुक्रचंद्रवारे ओजाब्देविषमवर्षे विष्णुयुग्मश्रवणधनिष्ठे पुनर्वसूनिमृदूनिमृगरेवतीचित्रानुराधाःलघूनिहस्ताश्विपुष्याभिज्जितएतैर्नक्षत्रैः

**हित्वेतांश्चैत्रपौषावमहरिशयनंजन्ममासंचरिक्तांयुग्माब्दंजन्मतारामृतुमुनिवसुभिःसंमितेमास्यथोवा जन्माहात्सूर्य
भूपैःपरिमितदिवसेज्ञेज्यशुक्रेंदुवारेथोजाब्देविष्णुयुग्मादितिमृदुलघुभैःकर्णवेधःप्रशस्तः २४ संशुद्धेमृत्तिभवनेत्रिकोण
केंद्रत्र्यायस्थैःशुभखचरैःकवीज्यलग्ने पापाख्यैररिसहजायगेहसंस्थैर्लग्नस्थेत्रिदशगुरौशुभावहःस्यात् २५ ॥ २५ ॥**

कर्णवेधःप्रशस्तः २४ अथकर्णवेधेलग्नशुद्धिंप्रहर्षिण्याह संशुद्धइति मृतिभवनेऽष्टमस्थानेसंशुद्धेग्रहरहितेसति शुभग्रहैः त्रिकोणकेंद्रत्र्याय ९।५।
१।४।७।१०।३।११ स्थैःसद्भिः कवीज्यलग्नेशुक्रगुर्वोर्लग्नेवृषतुलाधनुर्मीनाख्ये पापाख्यैःग्रहैः तृतीयषष्ठैकादशस्थानस्थैःगुरौलग्नस्थेसतिकर्णवे
धःशुभावहःशुभजनकःस्यात् अथाब्दपूर्त्तिमुहूर्त्तंःप्रसंगात् विधिरत्नेअब्देनसौरेणशिशोःसमानेबालकस्याप्यथजन्मधिष्ण्ये कृत्वायुषोवृद्धि।
करंचकर्मनद्वारयेद्धस्त्रसुवर्णसूत्रम् तत्रखंडनस्त्वेवगर्गःउदयव्यापिजन्मर्क्षंतस्माद्भात्यत्तजन्मतःसंगवव्यापिखंड सेतत्रजन्मकरंशुभम्।
द्राक्षिणा स्यातुजंन्ममासीयजन्मतिथावब्दपूर्त्तिंकुर्वन्तीति २५ ॥ २५ ॥ २५ ॥ २५ ॥ ६ ॥ ॥

च पुनः भृगोर्वार्धके पूर्वस्यामस्तेपक्षं पंचदशदिनानि पश्चादस्तेपंचदिनानि गुरोः तेवाल्यवार्धके पक्षं पंचदशदिनानि उदात् तेकश्चिते २७
अथापरमतेन वाल्यवार्द्धके चानुष्टुभाह तेदशाहमिति दिग्नियमंसत्काद्दुयोर्गुरुशुक्रयोः तेवाल्यवार्द्धके दशाह दश दिनं प्रोक्तं केश्चित् अ
परैस्तु सप्तदिन वाल्यवार्द्धके प्रोक्ते अन्ये त्र्यहं त्रिदिवसं ते बाल्यवार्द्धके प्रोक्ते परंतु आत्ययिके कार्यस्यावश्यभावः अत्ययः सद्यो जनमस्येति आ
त्यायिकं तस्मिन् लग्नान्तराभावे सति अतिकालस्य बटोः अवश्यदेयायाः कन्याया वा यथासंभवं दश सप्त त्रिदिनानि वर्ज्यानि नान्यथेत्यर्थः अ
थ देशभेदेन वाव्यवस्था गर्गः शुक्रो गुरुः प्राक्परतः श्ववालो विंध्ये दशावंतिषु सप्तरात्रम् वंगेषु हूणेषु च षट् च पंच शेषेषु देशे त्रिदिनं निषिद्धम्
चंद्रस्य विशेषमाह अर्धाह्नमिति विधोस्ते वाल्यवार्धके क्रमेण धर्धाहं त्र्यहं च भवतः बाल्यम र्धदिनं वार्धके त्रिदिनं चंद्रस्येत्यर्थः उक्तं च वसिष्ठेन वृद्धत्वमि

पक्षं पंचदिनं ते हि गुरोः पक्षमुदात्तते २७ ते दशाहं द्वयोः प्रोक्ते केश्चित् सप्तदिनं परैः त्र्यहं त्वात्ययिके प्यन्ये रर्धाहं च त्र्यहं वि॰
धोः २८ चूडा वर्षात्तृतीयात्स्वभवति विषमेऽष्टार्करिक्ताद्यषष्ठीपर्वोनाहे विचैत्रोदगयनसमये ज्ञेंदुशुक्रेज्यकानां ॥ २९ ॥

दोस्त्रिदिनं दिनार्धं बालत्वमस्तत्वं अहर्द्वयं चापि नीक्तमेकं दिवसं शिशुत्वमिस्येतदिंदोस्तदयुक्तमेकेति कश्यपेन बालोपीन्दुः शुभ एवोक्तं
वृद्धचंद्रस्त्रियं हंतिपतिं हस्त्यमागतः पन्नस्त्वमृतरश्मित्वाद्बालोपि शुभदः शशी ति अतएव संपूर्णायामपि प्रतिपदि द्वितीयादिने द्वितीयायां प्रा
प्ति यज्ञोपवीतादिकं शिष्टाः कुर्वन्ति २९ अथ चौलमुहूर्तं स्रग्धरयाद्भुताभ्यामाह चूडावर्षाद्वितीक्षीणचंद्रेति तृतीयाद्वर्षादितिल्यपलोपे पंचमी तेन ग
र्भाधानकालाज्जन्मकालाद्वा तृतीये वर्षे पंचमे वा चूडाकरणं प्रभवति कृतं शुभोदर्कं भवतीत्यर्थः तृतीयेब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः
पंचमे सप्तमे वापि स्त्रियाः पुंसोपि वा सममिति मनुना प्रथमे वर्षे अप्युक्तम् चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः प्रथमेब्दे तृतीये वा कर्तव्या ।

श्रुतिबोदनादिति अत्रबहुकालोक्तौपथागत्यंव्यवस्था स्वगृह्येविशेषकालानुक्तौतुसमबलत्वात्सर्वेषांविकल्पः अष्टमी अर्कोद्वादशी रिक्ता
आद्याप्रतिपत् षष्ठी पर्वाणिपूर्वोक्तानि चतुर्दश्यष्टमीत्यादीनि एतैरूने रहितेन्हि गुरुणागलग्रहोपिनिषिद्धः विद्यारंभंव्रतोदेशंसौरं चैवविशेषतः।
गलग्रहेनकर्तव्यंयदीच्छेत पुत्रजीवितमिति विवेत्रइति चैत्ररहिते उत्तरायणेचूडास्यात् शुभाशुभकरणो कोजन्ममास निषेधोपिध्येयः तथाद्धे
दुशुक्रेज्यकानांवारे लग्नांशयोश्चतिसौम्यग्रहाणांवारे सौम्यग्रहाणांलग्नेतेषामेवनवांशेच चूडास्यात पापग्रहाणांवारेपि विप्राणांतुशुभोरविः क्षत्रि
याणांतुभूसूनुर्विट्शूद्राणांशनिः शुभश्रुतिप्रयोगपारिजातोक्तेः तथास्वभनिधनत्तनोभंलग्नराशिभ्यस्वस्यभेस्वस्वभाभ्यांनिधनं अष्टमं ऽग्नतं न
विद्यतेयस्मिंस्तनौस्वजन्मलग्नजन्मराशिभ्यामष्टमलग्नरहितेलग्नेचूडास्यात् तथानैधनेअष्टमस्थानेशुद्धियुक्तेशुक्रव्यतिरिक्तसर्वग्रहर
हितेलग्नेचूडास्यात् अष्टमस्थाग्रहाः सर्वेनेष्टाःशुक्रविवर्जिता शुक्रस्तुनिधनेबालस्सर्वसंपत्करः शिशोरितिपराशरोक्तेः ज्येष्ठासुक्ते रनूराधार
हितेमृदुचरलघुभेद्वादशनक्षत्रैः अथलग्नबलं एकादशषष्ठतृतीयस्थानस्थैः पापग्रहैः सद्भिः तथाक्षीणचंद्रभौमशनिसूर्यैः केंद्रगतैः क्रमेणयथा
संख्यमस्युःशस्त्रान्मृतिः पंगुतारवजत्वं ज्वरः एतानिफलानिस्युःबुधजीवभार्गवैस्तुकेन्द्रस्थैः शुभंकल्याणंस्यात् वसिष्ठेनलग्नादिविषयेवि
शेषउक्तः मेषेदुःखीमृगेंद्रेचवृश्चिकेव्यसनंभवेत् राजवधाचधनुषिशुभयुक्तेनदुष्यति विषशस्त्रजलैर्घोरैः पीड्यतेमृत्युनान्वितः सौरेमृत्यो
र्घटेलग्नेशुभयुक्तेपिसत्सतः जामित्रेभास्करेसौरे मृत्युःस्याद्भूमिजेतथा शुक्रेसौख्यविनाशःस्यान्मंदभाग्यःशनैश्चरेइतिनक्षत्रेष्वपिविशेषमाह॥
गर्गः हस्ताश्विविष्णुपौष्णानिश्रविष्ठादित्यपुष्यभं सौम्यचित्रेतथासौरे उत्तमानवतारकाः त्रीण्युत्तराणिवायव्यंरोहिणीवारुणंतथा सौरेषण्म
ध्यमाप्रोक्ताशेषाद्वादशगर्हिताइति सौरादिषुजन्मलग्नशुभमाह भृगुः कृषिंप्रयाणंसौरंचविवाहःप्राशनंतथा शिशोर्वस्त्रंचपानंचजन्मराशौ
शुभंभवेत् जन्मलग्नशुभंक्षौरमध्येवर्ज्यंव्ययेष्टमइति वर्मस्तु आत्मराश्युदयेषष्ठेद्वादशेनिधनेतथा शत्रुक्षेत्रेचनीचेचक्षौरंनैवप्रशस्यते

चपुनः भृगोर्वार्धकं पूर्वस्यामस्तेपक्षं पंचदशदिनानि पश्चादस्ते पंचदिनानि गुरोः ते बाल्यवार्धके पक्षं पंचदशदिनानि उदगात्ते क[illegible] स्थ
अथापरमतेन बाल्यवार्द्धकं चानुष्टुभाह तेदशाहमिति दिग्मियमस्त्काद्द्वयोर्गुरुशुक्रयोः ते बाल्यवार्द्धके दशाहं दश दिनं प्रोक्तं कैश्चित् अ-
परैस्तु सप्तदिनं बाल्यवार्द्धके प्रोक्ते अन्ये त्र्यहं त्रिदिवसं ते बाल्यवार्द्धके प्रोक्ते परंतु आत्ययिके कार्यस्यावश्यंभावः अत्ययः स प्रयोजनमस्येति आ-
त्यायिकं तस्मिन् लग्नान्तराभावे सति अतिकालस्य बटोः अवश्यं देयायाः कन्याया वा यथासंभवं दश सप्त त्रिदिनानि वर्ज्यानि नान्यथेत्यर्थः अ-
थ देशभेदेन व्यवस्था गर्गः शुक्रो गुरुः प्राक्परतश्च बालो विंध्ये दशावंतिषु सप्तरात्रम् वंगेषु हूणेषु च षट् च पंच शेषेषु देशे त्रिदिनं निषिद्धम्
चंद्रस्य विशेषमाह अर्धाहमिति विधोस्ते बाल्यवार्धके क्रमेणार्धाहं त्र्यहं च भवतः बाल्यमर्धदिनं वार्धके त्रिदिनं चंद्रस्येत्यर्थः उक्तं च वसिष्ठेन वृद्धत्वमि-

पक्षं पंच दिनं ते द्वे गुरोः पक्षमुदगात्तते २७ ते दशाहं द्वयोः प्रोक्ते कैश्चित् सप्तदिनं परैः त्र्यहं त्वात्ययिकेप्यन्यैरर्धाहं च त्र्यहं वि-
धोः २८ चूडा वर्षात्तृतीयात्प्रभवति विषमेऽष्टार्करिक्ताद्यषष्ठीपर्वोनाहे विचैत्रोदगयनसमये ज्ञेंदुशुक्रेज्यकानां ॥ २९ ॥

शेस्त्रिदिनं दिनार्धं बालत्वमस्तत्वं अहर्द्वयं चापि नोक्तमेकं दिवसं शिशुत्वमित्येतदिंदोस्तद्युक्तमेवेति कश्यपेन बालोपीन्दुः शुभ एवोक्तं
वृद्धचंद्रस्त्रियहं तिपतिहस्त्यमागतः यन्नस्त्वमृतरश्मित्वाद्बालोपि शुभदः शशी ति अत एव संपूर्णायामपि प्रतिपदि द्वितीयादिने द्वितीयायां प्रा-
प्तिर्यज्ञोपवीतादिकं शिष्टाः कुर्वन्ति २९ अथ चौलमुहूर्तं स्रग्धरार्धाद्भुताभ्यामाह चूडा वर्षादिति तीक्ष्णचंद्रेति तृतीयाद्वर्षादिति ल्यब्लोपे पंचमी तेन ग-
र्भाधानकालाज्जन्मकालाद्वा तृतीये वर्षे पंचमे वा चूडाकरणं प्रभवति कृतं शुभोदर्कं भवतीत्यर्थः तृतीयेब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः
पंचमे सप्तमे वापि स्त्रियाः पुंसोपि वा सममिति मनुना प्रथमे वर्षे अप्युक्तम् चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः प्रथमेब्दे तृतीये वा कर्त्तव्या ॥

श्रुतिविरोधनादिति अन्यवक्तृकालोक्तौ पथ्यापथ्यं व्यवस्था स्वगृह्ये विशेषकालानुक्तौ तु समबलत्वात्सर्वेषां विकल्पः अष्टमी अर्को द्वादशी रिक्ता
आद्या प्रतिपत् षष्ठी पर्वाणि पूर्वोक्तानि चतुर्दश्यष्टमीत्यादीनि एतैरूने रहिते तन्हि गुरुणा गलग्रहोपि निषिद्धः विद्यारंभं व्रतोद्देशं सौरं चैव विशेषतः।
गलग्रहे न कर्तव्यं यदीच्छेत् पुत्रजीवितमिति विवेत्रइति चैत्ररहिते उत्तरायणे चूडा स्यात् शुभाशुभमकरणोक्तौ जन्ममास निषेधोपि ध्येयः तथा ज्ये
दुष्ठशुक्रेज्यकानां वारे लग्नांशयोश्चेति सौम्यग्रहाणां वारे सौम्यग्रहाणां लग्ने तेषामेव नवांशे च चूडा स्यात् पापग्रहाणां वारेपि विप्राणां तु शुभो रविः क्षत्रि
याणां तु भूसूनुर्विट्शूद्राणां शनिः शुभ इति प्रयोगपारिजातोक्तेः तथा स्वभनिधनत्ततनौ भं लग्नराशिश्च स्वस्य भं स्वभं ताभ्यां निधनं अष्टमं … न
विद्यते यस्मिंस्तनौ स्वजन्मलग्नजन्मराशिभ्यामष्टमलग्नरहिते लग्ने चूडा स्यात् तथा नैधने अष्टमस्थाने शुद्धियुक्ते शुक्रव्यतिरिक्त सर्वग्रहर
हिते लग्ने चूडा स्यात् अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः शुक्रस्तु निधने चौले सर्वसंपत्करः शिशोरिति पराशरोक्तेः ज्येष्ठापुत्रे रत्नमालायां र
हिते मृदु चर लघुभे द्वादश नक्षत्रैः अथ लग्नबलं एकादशषष्ठतृतीयस्थानस्थैः पापग्रहैः सद्भिः तथा क्षीणचंद्रभौमशनिसूर्यैः केंद्रगतैः क्रमेण यथा
संख्यं मृत्युः शस्त्रान्मृतिः पंगुता खजत्वं ज्वरः एतानि फलानि स्युः बुधजीवभार्गवैस्तु केन्द्रस्थैः शुभकल्याणं स्यात् वसिष्ठेन लग्नादि विषये वि
शेष उक्तः मेषेंदुः रवी मृगेंद्रे च वृश्चिके व्यसनं भवेत् राजबधाद्धनुषि शुभयुक्तेन दुष्यति विषशस्त्रजलैर्घोरैः पीड्यते मरणान्वितः सौरे मृत्यो
र्घटे लग्ने शुभयुक्तेपि सत्ततः जामित्रे भास्करे सौरे मृत्युः स्याद्भूमिजे तथा शुक्रे सौख्यविनाशः स्यान्मदभाग्ये शनैश्चरे इति नक्षत्रेषु विशेषमाह ॥
गर्गः हस्ताश्विविष्णुपौष्णानि श्रविष्ठादित्यपुष्यभं सौम्यचित्रे तथा सौरे उत्तमानवतारकाः त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा सौरे षण्म
ध्यमा प्रोक्ताः शेषा द्वादश गर्हिता इति सौरादिषु जन्मलग्नशुभमाह भृगुः कृषिं प्रयाणं सौरं च विवाहः प्राशनं तथा शिशोर्वस्त्रं च पानं च जन्मराशौ
शुभं भवेत् जन्मलग्नं शुभं सौरं मध्ये वर्ज्यं व्ययेष्टम इति मरणस्तु आत्मराश्युदये षष्ठे द्वादशे निधने तथा शत्रुक्षेत्रे च नीचे च सौरं नैव प्रशस्यते

जन्मलग्नंसतिसंभवेब्वर्न्येमिसनयोर्य्यवस्था वपुनरिष्टतारयागोचरप्रकरणोक्तयाशुभफलदयातारयाचूडास्यात् केशवमानर्त्तपुरंपा
टलिपुत्रंपुरीमहच्छत्र शितिमदितचस्मरतांसौरविधौभवतिकल्याणमिति २९ । ३० अथसमर्भायासंस्कारमातुर्विशेषमनुष्टुभाह पंचमासाधिके
तिसंस्कार्यमातुगर्भेपंचमासिभ्योधिकेसतिचौलंशुभंनस्यात् पंचमासेभ्यः पूर्वंचौलंशुभमित्यर्थः गर्भेमातुःकुमारस्यनकुर्याच्चौलकर्मचपंचमास
दधःकुर्यादतऊर्ध्वंनकारयेदितिवसिष्ठोक्तेः अस्यापवादमाह पंचवर्षाधिकस्येति उल्लंघितुपंचवर्षस्यशिशोर्मातरिगर्भिण्यामपिसत्यांपंच
मादूर्ध्वमपिचौलमिष्टं नारदः सूनोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् पंचाब्दात्प्रागतोर्ध्वंतुगर्भिण्यामपिकारयेत् सह्योपनीत्याकुर्याच्चतद

वारेलग्नांशयोश्चस्वभनिधनततनौनैधनेशस्फुरयुक्तेशाक्रोपेतेर्विमैत्रैर्मृदुचरलघुभैरायषङ्गिस्थपापैः २९ क्षीणचं
द्रकुजसौरिभास्करैर्मृत्युशस्त्रमृतिपंगुताज्वराः स्युःक्रमेणशुभजीवभार्गवैःकेंद्रगैश्चशुभमिष्टतारया ३० पंचमा
साधिकेमातुर्गर्भेचौलंशिशोर्नसत् पंचवर्षाधिकस्येष्टंगर्भिण्यामपिमातरि ३१ तारादौष्ट्येब्जेत्रिकोणोच्चगेनसौ
रंसत्स्यात्सौम्यमित्रस्ववर्गे सौम्येभेब्जेशोभनेदुष्टताराशस्ताज्ञेयाक्षौरयात्रादिकृत्ये ३२ ऋतुमत्याःसूतिकायाःसूनोश्चौ
((लादिनाचरेत ॥२

दोषोनविद्यतेइति अत्रतुपंचवर्षाणांन्यूनाधिकभावोनापेक्षितःसर्वापवादकत्वात् ३१ अथचौलेताराबलमाव। ॥
श्यकमित्युक्तम् तत्रदुष्टतारापवादंशालिन्याह तारादौष्ट्येति दुष्टतारायामपिसत् अब्जेचंद्रेत्रिकोणोच्चगेत्रिकोणमेउच्चगे
वासतिक्षौरंसत् शुभंस्यात् वासौम्यमित्रस्ववर्गेसौम्यानांबुधगुरुशुक्राणांषड्वर्गेचंद्रेसति अथवास्वस्यैवषड्वर्गेसतिक्षौरंसत्स्यात् सौम्येति
सौम्येभेशुभग्रहराशौचन्द्रेसति स्वस्यगोचरेणशोभनेसतिदुष्टतारापिक्षौरयात्रादिकृत्येशोभनासमीचीनाज्ञेया ३२ अथविशेषमनुष्टुभाह

उक्तं च प्रचेतसा यस्य भार्या गा

तथा सूतिकायाजातापत्यायाश्च सूनोश्चौलोपनयनविवाहादिकं स्यं बालस्य बालिकी श्च वा नाचरेत् न कुर्यात् उक्तं च प्रचेतसा यस्य भार्या गा
लिकं कर्तव्यं तस्य माता रजस्वला तदसमृत्युमाप्नोति पंचमं दिवसे विनेति विवाहोत्सवकार्येषु माता चेद्रजस्वला वैधव्यं जायते तत्र कन्या योःपा
णिपीडने इति ज्येष्ठापत्यस्याद्यगर्भस्य तस्य कन्यायावाश्च भकर्तव्यं चौलादिकं ज्येष्ठमासेन भवति केश्चिदिति मार्गशीर्षेपि केश्चिदाचार्यैराद्यगर्भे
सूतकन्ययोर्मङ्गलकृत्येनेष्यते भरद्वाजः मार्गशीर्षे तथा ज्येष्ठे क्षौरं परिणयं व्रतम् आद्यगर्भे दुहितुश्च यत्नेन परिवर्जयेदिति ३३ अथ सामान्यतः
क्षौरमुहूर्ते तन्निषिद्धकालं च शार्दूलविक्रीडितेनाह दंतक्षौरेति चौलोदितेवारनक्षत्रे दंतक्रियाघर्षणादिका क्षौरक्रिया विहिता उक्ता निषिद्धकालमा
ह पातयीति पतंगस्य सूर्यस्यापत्यं पोतंगिः शनिः शनिभौमरविवारान्त्यक्त्वा नवमघस्त्रय दिने क्षौरं कृतं ततो नवमदिने पुनः क्षौरं न कार्यं तथा संध्यावातः

ज्येष्ठापत्यस्य न ज्येष्ठे केश्चिन्मार्गेपि नेष्यते ३३ दंतक्षौरनखक्रियात्रविहिता चौलोदिते वारभे पातंग्यारवीन्विहाय न
वमं घस्त्रं च संध्यां तथा रिक्तापर्वनिशां निरासनरणग्रामप्रयाणोद्यतस्नाताभ्यक्तकृताशनैर्नहि पुनः कार्या हितप्रेप्सु
भिः ३४ ऋतुपाणिपीडमृतिबंधमोक्षणे क्षुरकर्म च द्विजनृपाज्ञया चरेत् ॥ सायंकालो विहाय तथा रिक्ताम् पर्वाणि पूर्वोक्ता

नि निशां रात्रिं च विहाय अथाधिकारिणः हितप्रेप्सुभिः स्वशुभमिच्छद्भिः एतादृशैर्हि निश्चयेन क्षौरक्रिया न कार्या कैर्निरासनैः आसनरहि
तैः रणः संग्रामः ग्रामप्रयाणमर्थयात्रा एतदर्थमुद्यतः कृतोद्योगैः स्नातः कृतस्नानैः अभ्यक्तैः कृततैलाभ्यंगैः कृताशनैः कृतभोजनैः स्वर्णाद्यलं
कारभूषितैरित्यपि ज्ञेयम् ३४ अथ मंजुभाषण्या विशेषमाह ऋतुपाणिपीडेति ऋतौ यज्ञे तथा पाणिपीडो विवाहस्तत्र श्मश्रुकर्मादौ मृतौ माता पित्रो
र्मरणे बन्धमोक्षणे कारागृहे बन्धस्य मोक्षणे द्विजाज्ञया ब्रह्मणाज्ञया बन्धमोक्षणे राजाज्ञया दुष्टेपि वारनक्षत्रादौ क्षौरं चरेत् कुर्यात् अन्यच्च गंग
यां भास्करक्षेत्रे माता पित्रोर्मृते हनि आधाने सोमपाने च षट्सु क्षौरं विधीयते अन्यच्च राजकार्यनियुक्तानां नटानां रूपजीविनाम् ॥ ॥

श्मश्रुरोमनखच्छेदे नास्तिकालविशोधनंइति अथशवेति गर्भिणीमर्भवतीतस्याः भर्त्ताशववाहेमृतकवहनम् तीर्थगमंतीर्थयात्रां उप
लक्षणत्वाद्विदेशगमनमपि सिंधुमज्जनंसमुद्रस्नानम् क्षौरंएतानिकर्माणिनाचरेत्नकुर्यात् उक्तंच सिंधुस्नानंद्रुमच्छेदंवपनंप्रेतवाहनं
विदेशगमनंचैवनकुर्याद्गर्भिणीपतिः राजायोगीपुरंध्रीचमातापित्रोस्तुजीवितोः मुंडनंसर्वतीर्थेषुनकुर्याद्गर्भिणीपतिः नारदः वपनंमैथुनंतीर्थं
वर्जयेद्गर्भिणीपतिः श्राद्धंचसप्तमान्मासादूर्ध्वंचान्यत्रवेदवित् ५५ अथराज्ञांक्षौरेविशेषंसर्वथावर्ज्यनक्षत्राणिवभुजंगप्रपातेनाह नृपाणामि
ति नृपाणांपंचमेपंचमेदिनेक्षौरनक्षत्रेश्मश्रुकर्महितंस्यात् पंचमेदिनेयदिक्षौरनक्षत्राभावस्तदर्थमाह अस्योदयेवेति अथवाऽस्यक्षौरभ
स्यउदयेश्मश्रुकर्मकार्यम् उदयशब्देनतन्नक्षत्रस्यस्वामिनोमुहूर्त्तः तथाचगर्गः क्षौरकर्ममहीशानोपंचमेहनि कर्त्तव्यंक्षौरनक्षत्रेप्यथवातन्मुहूर्त्ते

**शववाहतीर्थगमसिंधुमज्जनेक्षुरमाचरेन्नखलुगर्भिणीपतिः ३५ नृपाणांहितंक्षौरभेश्मश्रुकर्मदिनेपंचमेपंचमेस्यो ॥दयेवा॥**

इति उत्पलेनतुवराहपद्यव्याख्यानावसरे अस्यउदयेअस्यक्षौरभस्यउदयेलग्नेइतिव्याख्यातं यथा मेषलग्नंत्रिंशत् भागात्म
कंतत्रायास्त्रयोदशभागाविंशतिकलाधिकाएवताकालेनमेषलग्नेउदयंयातितावदश्विनीनक्षत्रंउदयंयातीति त नैतदनंतरंयावंतएवांशायाव
ताकालेनोदयंयातितावद्भरण्युदयइत्यनेनन्यायेनसर्वेषांनक्षत्राणामुदयात्तेषाः भ्रातरस्तु एवंव्याकुर्यात् यस्मिन्कालेअश्विन्याउदयंक्षितिजसंबं
धः संपद्यतेतत्समयमारभ्ययावद्भरण्याउदयक्षितिजसंबंधः तदन्तरेयावान्कालः सोश्विन्याउदयउच्यते एवंसत्युदयलग्नद्वयांशांतराला
त् गणितमार्गेणयावानिष्टकालआगच्छेत् सएवतन्नक्षत्रोदयइतिनिष्कृष्टोऽर्थः षडग्निरिति अग्निः कृत्तिकाक्षौरादरसाषड्वारकृत्तिका
यस्यसः एवंत्रीणिमैत्रः अनूराधायस्य अष्टौकः रोहिण्यायस्यपंचपित्र्याणिमघायस्य अभ्ययश्चत्वारः अर्यमाणउत्तराफाल्गुनीयस्यसः ॥

एतादृशासौरकद्व्रतोवर्षानंतरंमृत्युंमरणमेतिप्राप्नोति वसिष्ठः अष्टाब्दसं: पितृपंचकश्चषड्वन्हिधिष्ण्याश्चतुर्यमर्क्षैः त्रिमैत्रभःपन्नजःसन्धि
भोपिसौरीनरोब्दान्निधनंगतः सइतिसौर ३६ अथप्राग्मकालत्वादक्षरारंभमुहूर्तंप्रपंचामरच्छन्दसाह गणेशेति गणेशविघ्नमूढसिद्धो वाक्सरस्व
ती रमालक्ष्मीः एतादेवताः प्रपूज्यपंचमेवर्षेसति शिवएकादशीद्वादशीदशमीद्वितीयाषष्ठीपंचमीतृतीया आसामन्यतमतिथौ रवावुदक् उत्तरा
यण —— गतेसति तथालघुनक्षत्राणिहस्ताश्विपुष्यः श्रवणस्वातीरेवतीपुनर्वसुः ईश आर्द्रा तक्ष चित्रा मित्रमनूराधा एषामन्यतमनक्षत्रेस
ति तथासतांसोमज्ञगुरुशुक्राणांदिनेदिवसे तथाचरराशयोमेषकर्कतुलामकरास्तद्रहितशुभस्वामिके वृषमिथुनकन्याधनुर्मीनानाम

षड्गिनिस्त्रिमैत्रोऽष्टकः पंचपित्र्योऽब्दतोऽब्ध्ययमाः सौरकुन्मृत्युमेति ३६ गणेशविष्णुवाग्रमाः प्रपूज्य पंचमाब्दके तिथौ।
शिवार्कदिक्द्विषट्शरत्रिके रवावुदक् लघुश्रवोनिलान्त्यभादितीशतक्षमित्रभे चरोनसत्तनौ शिशोर्लिपिग्रहः सतां दिने
३७ मृगात्कराच्छ्रुतेस्त्रयेऽश्विमूलपूर्वकात्रये गुरुद्वयेऽर्कजीववित्सितेऽह्निषट्शरत्रिके शिवार्कदिक्द्विकेतिथौ ध्रुवान्त्यमि
त्रभेपरैः शुभैरधीतिरुत्तमा त्रिकोणकेंद्रगैः स्मृता. ३८ ॥ ३८ ॥ ॥ ९ ॥ न्यतमेलग्नेसतिशिशोर्लिपिग्रहोनूतनाक्षरलि

खनाद्यारंभः कार्यः ३७ अथविद्यारंभमुहूर्तंपंचचामरेणाह मृगादिति मृगात्त्रयेमृगार्द्रापुनर्वसुषु हस्तात्त्रयेहस्तचित्रास्वातीषु श्रुतेः श्रवणात्त्र
यं श्रवणधनिष्ठाशतभेषु अश्विन्यां मूलपूर्वात्रयेगुरुद्वयेपुष्याश्लेषयोः तथासूर्यगुरुबुधशुक्राणांदिनेतथाषष्ठीपंचम्यादिसप्ततिथिषु शुभे
केंद्रत्रिकोणगे सद्भिः अधीतिः शुभास्मृता अधीतिरध्ययनम् परैः ध्रुवान्त्यमित्रभे अधीतिः शुभाः प्रोक्ताः इदंवचनंविद्याविषयमिति दीपि
कोक्तेः विद्यारंभेश्रवणत्रयोपादानंमहेश्वरादिमतात् वसिष्ठादिभिः श्रवणस्यकेवलस्यान्नोक्तत्वात् इतिविद्यारंभः ३८ ॥ ३८ ॥

अथव्रतबन्धइति विंशतिपद्यैः प्रोच्यतेइतिशेषः तस्यत्रिविधोपिकालोनित्यःकाम्योगौणश्चक्रमेणतंशार्दूलविक्रीडितेनाह विप्राणमि
ति गर्भदिनमारभ्याष्टमेसौरे वर्षेऽथवाजनेरुत्पत्तिदिनात्सौर वर्षेष्टमेसति विप्राणांव्रतबंधनंनित्यंनिगदितं अथकाम्यंविप्राणामेवगर्भाद्वा
जनेर्वापंचमेवर्षेकार्यं एवंक्षितिभुजांक्षत्रियाणांगर्भाज्जनेर्वाषष्ठेकाम्यं गर्भाज्जनेर्वाएकादशेसौरवर्षेनित्यंवैश्यानांपुनस्तथैवाष्टमेकाम्यं।
तथैवगर्भाज्जनेर्वाद्वादशेनित्यं नारदः आधानादष्टमेवर्षेगर्भतोवाग्रजन्मना राज्ञामेकादशेमौंजीबन्धनंद्वादशेविशामिति अत्रफलश्रवणा
न्नित्यमित्यवसीयतेमनुः ब्रह्मवर्चसकामस्यकार्यंविप्रस्यपंचमे राज्ञोबलार्थिनःषष्ठेवैश्यस्यार्थार्थिनोष्टमे अत्रफलश्रवणात्काम्यतापि
उीनसिनागर्भपंचमेव्रतबंधनमुक्तम् गर्भपंचमेब्राह्मणमुपनयेदिति गर्भषष्ठेऽष्टमेवक्षत्रियविशोर्ज्ञेयःगर्भादिःसंख्यावर्षाणामितिस्मृते॥

विप्राणांव्रतबंधनंनिगदितंगर्भाज्जनेर्वाष्टमेवर्षेवाप्यथपंचमेक्षितिभुजांषष्ठेतथैकादशे वैश्यानांपुनरष्ट।
मेप्यथपुनःस्याद्द्वादशेवत्सरेकालेथद्विगुणेगतेनिगदितेगौणंतदाहुर्बुधाः ३९॥ आपस्तंबसूत्रे गर्भाष्टमेब्राह्मणमु

पनयेद्गर्भैकादशेषुवैश्यमितिबहुत्वान्यथामुपपत्यागर्भषष्ठसप्तमाष्टमेष्विति वृत्तिकृद्व्याख्यानात्त्रयाणामपिनित्यकालताएवंगर्भैकादशेष्विस्यादा
वपिव्याख्येयम् एतच्चतच्छाखाध्यायिविषयंज्ञेयं अथगौणकालउच्यते निगदितेप्रोक्तेगर्भाज्जनेर्वाष्टमेइत्यादिकेकालेतस्मिन्द्विगुणितेसतितद्व्र
तबन्धनंगौणमाहुः यथाब्राह्मणस्यषोडशवर्षपर्यंतम् क्षत्रियस्यद्वाविंशतिवर्षपर्यंत वैश्यस्यचतुर्विंशतिवर्षपर्यंतंगौणमित्यर्थः मनुःआषोडशा
द्ब्राह्मणस्यसावित्रीनाभिवर्त्तते आद्वाविंशात्क्षत्रबंधोराचतुर्विंशतिर्विशः अतऊर्ध्वंत्रयोप्येतेयथाकालमसंस्कृताः सावित्रीपतिताव्रात्या
भवंत्यपिचगर्हिताइतिकेशवः स्वस्वमौंज्जीमुख्यकालेश्रेष्ठमध्याधमाःसमाःतिस्रःकेशवदैवज्ञैःप्रोक्तामौंजीनिबंधनेइति ३९॥

अथव्रतबंधेनक्षत्रादिकं वसंततिलकेनाह क्षिप्रेति गी चीर्णां वृप तिष्ठेत्यादिनारक्षिणायननिषेधादुत्तरायणमासषट्कं प्रशस्तमिति मासा
नामुक्तत्वान्नक्षत्रादिकमेवोक्तं तत्र काश्यपः ऋतौवसंते विप्राणां ग्रीष्मेराज्ञांशरद्यथा विशामुख्यं च सर्वेषां द्विजानां चोपनायनंसाधारणंवमा
सेषुमाघादिषुचपंचसु क्षिप्रेति क्षिप्राणि हस्ताश्विपुष्याः ध्रुवाणि रोहिण्युत्तरात्रयं अहिराश्लेषा चराणि श्रवणधनिष्ठाशततारापुनर्वसुस्वा
तः मूलं मृदूनि मृगरेवतीचित्रानुराधाः तिस्रः पूर्वा रौद्रमार्द्रा या एषुद्वाविंशतिभेषुव्रतबंधनं सत् उक्तंच प्राजापत्यादिषट्कं सेमगर्क्षादिषुपंच
स्त मूलादि दशके चैव सभैत्रे व्रतबंधनमिति अर्थाद्भरणी कृत्तिका मघा विशाखा ज्येष्ठाः स्तनकार्यमित्यर्थः एतानि सर्वशाखानक्षत्रमेलकाभि
प्रायेणोक्तानि क्वचिज्ज्येष्ठा शततारापि गृहीता श्रीपतिनिबंधे अश्विनीमृगचित्रासु हस्ते स्वात्यां च शक्रभे पुष्ये च पूर्वफाल्गुन्यां श्रवणे पौष्णभे
तथा वासवे शततारासु व्रतबंधः प्रशस्यते भुजबलराजमार्तंडयोरपि हस्तत्रये रेवत्यादिषु त्रये च शाकेंदु पुष्याश्विनी रेवती षिति हस्ते शक्राश्वि

क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेऽर्कविद्गुरुसितेंदुदिने व्रतं सत् द्वित्रीषुरुद्ररविदिक्प्रमिते तिथौ च कृष्णादिम
त्रिलवकेपि न चापराण्हे ४०॥ ⌒ चित्रादिति वसुवरुणोपेंद्रपुष्येंदुपौष्णस्वातीष्वव्याहतास्वस्त्युपनयनं भार्गवाद्यैर्मुनींद्रैरिति

च अर्केति सूर्यबुधगुरुशुक्रचंद्रदिवसेषु व्रतं सत् अर्थाद्भौमशनी निषिद्धौ नारदः आचार्यसौम्यकाव्यानां वाराः शस्ताः तौ मध्यफलदावित
रौ निंदितौ व्रते तत्राप्यस्तगते बुधस्य वारे वर्ज्यः अस्तगतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनीति नारदोक्तेः द्वित्रीषुइति द्वितीया तृतीया पंचम्येका
दशी द्वादशी दशमी संज्ञासु तिथिषु च व्रतं सत्स्यात् नारदेन सप्तमी त्रयोदश्याः प्राशस्त्यमुक्तं तद्वसंताभिप्रायेण ज्ञेयं उक्तं च तेनैव विनतु नावसंतेन
कृष्णपक्षे गलग्रहे अपराण्हे चोपनीतः पुनः संस्कारमर्हतीति कृष्णादिमिति विहितमासानां कृष्णपक्षस्यादिमत्रिलवके पंचमीपर्यंतं व्रतं स
त् स्यात् चतुर्थीमपि कृष्णपक्षे त्वाद्यं त्रिभागं शुभं दं व्रते सदेति वसिष्ठोक्तेः न चेति त्रिधा विभक्तदिनस्य चर्पे विभागः क्रमेण पूर्वाण्हमध्या
न्होपराण्हाः संज्ञका भवंति तत्रापराण्हभागे व्रतं सत् अपराण्हे चोपनीतः पुनः संस्कारमर्हतीति नारदोक्तेः त्रिधा विभज्य दिवसं तत्रादौ कर्म दै

अथ व्रतबन्धे सामान्यतो लग्नभङ्गयोगं प्रमाणिकयाह कवीज्येति कृतौ षष्ठे मृतौ वाष्टमस्थाने चेच्छुक्रगुरुचंद्रलग्नस्वामिनो भवंति त
दा अधमा मरणकारकाः अब्जभार्गवी चंद्रशुक्रौ व्यये अधमौ खलाः पापग्रहाः लग्नाष्टमपंचमस्थानेषु स्थिताः अधमाः ४१ अथ सामान्य
तो लग्नमनुष्टुभाह व्रतबन्ध इति शुभग्रहाः अष्टमषष्ठद्वादशस्थानस्थिताश्चेत्स्युर्न शोभनाः अन्यस्थाने व्रतबंधे शोभनाः खलाः पापाः तृती
यषष्ठैकादशस्थानेषु शोभनाः स्युः गोकर्केति पूर्णः शुक्लपक्षीयो विधुः वृषभस्थः कर्कस्थश्च तनौ यदि भवेत् तदा सत् शोभनः नान्यथा गुरुः
द्रे लग्नेभिशस्तः स्यात्क्षयरोगी सितेतरे शुक्लपक्षे भवेद्यज्ञास्वभे तुंगे विशेषत इति वश्यपस्तूच्चस्थचंद्रस्तदा एवन्यषेधत वर्धमानो षिवापूर्ण
श्चंद्रो यदि विलग्नगः निःस्वं करोति व्रतिनं लग्नगः क्षयरोगिणमिति उच्चस्थस्वंधिनोः पक्षयोर्देशाचारतो व्यवस्था स्वगृहगस्तु उत्तमम

कवीज्यचंद्रलग्नपा रिपौ मृतौ व्रतेऽधमाः व्ययेऽब्जभार्गवौ तथा तनौ मृतौ सुते खलाः ४१ व्रतबन्धेऽष्टषड्रिःफवर्जिताः
शोभनाः शुभाः त्रिषडाये खलाः पूर्णो [illegible] कर्कस्थो विधुस्तनौ ४२ विप्राधीशौ भार्गवेज्यौ कुजार्कौ राजन्यानामोषधीशो वि
शां च शूद्राणां ज्ञश्चांत्यजानां शनिः स्याच्छाखेशाः स्युर्जीवशुक्रारसौम्याः ४३ शाखेशवारतनुवीर्यमतीव शस्तं शाखेश
सूर्यशशिजीवबले व्रतं सत्॥ ४४ नहूये ४२ अथ वर्णेशशाखेशान् शालिन्याह विप्राधीशाविति शुक्रबृहस्पती ब्राह्मणाधीशौ भौमसू
र्यौ क्षत्रियाणां स्वामिनौ ओषधीशश्चंद्रो वैश्यानां स्वामी बुधः शूद्राणां स्वामी शनिरंत्यजानां चांडालानां स्वामी ऋग्वेदोथ यजुर्वेदः सामवेदोऽथ
र्वणः इति विरक्रमाज्जीवशुक्रारसौम्याः शाखेशाः स्युः ऋग्वेदस्य गुरुः यजुषः शुक्रः साम्नो भौमः अथर्वणो बुधस्वामी ४३ वर्णेशशाखेशयोः
प्रयोजनं वसंततिलकेनाह शाखेशेति यः स्वशाखाधिपस्तस्य वारस्तनुर्लग्नं च वीर्यं बलं गोचरप्रकारेण स्वगृहाद्यवस्थितं तेन वा बलवत्त्वं च व्र
तबन्धेऽतीव शस्तम् यथा गुरुः ऋग्वेदिनामीशोऽतो गुरुवारे गुरुलग्ने धनुर्मीनाख्ये गुरुबले च सति उपनयनम्॥ अतीव शुभं एवं सर्वत्र ज्ञेयं नारदः

शाखाधिपतिवारश्चाशाखाधिपबलंशिशोः शाखाधिपतिलग्नंचत्रितयंदुर्लभंव्रते शाखेति शाखांवेदस्तस्येशःशाखेशोक्तेः जीवेइति जीवेभृगौ
चकाराच्छाखेशेवर्णेशेवाविजितेयुद्धेपराजितेनीचराशिस्थेचसतिव्रतेनानुष्ठितेनसतांवेदशास्त्रविधिनावेदाध्ययनविधिर्नित्यनैमित्तिकश्रौत
स्मार्त्तकर्मानुष्ठानाख्यस्तेषांसमाहारद्वन्द्वस्तेनरहितोव्रतीस्यात् वसिष्ठः शाखेशगुरुशुक्राणांमौढ्येबाल्येचवार्धके नैवोपनयनंकार्यंवर्णेशेदुर्बले
सतीति तेनभौमबुधयोरस्तेसामगाथर्वणशाखिनोरुपनयनादिनभवतीतितत्वम् तत्रनीचायवस्थितत्वेपिशाखेशःपरिहारमाह वसिष्ठःशत्रुनीचा
धिशत्रुस्थस्वांशेवास्वोच्चभागगे शाखेशेवागुरौशुक्रेननीचफलमश्नुतइति शुक्रस्यशत्रुराशिस्थत्वंवृषभेस्थेर्केकदाचित्संभवति नीचगत्वंशरदि
वैश्यमुपनयेदितिवैश्योपनयनंसंभवतीतिध्येयम् ४४ अथजन्ममासादेःप्रतिप्रसवमाह जन्मर्क्षेति जन्मनक्षत्रेजन्ममासेजन्मलग्नेआदिशब्देन

जीवेभृगौरिपुगृहेविजितेचनीचेस्याद्दशाखाधिपेनारहितोव्रतेन ४४ जन्मर्क्षमासलग्नादौव्रतेविद्याधिकोव्रती ॥
आद्यगर्भेपिविप्राणांक्षत्रादीनामनादिमे ४५ ॥

जन्मतिथौविप्राणांब्राह्मणानांआद्यगर्भेपि आपिशब्दात् द्वितीयगर्भादावपिव्र
तीबालोव्रतेयज्ञोपवीतेविद्याधिकःस्यात् क्षत्रादीनांक्षत्रियवैश्यानांपुनरनादिमेद्वितीयगर्भादिबालकेसतिजन्मर्क्षमासलग्नादौविद्याधिकोव्रती
स्यात् आद्यगर्भेतुतेषांसर्वथानिषेधएव शौनकः जन्मोदयेजन्मऋतारकाऋमासेतथाजन्मतिथौचराशौव्रतेन विप्रोत्सपरिश्रुतोपिप्राज्ञोविशेषःप्र
थितःपृथिव्यां गर्भाष्टमेगर्गपराशराद्यैःफलंयदुक्तंव्रतबन्धनेतु ततोधिकंजन्मऋतारकाऋमासेयथाजन्मनिवाडवानाम् विप्रभूदेववाडवाइत्यभिधा
नात् प्रथमदशमैकोनविंशनक्षत्राणांग्रहणार्थंजन्मऋतारकास्वित्युक्तम् जन्ममासनिषेधस्तु आद्यगर्भविषयः क्षत्रियवैश्ययोः विप्राणांतुवाडवा
नामितिविशेषोक्तेराद्यगर्भानाद्यगर्भसाधारणंजन्ममासेऽपनयनम् जन्ममासादौशस्तमितिज्ञेयम् ४५ ॥ ४५ ॥ ४५ ॥ ४५ ॥

अथ गुरुबलमनुष्टुभाह बटुकन्येति बटुरुपनयनाधिकारी कन्या स्त्री जातयत जन्मराशेर्नवपंचमैकादशद्वितीयसप्तमस्थानस्थितो गुरुः
श्रेष्ठ उत्तमः दशषट्द्वितीयप्रथमस्थानस्थितो गुरुः पूजया पूजाविधानेनानुष्ठितन श्रेष्ठः अन्यत्र चतुर्थाष्टमद्वादशस्थानस्थो निंद्यो निषिद्ध।
इत्यर्थः नारदः बालस्य बलहीनोपि शान्त्या जीवो बलप्रदः यथोक्तवत्सरे कार्यमनुक्तेनोपनायने वसिष्ठः उक्तेपि वर्षे न गुरुर्बली चेच्छांत्या प्र
शस्तं व्रतबन्धकर्म अनुक्तवर्षे शुभबलप्रदोपि नैवेतयोस्त्वबलं गरीय इति गर्गः व्रतबन्धे विवाहे च प्रतिष्ठायां विशेषतः गोचरेणैव कर्त्तव्यं वेधा
दिकर्म कारणमिति वेधस्तु व्ययेपक्षैः त्रिगेशैलैः खगेनंदैः शरेखशरैः रंध्रे रुद्रैः ग्रहे विद्धो गुरुः शुद्धोशुभोन्यथा प्राच्यास्तु गोचरबलाभावे अष्टक
वर्गबलमाहुः राजमार्त्तण्डः अष्टवर्गविशुद्धेषु गुरुशीतांशुभानुषु व्रतोद्वाहौ तु कर्त्तव्यौ गोचरेण कदाचनेति अन्यच्च अष्टकवर्गेण ये शुद्धास्ते
शुद्धाः सर्वकर्मसु सूक्ष्माष्टवर्गसंशुद्धिः स्तुलाशुद्धिस्तु गोचरे तत्र गुरोरष्टवर्गे बृहज्जातके दिकूस्वायाद्याष्टमदायवंधुषुकुजात्स्वात्त्रिके षंगिराः सू

वटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः श्रेष्ठो गुरुः षषट्स्याद्ये पूजयान्यत्र निंदितः ४६ स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः।

र्यात्त्रिनयेषु धीस्वनवदिकूलाभारिगोभार्गवात् जायायार्थनवात्मनेषु हिमगोर्मन्दात्त्रिषट्द्वीव्यये दिग्धीषट्स्वसुखायपूर्वे
नवगो ज्ञात्सस्मरेषु दयात् वराहः पूजाभिलाषं प्रति निस्पृहे पि कुर्याद्गुरौ शुद्धिविवर्जितेपि वरस्य लाभे शुभदं विवाहं वदंति गर्गच्यवनादिमुख्याः अ
त्र चतुर्थाष्टमद्वादशस्थानस्थितत्वेन गुरोर्द्विगुणत्रिगुणादिकां पूजां विधाय विवाहव्रतबन्धादि शुभमिति संप्रदायविदः ४६ अथ गुरुदोषस्यापवाद
मनुष्टुभाह स्वोच्च इति गुरुश्चतुर्थादिनिंद्यस्थानस्थितोपि स्वोच्चे कर्के स्वभे धनुर्मीने स्वमैत्रे मेषसिंहवृश्चिके स्वांशे धनुर्मीननवांशे वर्गोत्तमनवांशे
यथा वृषराशौ वृषनवांशे गुरुर्वर्गोत्तमलक्षणम् वर्गोत्तमा नवांशाश्चराद्विषु प्रथममध्यांता इति एषु स्थितो गुरुः इष्टशुभफलदाता अन्येषु एतादृशो
गुरुः अतीवशुभः भुजबलः वर्गोन मे [illegible] के स्वभवनोच्च नवांशके वा जन्माष्टरिःफरिष्फुखत्रिचतुर्थगोपि जीवः॥ ९ ॥ २

स्वार्थस्वकृत्करोविवाहे नीचेति नीचंमकरः अरिस्थाःमिथुनकन्यातुलावृषराशिस्थः शुभोप्यसन् अनिष्टफलदातेत्यर्थःउक्तंच उच्चस्थः
स्वगृहेस्वहृद्भवनगोवाचस्पतिर्नित्यशः पूर्णायुर्विविधार्थसौख्यजनकोजन्माष्टमस्थोपिचेत् नीचस्थोरिगृहेदिवाकरकरच्छायानुगामीसदा।
पीडः निष्फलंददातिनियतंवैधव्यदुःखास्पदं अत्राष्टमस्थोपिचेदित्यपिशब्देनचाष्टमंलक्षणगुणप्रपूजयेदितिविधानात्पूजामनीहमाने
प्युपनयनादिशुभंस्यात् द्वादशचतुर्थस्थानस्यतुद्विगुणपूजामिच्छतः तथातृतीयादिस्थानस्यपूजामात्रापेक्षस्यगुरोः शुभफलदातृतास्ती
तिकिंवक्तव्यमितिकैमुतिकन्यायसूचनार्थोपिशब्दः नचाष्टमंलक्षणपूजयेदितिशत्रुगृहस्थितगुर्वभिप्रायं अस्यापवादोरत्नकोशे गो
चराष्टकवर्गाभ्यांयस्यशुद्धिर्नलभ्यते तस्योपनयनंकार्यंचैत्रेमीनगतेरवौ हरौसिंहाश्रगेजीवेनीचस्थेनीचभागगे मौंजीबंधःशुभःप्रोक्तश्चैत्रे
मीनगतेरवौ पाठांतरेजन्मभादष्टगेसिंहेनीचेवाशत्रुगेगुराविति अर्थाच्चैत्रेमेषगेर्कोनिषिद्धः तथाचोक्तं सौम्यायनेव्रतंकार्यंचैत्रेमासिविशेषतः

**रिःफाष्टतुर्यगोपीष्टोनीचारिस्थःशुभोप्यसन् ४७ कृष्णेप्रदोषेनध्यायेशनौनिश्यपराह्णके॥ ॐ ॥श्रीशुभम्**

मेषेनतुनिषेधोयदिफाल्गुनेस्यात्जस्तुवैशाखगतोनतुनिंद्यः मध्याश्रितौद्वावपिवर्जनीयावित्यादिवाचामपिमेवयुक्तिरितिदुर्गगणेशदैवज्ञैरभ्या
धायिताभिर्मूलमिवप्रतिभातिमूलवाक्याभावात् ४७ अथव्रतबन्धेवर्ज्याननुष्टुभाह कृष्णइति एषुव्रतबन्धोनेष्टः कृष्णेप्रथमत्रिभागरहिते
कृष्णपक्षे प्रदोषेयस्मिन् दिनेसंध्याकालेप्रदोषोलक्षणमर्कतर्केस्यादग्रेवक्ष्यति अनध्यायेवक्ष्यमाणे निशीति अंगवंगकलिंगेषुसौराष्ट्रमगधे
षुच तीर्थयात्रांविनागच्छन्पुनःसंस्कारमर्हतीतिपुनःसंस्कारप्राप्तौनिमित्तानंतरमेवनैमित्तिकन्यायेनयदिरात्रिसद्भावस्तदोपनयनंमाभूदि
तित्रिपदोक्तिः तथाप्राक्संध्यागातः संध्यातस्यांगर्जितेमेघशब्दे वसिष्ठः व्रतेहिपूर्वसंध्यायांवारिदापदिगर्जति तद्दिनेस्यादनध्यायव्रतंतत्र
विवर्जयेदिति अपरार्कःक्षीणेचंद्रेष्टमेशुक्रेनिरंशेचैवभास्करे कर्तव्यनोपनयनंनानध्यायेगलग्रहे राशेःप्रथमभागस्थोनिरंशःसूर्यउच्यते

चत्वारिंसप्तम्यादिदिनत्रयं चतुर्थी चैकतः प्रोक्ता अष्टावेते गलग्रहः दैवज्ञमनोहरे प्रदोषे निश्यनध्याये मन्दे कृष्णे गलग्रहे मध्यं विनोपनीतस्तु पुनः
संस्कारमर्हति गलग्रहे प्रदोषे च वस्त्वल्पापुरुषजायते इति ४८ अथांशफलमनुष्टुभाह क्रूरो जड इति षट्कर्माणि यजनं याजनं चैव तथा दानप्रतिग्रहौ
अध्यापनं चाध्ययनं षट्कर्मा धर्मभाक् द्विज इति अन्यत्स्पष्टम् ४९ अथचंद्रनवांशफलं स्वनवांशे सापवादं तज्जौ लगुरुवद्मोटनकमिति लक्षणलक्षितेन
मोटनकच्छंदसाह विद्यानिरत इति यस्मिन्कस्मिन्राशौ चंद्रे यदि शुभग्रहराशिनवांशे चेत्तदा व्रती विद्यानिरतो भवेत् यदि पापग्रहराशिनवांशे चंद्र
स्तदा दरिद्रतरः धनरहितः यदि स्वलवे कर्कांशे स्यात्तदा बहुदुःखसहितो भवेत् अथ स्वांशगतचंद्रस्यापवादमाह कर्णेति कर्णे श्रवणे अदितौ पुन

प्राक्संध्यागर्जिते नेष्टो व्रतबंधो गलग्रहे ४८ क्रूरो जडो भवेत्सापः पटुः षट्कर्मकृद् द्वदुः यज्ञार्थभाक्तथा मूर्खो वीरव्याद्यंशे त
नौ क्रमात् ४९ विद्यानिरतः शुभराशिलवे पापांशलवे हि दरिद्रतरः चंद्रे स्वलवे बहुदुःखयुतः कर्णादितिभे धनवान्
स्वलवे ५० राजसेवी वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः प्राज्ञोऽर्थवान्म्लेच्छसेवी चंद्रे सूर्यादिखेचरैः ५१ शुक्रे जीवे तथा
चंद्रे सूर्यभौमार्किसंयुते ॥ वैसे नक्षत्रे उपनयने स्वांशे चंद्रः स्यात्तदा धनवान् भवेत् नारदः श्रवणादितिनक्षत्रे कर्कांशस्थे निशाक
रे तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान् ५० केंद्रस्थानां फलमनुष्टुभाह राजसेवीति केंद्रे सूर्यादिखेचरैः प्रत्येकसहितक्रमादिदं फलं ज्ञेयम् ।
अन्यत्स्पष्टं अत्र लग्नस्थचंद्रे केंद्रस्थशनिं च विना सर्वे ग्रहाः शुभा इत्यवगम्यते मुनिभिस्तु केंद्रे पापा निषिद्धा इत्युक्तम् नारदः स्फूर्जितं केंद्रगे भौमे शि
ष्याचार्यविनाशनं अत्र स्वगृहोच्चादावस्थिताः पापाः केंद्रस्थाः शुभफलदातारः अन्यथा नेति विरुद्धार्थवचनयोर्विषयविवेकः ५१ अथान्यदाह शु
क्रे ति शुक्रे जीवे चंद्रे त्रिषु एकसूर्यसंयुते व्रती निर्गुणः स्यात् भौमसंयुते क्रूरचेष्टः क्रूरा हिंसनशीलाचेष्टा यस्य तादृशः स्यात् ॥ [illegible]

ज्ञो निर्दयो वा स्यात् तथा तस्मिन्नेव जीवे शुक्रे चंद्रे वा प्रत्येकं सद्भिर्युते पटुः सर्वविद्यानिपुणः स्यात् ५२ अथान्यत्प्रमाणिकयाह विधौ सितांशगेति चंद्रे
शुक्रांशगे सुंके त्रिकोणगे गुरौ तनौ लग्ने च सति व्रतीबटुः समस्तांश्चतुरो वेदान्वेत्तीति समस्तवेदवित् एवं यमांशगे शनिनवांशसंस्थिते चंद्रे सति लग्ने गुरौ
शुक्रांशगे सुंके त्रिकोणगे सति अपि निर्घृणः स्यात् महेश्वरः जीविलग्नमधिष्ठिते भृगुसुते धर्मात्मजस्थे विधौ शुक्रांशे खिलवेदविद् विसृतस्तादृशे कृतमौ धर्म
इति नारदः लग्नं सर्वगुणोपेतं लभ्यते स्वैर्दिनेन सत् दोषाल्पत्वं गुणाधिक्यं बहुसंमतमिष्यते दोषदुष्टो हि कालो यः सोयमाहुर्न शक्यते दोषा वेधा
यो महादोष इत्यर्थः ५३ अथानध्यायान् जवनचपलार्यमाह शुक्रविशुक्रे इति अनध्यायाः आषाढशुक्लदशमी ज्येष्ठशुक्लद्वितीया पौषशुक्लै
कादशी माघशुक्लद्वादशी एता अनध्यायाः मृतश्चतुर्दशीतदादित्रितयं चतुर्दशी पूर्णिमा प्रतिपद् कृष्णपक्षे आमावास्या तन्मध्ये अष्टमी च तयोः

निर्गुणः क्रूरचेष्टः स्यान्निर्घृणः सद्युते पटुः ५२ विधौ सितांशगे सिते त्रिकोणगे तनौ गुरौ समस्तवेदविद् द्वितीयमांशगेतिनि
र्घृणः ५३ शुक्रविशुक्रपौषतपसां दिगग्निरुद्रार्कसंख्यासिततिथयः ॥ ७ समाहारः तथा संक्रमणं सूर्यस्य निस्यनं संक्रांतिदिनं

चकारान्मन्वाद्यास्तिथीन्युगाद्या दिनोक्ताः तत्राषाढशुक्लदशमी पौषशुक्लैकादशी च मन्वादि ज्येष्ठशुक्लद्वितीया माघशुक्लद्वादशी च सोपपदे यच्च
पि चैत्रशुक्लतृतीया मन्वादिः वैशाखशुक्लतृतीया युगादिस्तथापि ते उभे तृतीये नानध्यायौ तथैव फाल्गुनकृष्णद्वितीया चतुर्मास्यद्वितीयापि नानध्यायः।
तासां प्राशस्त्याभिधानात् तथा च वसिष्ठः या चैत्रवैशाखसिता तृतीया माघस्य सप्तम्यथ फाल्गुनस्य कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजवसिष्ठ
मुख्यैरिति अन्यासां युगादिमन्वादीनां व्रतबंधे अप्रसंगादेव अग्रहणम् केचिदाचार्याः या चैत्रवैशाखेति वचनं लिखित्वापि स्वेच्छया नांगीकुर्वंति तत्र
नृपधर्मात्रिमे च प्रमाणन पश्यामइत्यलम् तन्मते तृतीये अनध्यायेन ज्ञेयम् व्रते स्थितिपरमावश्यकत्वेद्योतनार्थम् गौतमः पक्षद्वये चतुर्दश्यामष्टमी
तृतीये तथा पक्षादावपि पक्षांते ब्रह्म नाधीयते नरैः फलं च अष्टमी हंत्युपाध्यायं शिष्यं हंति चतुर्दशी॥ ७॥ ॥ ॥ ॥

अमावास्योभयंह्यंविप्रतिपसाठनाशिनी मनुः चातुर्मास्यद्वितीयास्कमन्वादिषुयुगादिषु अष्टकास्कचसंक्रांतौशयनेबोधनेहरेः अनध्यायंप्र
कुर्वीततथासोपपदास्कचेति चातुर्मास्यद्वितीयागर्गेणोक्ताःआषाढफाल्गुनोर्जेषुयाद्वितीयाविधुक्षये चातुर्मास्यद्वितीयास्ताःप्रवदंतिमहर्षयः।
मन्वादयोयुगाद्यश्चपूर्वमुक्ताः सिताज्येष्ठेद्वितीयाचअश्विनेदशमीसिता चतुर्थीद्वादशीमाघेएताःसोपपदाःस्मृताः नैमित्तिकाअनध्यायास्तुस्म
त्यर्थसारे निर्घातभूकंपोल्कानिपतनादिसर्वाद्भुतेष्वाकालिकोनध्यायाः अग्न्युत्पातेवाऽकालदृष्टौवा आर्द्रादिज्येष्ठांतात्कालादन्यत्राकालवृष्टिः सायं
संध्यागर्जनेउदयांतोनध्यायः अर्धरात्रात्पूर्वंगर्जनेअर्धरात्रेवाआकालिकोनध्यायः प्रातःसंध्यागर्जनेत्वहोरात्रमितिकालमर्यादीकृत्येत्याकालं आ
कालेभवआकालिकः यस्मिन्कालेनिमित्तमुत्पन्नंतदारभ्यद्वितीयदिनेतत्कालपर्यंतमित्यर्थः स्मृतिरत्नावल्यां अनूराधर्क्षमारभ्यषोडशर्क्षेषुभा
स्करः यावच्चरतिचैतावदकालंमुनयोविदुरिति कालवृष्टौतु ताकालमकालेतुत्रिरात्रकम् अतिमात्रायवावृष्टिर्नाधीयीतदिनत्रयं आपस्तंबः

**भूतादित्रितयाष्टमीसंक्रमणंचव्रतेष्वनध्यायः ५४ अर्कतर्कत्रितिथिषुप्रदोषःस्यात्तदग्रिमैः रात्र्यर्द्धसार्धप्रह
रयाममध्येस्थितैःक्रमात् ॥ ५५ ॥**

उल्कायामग्न्युत्पातेचसर्वासांविधानामालिकमिति मनुः चौरैरुपप्लुतग्रामेसंभ्रमेचाग्निकारि
ते आकालिकमनध्यायंविद्यात्सर्वाद्भुतेषुचेति अद्भुतेषुरुधिरादिवृष्टिषु वसिष्ठः उपलरुधिरप्रपातेत्र्यहमिति स्मृत्यंतरेविद्युद्गर्जितवृष्टीनांसंपाते
यदाभवेत् कालवृष्टौतुताकालमकालेतुत्रिरात्रकमित्यादिकानैमित्तिकाअनध्यायापदामेखलाबंधात्प्रागुत्पन्नासदाव्रतबंधोनकार्यएव यदातु
मेखलाबंधनदनंतरंब्रह्मौदनपाकात् प्रागुत्पन्नास्तदाजातोपिनप्रवर्त्तते ५४ अथप्रदोषलक्षणमनुष्टुभाह अर्केति तदग्रिमैरर्कादितिथिषुप्रदोषः
स्यात् यथा द्वादश्यामर्धरात्रात्प्राक् त्रयोदशीप्रवृत्तौप्रदोषःषष्ठ्यांसार्धप्रहरमध्येसप्तमीप्रवृत्तिस्तदाप्रदोषःतथातृतीयायांप्रहरमध्येचतुर्थीप्रवेशेप्रदो
षःअत्रद्वितीयप्रहरस्यचरमघटिकाद्वयं...घटिकाद्वयमितःकालःस्थूलोरात्र्यर्द्धशब्देनवाच्यःतेनसमाश्रवाच्चित्वामावादर्धेनपुंसक

अथव्रतबंधानंतरं सायंकाले बह्वृचां ब्रह्मौदनाख्यः संस्कारोभिहितस्तत्रार्थपाविशेषमाह प्राक्ब्रह्मौदनेति स्पष्टार्थं उक्तंच नृसिंहप्रसादे ब्रह्मौदनविधेः पूर्वं यदा
षोगर्जितोभवेत् तदाविघ्नकरंज्ञेयंबटोरध्ययनस्यतत् तस्यशांतिप्रकारंतुवक्ष्येशास्त्रानुसारतः स्वस्तिवाचनपूर्वंतुहवनंकारयेद्बुधः प्रधानंपायसंसाज्यंद्रव्यं
शांतियज्ञोभवेत् सूक्तंबृहस्पतिर्विद्वान्पठेद्द्विजासमाह्वये गायत्रीयुंजतमंत्रः प्रयश्चिंतनुसर्पिषां धेनुंसवत्सकांदद्यादाचार्यायपयस्विनीं शिलाहोमविधेः पा-
श्चात्स्थापयेत्तत्रसंसदि ब्राह्मणान्भोजयेत्पश्चात्ततोब्रह्मौदनंचरेदिति ५६ अथवेदविशेषेणनक्षत्राणिवसंततिलकयाह वेदेति मृगाश्लेषार्द्राहस्तचित्रास्वाती
मूलपूर्वात्रयेषुऋग्वेदाध्यायीनाम् रेवतीहस्तानुराधामृगपुष्यरोहिण्युत्तरात्रयेषुयजुर्वेदाध्यायीनाम् अश्विनीधनिष्ठापुष्यहस्तोत्तरात्रयार्द्राश्रव-
णेषुसामवेदाध्यायिनांमृगरेवतीपुष्याश्विनीहस्तानुराधाधनिष्ठापुनर्वसुषु अथर्ववेदाध्यायिनाम् पूर्वश्लोकात्तुव्रततनसदपरामृष्टमुपनयनंसत्श्रु

॥प्राक्ब्रह्मौदनपाकाद्व्रतबंधानंतरंयदि चेत् उस्रातानध्ययनोत्सतावपि शांतिपूर्वकंतत्स्यात् ५६ वेदक्रमाच्छशिशिवाहिक
रत्रिमूलपूर्वावसुपौष्णकरमैत्रमृगादितीज्ये ध्रौवेषुवाश्विवसुपुष्यकरोत्तरेशकर्णेमृगांत्यलघुमैत्रधनादितौसत् ५७ नांदी
श्राद्धोत्तरंमातुःपुष्पेलग्नांतरेनहि॥

ऽभमित्यर्थः उक्तंच मूलेहस्तत्रयेसार्पशैवेपूर्वात्रयेतथा ऋग्वेदाध्यायिनांकार्यंमेखलाबंधनंबुधैः।
पुष्येपुनर्वसौपौष्णेहस्तेमैत्रेशशांकभे ध्रौवेषुवप्रशस्तःस्याद्यजुषांमौंजिबंधनं पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयं प्रशस्तंमेखलाबंधेबह्वनांसा-
मगायिनां मृगमैत्राश्विनीहस्तौरेवत्यादितिवासवं अथर्वपाठिनांशस्तोभगणोयज्ञनायने ५७ अथान्यंविशेषमनुष्टुभाह नांदीश्राद्धेति नांदीश्राद्धादूर्ध्वंश्राद्धं
तत्कुर्यानंतरंयदिसंस्कारंमातुःपुष्पस्त्रजोदर्शनेजातुसतिलग्नांतरेचनसतितदावश्यकर्त्तव्यत्वेधर्मशास्त्रोक्तांशांतिंविधायचौलंयज्ञोपवीतंविवाहश्च
कार्यः अन्यथासमीचीनलग्नांतरसत्वेसतिचौलादिनसत् दुष्टफलमित्यर्थः मेधातिथिः चौलेचव्रतबन्धेचविवाहयज्ञकर्मणि पत्नीरजस्वलायस्यप्रा-
यस्तस्यनशोभनम् स्मृत्यंतरे प्रारब्धमभ्युदयश्राद्धपुत्रसंस्कारकर्मणि॥ छ ॥ छ ॥ ॐ ॥ छ ॥ ॐ ॥

त्नीरजस्वला जातानुकुर्यात्तस्मिंतातदेति तस्मिंतेतिनांदीश्राद्धं कर्तुमुपलक्षणं अतोज्येष्ठभ्रात्रादिनाकरिष्यमाणनांदीश्राद्धस्याकर्तुः पत्नीरज
स्वलाचेत्तदानांदीश्राद्धनिषेधान्मंगलंनकार्यमेव संस्कार्यमातरि रजस्वलायांतु सन्निहितलग्नांतराऽसंभवेशांतिंकृत्वातदानीमिव तेन्मंगलंकार्यम्
आरब्धत्वान्नस्मृत्युक्तदोषः अपशकुनंनिरासार्थंशांतिः कार्या उक्तंच वधूवरान्यतरस्यजननीचेद्रजस्वला संपूर्णेतुबलेप्राप्तेकुर्यात्तस्याःणिपीडनमितिच
लेग्रहक्लेच वाक्यसारे अलाभेस्तुमुहूर्तस्यरजोदोषेह्युपस्थिते श्रियंसंपूज्यविधिवत्ततोमंगलमाचरेत् हैमींमाषमितांपद्मांश्रीसूक्तविधिनार्चयेत्
पत्रंचपायसंहुत्वाभिषिच्यहितमाचरेत् यदातुकृतेमंगलेमंडपोद्वासनात्प्राक् मातरिरजस्वलायांशांत्यादिकंकार्यमेव मंगलस्यासमाप्तत्वात् यदातु
ज्येष्ठभ्रात्रादिनाकृत्वान्नांदीश्राद्धस्यकर्तुःपत्नीरजस्वलाचेत्तदानकोपिदोषः अन्योपिविशेषस्तत्रैव उपवासेनशुध्यतिनार्यःसद्योरजस्वलाःएकाकि

शांत्या चौलं व्रतं पाणिग्रहः कार्योन्यथानसत् ५९ विचैत्रव्रतमासादौ विभौमास्ते विभूमिजे छुरिकाबंधनं शस्तं नृपा
णांप्राग्विवाहतः ५९ केशांतं षोडशे वर्षे चौलोक्तदिवसे शुभम् ॥ ८ न्येविवाहादौदेशभंगेषुवायदीति ५८ अथ छुरिकाबन्धनमु

हूर्तमनुष्टुभाह विचैत्रेति चैत्रवर्जितेषूपनयनमासेषुमाघफाल्गुनवैशाखज्येष्ठेष्वित्यर्थः आदिशब्देनव्रतबन्धोक्ततिथिनक्षत्रजन्मलग्नादीनां
ग्रहणंवाकीदृशेव्रतमासादौ विभौमास्ते भौमास्तरहिते गुरुशुक्रास्तादिसामान्यनिषेधादेव सिद्धम् तथा विभूमिजेभौमवारसहिते सूर्यादिवारेनृपा
णांक्षत्रियाणांविवाहतःपूर्वंछुरिकायाआल्पशस्त्रविशेषस्यबन्धनंकट्यामितिशेषः तच्छस्तंहितं विवाहात्प्रागित्युक्तेः अवधित्वनिश्चयात्समावर्त्तना
नंतरंकार्यम् अन्यथोपनयनानंतरंकार्यमित्येवब्रूयात् ५९ अथ केशांतसमावर्त्तनमुहूर्ते अनुष्टुभाह केशांतमिति षोडशेवर्षे चौलोक्तदिवसेमुहूर्ते
गोदानापरपर्यायंकेशांतसंज्ञकंमशुभंस्यात् गावःकेशादीयंतेखण्ड्यन्तेयस्मिंस्तद्गोदानेम् गोदानंषोडशेवर्षेइत्येतद्ब्राह्मणविषयम् क्षत्रियविशोर्द्वा
विंशेचतुर्विंशेचविरोधात् तथामनुः केशांतंषोडशेवर्षेब्राह्मणस्यविधीयते राजन्यबंधोर्द्वाविंशेवैश्यस्यद्व्यधिकेततइति ॥ छ ॥ ॥ ॥

आश्वलायनः प्रथमं स्यान्महानाम्नी द्वितीयं च महाव्रतं तृतीयं स्यादुपनिषद्गोदानाख्यं ततः परं अत्र जाताधिकाराद्गोदानं जन्माद्यब्दे तु षोडशे इति
वृत्तिकारवचनात् त्रयोदशे महानाम्न्यादि भवति त्रयोदशे महानाम्नी चतुर्दशे महाव्रतं पञ्चदशे उपनिषद् तं षोडशे गोदानमिति एवं सत्रिय विशेषर
पितृक्तगोदानकालात् प्राक् वर्षचतुष्टयक्रमेण महानाम्न्यादि भवति व्रतोक्ते तिथिहि निश्चयेन यज्ञोपवीतोक्तदिवसे आदिशब्देन वारनक्षत्रतिथिल
ग्नांशकेषु समावर्त्तनकर्मेष्यते अत्र कश्यपेन चैत्रो वर्जितः चैत्रमासविवर्जिते पु माघादिषु च पञ्चसु एतच्च गोदानानंतरं विवाहात्प्राक्कार्यम् कु
र्यात्समावर्त्तनं कर्म पश्चाद्गोदानतः पाणिनिपीडनात्प्रागिति वसिष्ठोक्तेः क्वचिद्द्वितीयवर्षे तन्निषेध उक्तः वधूप्रवेशं व्रतमोक्षणं च पुंसां पुनर्दारपरिग्रहं
च नाब्दे द्वितीये विदधीत धीमान् वदंति गर्गात्रिवसिष्ठमुख्या इति तन्निर्मूलत्वादुपेक्ष्य परिकरोऽलंकार उत्तार्गोयवादरूपः शेषं स्पष्टम् ६ ॥ ६इ

व्रतोक्तदिवसादौ हि समावर्त्तनमिष्यते ६ इति मुहूर्त्तचिंतामणौ संस्कारप्रकरणं पंचमं समाप्तम् ५ ॥

भार्या त्रिवर्गकरणं शुभशीलयुक्ता शीलं शुभं भवति लग्नवशेन तस्याः ॥ ॥ ॥ १ ॥

ति दैवज्ञानंतसुतदैवज्ञरामविरचितायां स्वकृतमुहूर्त्तचिंतामणिटीकायां प्रमिताक्षरायां संस्कारप्रकरणं पंचमं समाप्तम् ५ ॥ अथ विवाहप्रक
रणं व्याख्यायते ॥ तत्रानाश्रमी न तिष्ठेतेत्यादिवचनात्समावर्त्तनानंतरं सर्वाश्रमाणामुपकारकत्वाद्गृहस्थाश्रम एव मुख्यः स चेत्सुशीलस्त्र्यधी
नः शीलं च लग्नाधीनमित्यतो लग्नशुद्धिकथनं वसंततिलकया प्रतिजानीते भार्येति शुभं भर्त्रादेरनुकूलं शीलं स्वभावो यस्याः सा त्रिवर्गस्य ध
र्मार्थकामरूपस्य करणम् अतिशयेन साधनं तस्याः सुलग्नवशेन शीलं शुभं भवति यतः सुतशीलधर्माः तन्निघ्नता विवाहाधीनता अधीनो नि
घ्न आपत्त इत्यमरोक्तेः उपगताः प्राप्ताः अतो हीति निश्चयेन विवाहसमयः परिचिंत्यते विचार्यत इति ननु जन्मकालीनग्रहजनितशुभाशुभं दुर
तिक्रममिति विवाहलग्नानर्थक्यमिति चेन्न ज्योतिषस्य शास्त्राविदितशुभसमयारब्धविधिजन्यापूर्वजनितशुभफलेन जन्मांतरीयदुर्दृष्टध्वंसो भवतीति

शुभलक्षणक्रियाः भजनिता पूर्वसंभवाः संपदः सर्वलोकानां ज्योतिस्तंत्रप्रयोजनमिति सर्वत्रज्ञेयम् १ अथप्रश्नलग्नाद्विवाहयोगद्वयं स्रग्धरया
ह अथशब्दो मंगलार्थः आदौ संपूज्येति आदौगणकं ज्योतिर्विदं रत्नादिभिः मणिवस्त्रफलादिभिः संपूज्य ततः प्रष्टा कन्यायाः उद्वाहं गणकं वेदयेत
गतिब्रुहीत्यादिना ऽ णोकर्तुः कर्मत्वं कीदृशं गणकं स्वस्थचित्तं अव्याकुलांतःकरणं स्वस्थे चित्ते नृहृदयः संभवतीत्युक्तः उत्पलः प्रष्टा मणिकनक
युतैः फलकुसुमैः राशिचक्रमभ्यर्च्य एच्छेद्यथाभिलषितं भक्त्या विनयान्वितः प्रश्नं दिगिति यदि प्रश्नलग्नाद्दशमैकादशतृतीयसप्तमपंचमा
नामन्यतमे स्थाने स्थितश्चंद्रो जीवेन गुरुणा दृष्टः सद्यः शीघ्रं परिणयनकरः स्यात् वा अथवा गोतुले ति वृषतुलाकर्कीणामन्यतमं प्रश्नलग्नं स्यात्त

तस्माद्विवाहसमयः परिचिंत्यते हि तन्निघ्नतामुपगताः सुतशीलधर्माः १ आदौ संपूज्य रत्नादिभिरथ गणकं वेदयेत्स्व।
स्थचित्तं कन्योद्वाहो दिगीशानलहयविशिखे प्रश्नलग्नाद्यदींदुः दृष्टो जीवेन सद्यः परिणयनकरो गोतुलाकर्कटाख्यं वा।
स्यात्प्रश्नस्य लग्नं शुभखचरयुतालोकितं तद्विदध्यात् २ विषमभांशगतौ शशिभार्गवौ तनुगृहं बलिनौ यदि पश्यतः रच
यतो वरलाभमिमौ यदा युगलभांशगतौ युवतिप्रदौ ३ षष्ठाष्टस्थः प्रश्नलग्नाद्यदींदुर्लग्ने क्रूरः सप्तमे वा कुजः स्यात् मू
र्त्तौ विंदुः सप्तमे तस्य भौमो रंडा सा स्यादष्टसंवत्सरेण ४ ॥ शुभग्रहैर्युतमवलोकितं वा भवेत्तत्परिणयनं विदध्यात् २ अथान्यं यो
गद्वयं द्रुतविलंबितेनाह विषमभांशगतावितिस्पष्टार्थं ३ अथप्रश्नलग्नाद्वैधव्ययोगत्रयं शालिन्याह षष्ठाष्टस्थ इति चंद्रः प्रश्नलग्नात्षष्ठाष्टमस्थ
स्तदा कन्याष्टसंवत्सरेण विवाहवर्षाद्रंडा भर्तृनाशिका स्यात् अथवा लग्ने यः कश्चित्क्रूरग्रहः स्यात्ततः सप्तमे कुजो भवेत्तदाष्टवर्षमध्ये रंडा स्यात् के
चित्सप्तमे पि पाप एवं प्रश्नेनिषेधंति कश्यपः एको लग्नगतः पापो अन्यः सप्तमराशिगः आसप्तमाब्दान्मरणं पुरुषस्य न संशय इति तेषां मते सप्तमे
वा खलाः स्यादिति पाठः अथवा मूर्तौ लग्ने चंद्रः तस्य सप्तमे भौमो भवेत् तदा ऽ ष्टवर्षेण रंडा स्यात् ॥ ४ ॥ ४ ॥ ४ ॥ ६ ॥

अथप्रश्नलग्नात्कुलटामृतवत्सायोगंदोधकवृत्तेनाह प्रश्नतनोरिति स्पष्टार्थः कश्यपः स्वनीचगः शत्रुदृष्टः पापः पंचमगो यदा मृतपुत्रां करोत्येव
कुलटां वा न संशय इति ५ अथ विवाहभंगयोगं पुष्पिताग्रयाह यदीति सितातिरिक्तपक्षे कृष्णपक्षे यदि चन्द्रः समराशिवृषककर्कादिषु युतः सन्
तनुग्रहतः प्रश्नलग्नादरिरंध्रे षष्ठेऽष्टमे वा स्थाने स्थितः पापग्रहावलोकितो भवति तदायं योगो विवाहस्य विनाशकारको भवति ६ एवं प्रश्नलग्ना
द्वैधव्यादियोगमभिधायेदानीं जन्मलग्नादावपि बालवैधव्ययोगविचारमतिदिशन्तत्परिहारं शार्दूलविक्रीडितेनाह जन्मोत्थमिति प्रश्नल
ग्नाद्यथा विधवायोगो विचारितस्तथा जन्मोत्थं जन्मलग्नोद्भवं च बालविधवायोगं जातकशास्त्रात् बाल्ये विधवा भौमे पतिसंत्यक्ता दिवाकरेत

प्रश्नतनोर्यदि पापनभोगः पंचमगो रिपुदृष्टशरीरः नीचगतश्च तदा खलु कन्या सा कुलटा त्वथवा मृतवत्सा ५ यदि भव
ति सितातिरिक्तपक्षे तनुगृहतः समराशिगः शशांकः अशुभखचरवीक्षितोऽरिरंध्रे भवति विवाहविनाशकारकोऽयं ।
६ जन्मोत्थं च विलोक्य बालविधवायोगं विधाय व्रतं सावित्र्या उत पैप्पलं हि सुतया रच्यादिमां वा रहः सल्लग्नेऽच्युतमूर्ति
पिप्पलघटैः कृत्वा विवाहं स्फुटं दद्यात्तां चिरजीविनेऽत्र न भवेद्दोषः पुनर्भूभवः ७ ॥ स्थैर्ये सौरे पापे पूर्वे रेक न्यै वजरां समुपयाति तं

[illegible] लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे कन्या भर्तृविनाशाय भर्ता कन्याविनाशद इत्याद्युक्ते बालवैधव्ययोगे बालविधवायोगं विचार्य
वक्ष्यमाणं व्रतं वैधव्ययोगपरिहारं कारयेदित्यन्वयः तत्र वैधव्ययोगपरिहाराभावः योयोभावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिरि
ति सप्तमस्थानं स्वस्वामिसौम्यक्षितं चेद्भवति तदा भर्तृसुखं भवतीति अन्ये स्त्रीणां महत्सरिष्टयोगो भर्तुश्च स्वल्पे [illegible] योगे तत्परिहारमाहुः अथवा
परिहार्यवैधव्ययोगप्रतिकारमाह विधायेति रह इति वक्ष्यमाणमिहापि योज्यं पित्रादिः सुतया कन्यया कृत्वा रहः एकांते हि निश्चयेन सावित्र्या व्रतं
नि [illegible] चिरजीविने वराय दद्यात् तदुक्तं व्रतखंडे सावित्र्यादिव्रतं नारी निभक्त्या कुर्वंति याः स्त्रियः सौभाग्यं च सुतत्वं च भवेत्तासां सुसंतति

बलवद्वैधव्ययोगे बाल्ये सति मृगीदृशां पितारहसि कुर्वन्ति तद्व्रतं शास्त्रसंमतं सद्दिने शुभनक्षत्रे चंद्रताराबलान्विते अवैधव्यकरैर्योगैर्लग्ने ग्रहब-
लान्विते व्रतारंभं प्रकुर्वीत बालवैधव्यनाशकं स्नात्वा तां चित्रवस्त्राढ्यां कन्यां पितृगृहाद्बहिः नीत्वाश्वत्थशमीस्थाने युक्त्या बदरिकाश्रमे आलवालं प्र-
कुर्वीत विपुलं मृदुकर्षितं कुमार्याचार्यनिर्दिष्टं कृतसंकल्पमादरात् करकांबुप्रपूर्णेन सिंचनं प्रतिवासरं चैत्रे वाश्विनमासे वा तृतीयाः सितपक्षतः पंचकृ-
ष्णतृतीयान्तामासमेकं यथाविधि ब्राह्मणानां तथा स्त्रीणां पूजनं च समारभेत् तदा शिवानुयात्कन्या सौभाग्यं चस्करवान्वितं प्रतिमापार्वतीनाम्नीं वेण-
वे भाजने चैपयेत् चंदनाक्षतदूर्वाद्यैर्बिल्वपत्रैर्यथाविधि उपचारैर्यथाभक्त्या नैवेद्यैः प्रतिवासरं एवंव्रतप्रभावेन बालवैधव्यनिष्कृतिः जायते क-
न्यकानां च ततः पाणिग्रहक्रिया इत्यश्वत्थव्रतं अन्यमपि वैधव्ययोगपरिहारमाह वारह इत्यादि अथवा रहएकांते अच्युतमूर्त्तिर्विष्णुप्रतिमा
पिप्पलघटो प्रसिद्धो एषामध्येऽन्यतरेण सह सल्लग्ने वक्ष्यमाणदोषरहिते सौभाग्यगुणान्विते च विवाहलग्ने विवाहं कारयित्वा पश्चात्तां कन्यां स्फुटं लोक-
प्रसिद्धं यथा भवति तथा चिरजीविने वराय दद्यात् दत्वा पित्रादिकः तदुक्तं मार्कंडेयेन बालवैधव्ययोगेपि कुंभद्रुप्रतिमादिभिः कृत्वा लग्नं रहः पश्चा-
त्कन्योद्वाह्येति चापरे इति कुंभ इति मंथन्या अपि उपलक्षणं द्रुवृक्षो श्वत्थ एव प्रतिमा विष्णोः सौवर्णी करशिरोवयवादिसहिता न शालिग्रामादिरूपा त-
त्र कुंभविवाहः सूर्यारुणसंवादे विवाहात्पूर्वकाले तु चंद्रताराबले शुभे विवाहोक्तं च मंथन्या कुंभेन सह चोद्वहेत् पिता संकल्प्य वाद्यं च विवाहविधि-
पूर्वकं सूत्रेणावेष्टयेत्सम्यग्दशतंतुविधानतः कुंभमालंकृतं देहतयोरेकांतमंदिरे ततः कुंभं विनिःसार्य प्रभज्य सलिलाशये ततोभिषिंचनं कुर्यात्सं-
चपल्लववारिभिः ततः सर्ववस्त्रपूजाद्यं ब्राह्मणाय निवेद्य च कन्यालंकारवस्त्राद्यं ब्राह्मणाय निवेदयेत् प्रार्थना वरुणांगस्वरूपत्वं जीवनानां समाश्रय
पतिं जीवय कन्यायाः चिरपुत्रान्सुखं कुरु वरं देहि विष्णुवरान् देन कन्यां पालय दुःखतः इति इति कुंभविवाहः अश्वत्थविवाहोपि तत्रैव द्विजान्गुरून्सुहृन्ना-
री मंगलोच्चारणैः समं आहूयोद्वाहकाले च रम्ये भूमौ च मंडपे गत्वा प्रणम्य गौरीं च गणनाथं च भूरुहं भवानी चैव मंथानी पितामंत्रमुदीरयेत् उद्वा-
हयिष्ये विधिवदश्वत्थेन मनोहरा कन्या सौभाग्यसंसिद्ध्यर्थं तत्वेहं द्विजोत्तमाः नमस्ते विष्णुरूपाय जगदानंदहेतवे पितृदेवमनुष्याणामाश्रयाय नमो नमः

धनानांपतयेतुभ्यंविष्णुरूपायभूरुह नमोनिखिलपापौघनाशनायनमोनमः पूर्वजन्मकृतंपापंवालवैधव्यकारकं नाशयाशुसुखंदेहिकन्यायाममम
भूरुह इत्यश्वत्थविवाहे संकल्पप्रार्थने विवाहस्तुकुंभविवाहवद्विधेयः एवमेवसौवर्ण्याविष्णुप्रतिमयासहविवाहंविधायप्रतिमांब्राह्मणायदद्यात्
दानप्रकारस्तत्रैवशुभेमासेसितेपक्षेसानुकूलग्रहेदिनेब्राह्मणंसाधुमामंत्र्यसंपूज्यविविधार्हणैः तस्मैदद्याद्विधानेनविष्णोर्मूर्तिंचतुर्भुजां शुद्धवर्णस्य
वर्णेनवित्तशक्त्याथवापुनः निर्मितांरुचिरांशंखगदाचक्राब्जसंयुतां दधानांवाससीपीतेकुंभेदोःसलमालिनांसदक्षिणांचसस्तुरंदद्यान्मंत्रमेत
मुदीरयेत् यन्मयापूर्वजनुषिभर्त्रापतिसमागमम् विषोपविषशस्त्राद्यैर्हतोवातिविरक्तया प्राप्यमाणेमहाघोरंयशःसौख्यधनापहं वैधव्याद्यतिदुः
खौघनाशायसुखलब्धये बहुसौभाग्यलब्ध्यैवमहाविष्णोरिमांतनुम् सौवर्णींनिर्मितांशक्त्यातुभ्यंसंप्रददेद्विज अनघालहमस्त्रीतिविवाहंप्रवदेदि
ति एवमस्त्वितिविप्राशीर्गृहीत्वास्वगृहंविशेत् ततोविवाहिकंतातोविधिंकुर्यान्मृगीदृशां इतिप्रतिमादानविधिः एवंघटादिभिः सहविवाहंएका
तेविधायपश्चाद्दिनत्रयपोषपुरःसरंपित्रादिकन्यामायुष्मतेवरायदद्यात् अत्रपुनर्विवाहात्पुनर्भूत्वदोषोनभवति यतोविधानखंडे स्वर्णाम्बुपिप्प
लानांचप्रतिमाविष्णुरूपिणीतयासहविवाहेचपुनर्भूत्वंनजायतइत्युक्तत्वात् चकारात्घटस्यापि लक्ष्मीरूपासदाकन्याहरिरूपंसदाजलम् हरे
र्दत्तंचयद्दानंदातुःपापहरंसदा लक्ष्मीनारायणप्रीत्यैयादत्ताकन्यकाबुधैः तारयेत्सकलंदातुःकुलंपूर्वापरंसदा चंद्रवह्निबुधध्येवैशिवसोमस्वराइमे
पतयःकन्यकानांचबाल्यात्संततिसंदैवते तदुद्वाहविधिर्यत्नात्कृतोनोजनयेदघम् यथातिभुक्तकमलंदेवानांपूजनायवै अर्हंभवतिसर्वत्रतथाक
न्यानृणांभवेत् श्रुतावपिसोमादिभिःसहविवाहोविहितः सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः तृतीयोअग्निष्टेपतिस्तुरीयस्तेमनुष्यजाइति अतो
दैवतभोग्यानांकन्यानांपुरुषविवाहेनदोषःपुनर्भुवःतथात्रापि अतएवमंथन्याभास्करोयत्नात्कृतवान्दुहितुर्विधिः रेणुके [illegible] स्वकन्यायास्त्वरूद्वाहंचकारस
इतिविधानखंडेभिधानात् अतएव पित्रामात्रातथाभ्रात्रावादत्तायात्तोयधारया विप्राग्निसुहृदांसाक्ष्येकृतासोद्वाहितास्मृतेतिकात्यायनादिपरिभाषितत्वाद्
कदाकन्यापुरुषविवाहंनिर्वर्त्यपुनर्द्वितीयपुरुषविवाहजातेसापुनर्भूरेवेत्यलम् ७ ॥ ७ ॥ ७ ॥ ७ ॥ छ ॥

अथान्यत्स्रग्विण्याह प्रश्नलग्नक्षणेति तत्रज्योतिर्वित्समीपे यादृशापत्ययुक्यादृशापत्यमेव विवृणोऽतेकन्यकेकृतादिशेषंस्पष्टम् ८ अथसा
मान्यतोनिमित्तवशेनशुभाशुभप्रश्नंस्रग्विण्याह शंखभेरीति विपंचीवीणाच एतेषांरवैः प्रश्नलग्नेश्रुतैर्मंगलंजायते उपलक्षणत्वान्मनोह्लादितुरं
गजवृषादिसान्निध्येपिशुभं अथाशुभयोगाःवैपरीत्यमिति वायसःकाकःखरोगर्दभःश्वाकुक्कुरःसृगालःप्रसिद्धः पर्सिप्रश्नलग्नक्षणेचयदिवायसा
दिर्नादंशब्दंकरोतितदावैपरीत्यमशुभंलक्षयेत् उपलक्षणादुलूकोष्ट्रमहिषमार्जारादयोप्यशुभः अन्येशुभयोगाःशौनकादिभिर्ज्ञेयाः विवाहवृन्दावनेउपश्रु
तिरप्युक्ता आरोप्यास्ततपूरितेगणपतिंप्रस्थादिपात्रेशनैःसमार्जन्यधिवेष्टितेयुवतयस्तिस्रःसकन्यानिशिनिर्यातारजकादिवेश्मसुकरेकृत्वाशुभ

प्रश्नलग्नक्षणेयादृशापत्ययुक्स्वेच्छयाकामिनीतत्रचेदाव्रजेत् कन्यकायासुतोवात्तदापंडितैस्तादृशं(?)पत्यमस्यौविनि
र्दिश्यते ८ शंखभेरीविपंचीरवैर्मंगलंजायतेवैपरीत्यंतदालक्षयेत् वायसोवाखरःश्वासृगालोपिवाप्रश्नलग्नक्षणेरौतिना
दंयदि ९ विश्वस्वातीवैष्णवपूर्वात्रयमैत्रैर्वस्वाग्नेयैर्वाकरपीडोचितऋक्षैः वस्त्रालंकारादिसमेतैःफलपुष्पैःसंतोष्याद्यो
स्यास्तुकन्यावरणंहि १० धरणिदेवोऽथवाकन्यकासोदरःशुभदिनेगीतवाद्यादिभिःसंयुतः वरवृत्तिंवस्त्रयज्ञोपवीतादिना
ध्रुवयुतेर्वह्निपूर्वात्रयैराचरेत् ११ ॥ अभ्यर्चितंयांवाचंशृणुयुस्तरर्थसदृशीलोके किलोपश्रुतिःतन्मंत्रश्चउपश्रुतिमहादेविभैडालगृहवा।
सिनियथार्थंब्रूहिदेविवित्वंशक्रराज्यप्रवर्द्धिनीति ९ अथकन्यावरणंमुहूर्त्तंमत्तमयूरछंदसाह विश्वस्वातीतिउत्तराषाढादिनक्षत्रैरथवाविवाहनक्षत्रैरुप
लक्षितेकालेवस्त्रालंकारादिशब्देनवाद्यादिमधुरवस्तुभिःसहितैःफलपुष्पैःआदौकन्यातोष्यतोषयित्वाऽनुपश्चात्कन्यावरणंहिनिश्चयेनस्यात् कन्यावर
योर्लक्षणानिसामुद्रिकाध्यायादवगतव्यानि १० अथवरवरणमुहूर्त्तमाह धरणिदेवइति धरणिदेवोब्राह्मणःपुरोहितादिःचंडेश्वरःपूर्वात्रितयमाग्नेय।
मुत्तरात्रितयंतथारोहिणीतत्रवरणेभगणाःशस्यतेसदा उपवीतंफलपुष्पवासांसिविविधानिच देयवरायवरणेकन्याभ्रात्राद्विजेनवेति ११ ११ ॥

अथकन्याविवाहकालंग्रहशुद्धिंचवसंतमालिकाछंदसाह गुरुशुद्धिवशेनेति कन्यकानांविवाहः षडब्दकोपरिष्टात् षड्वर्षातिक्रमानंतरंसमेवर्षे
ष्वयुग्मवर्षेषुसत्संवत्सरवडुकन्याजन्मराशेरित्याद्युक्तगुरुशुद्धौसत्यांविवाहःशुभः अर्थासुरूपाणांविषमविर्षेषुगोचरप्रकरणोक्तरविशुद्धौसत्यांवि
वाहःशुभः राजमार्त्तण्डः तृतीयःषष्ठगश्चैवदशमैकादशस्थितः रविशुद्धोनिगदितोवरस्यैवकरग्रहे जन्मस्थश्चद्वितीयस्थःपंचमेसप्तमेपिवानवमेभा
स्करेपूजाकुर्यात्पाणिग्रहोत्सवे चतुर्थेचाष्टमेचैवद्वादशेभास्करेस्थिते वरःपंचत्वमाप्नोतिकृतेपाणिग्रहोत्सवेइति यतउक्तंमूषडब्दम[illegible]नोद्वाहासाकन्या
वर्षाद्दर्शयतः सोमोभुक्त्वाथगंधर्वस्ततःपश्चाद्धुताशनइतिव्यासः अष्टवर्षाभवेद्गौरीनववर्षाचरोहिणीदशवर्षाभवेत्कन्याअतऊर्ध्वं[illegible]वात्स्यः
द्वादशेवृषलीस्मृतेतिगौरींददब्रह्मलोकंसावित्रंरोहिणींददत्कन्यांददत्स्वर्गलोकमतःपरमसद्गतिंप्राप्नोतीतिशेषः अत्रयुग्मेब्दे जन्म[illegible]स्त्रीणांशु

गुरुशुद्धिवशेनकन्यकानांसमवर्षेषुषडब्दगोपरिष्टात् रविशुद्धिवशात्शुभोनराणामुभयोश्चंद्रविशुद्धितोविवाहः॥१२॥
मिथुनकुंभमृगालिवृषाजगेमिथुनगेपिरवौत्रिलवेशुचेः॥ ऽ भट्टपाणिपीडनमित्युक्तत्वात् पुनर्नववर्षायां[illegible]अयुग्मवर्षे

स्याद्विवाहनिषेधः प्राप्नोतीत्यत्रव्यवस्थामाह श्रीपतिः मासत्रयादूर्ध्वमयुग्मवर्षेयुग्मेतुमासत्रयमेवयावत् विवाह[illegible]वात्स्यादयोप्यू
वराहमुख्याः इत्यतोनवमवर्षस्यायुग्मत्वनिषेधोऽष्टवर्षानंतरंमासत्रयपर्यंतमेव तदनंतरंतुसुखेनविवाहइत्यविरोधः एवंचषष्ठवर्षानंतरंजन्म
तोविषमवर्षायामासत्रयानंतरंनवमासाःशुभाः समवर्षेआद्यमासत्रयंत्रयंचेतिगर्भवायुग्मइतिनिष्कर्षः ऽर्थःउभयोरितित्रीपुंसयोश्चंद्रविशु
द्धौविवाहःशुभः उभयोश्चंद्रबलमावश्यकमित्यर्थः शुद्धिर्गोचरेणाभिहितागोचरबलाभावेअष्टकवर्गादिबलंग्राह्य[illegible]मित्याह नारदः गोचरंवेधजं
चाष्टवर्गजंरूपजंबलम् यथोत्तरंबलाधिक्यंस्थूलंगोचरमार्गजमितिव्यासः कन्यायांग्रहशुद्धिश्चरशवर्षा[illegible]दशवर्षव्यतिक्रांताकन्या
शुद्धिविवर्जितातस्यास्तोरेंदुलग्नानांशुद्धौपाणिग्रहोमतइति १२ अथविहितान्मासांद्दुत[illegible] मिथुनेति अलिर्वृश्चिकः एतद्राशिगतेरवौस[illegible]

व ष

आषाढस्यत्रिलवेतृतीयांशे आषाढशुक्लद्वितीयामारभ्यदशमीपर्यन्तं करपीडनं विवाहो भवति अर्थादितरराशिगे सूर्ये आषाढशुक्लदशम्यनंतरं मिथुनराशिगेर्केपि हरिशयने च विवाहो न स्यात् अलीति एतद्राशिगे सूर्ये कार्तिकपौषमधुष्वपि करपीडनं स्यात् वृश्चिके [illegible]र्तिके मकरे पौषे मेषे चैत्रे। पीत्यर्थः इदं तु सौरमासग्रहणमतं श्रीधरोपि पौषेपि कुर्यान्मकरस्थिते र्के चैत्रे भवेन्मेषगते यदा स्यात् प्रशस्तमाषा[illegible]ते विवाहं वदंति मृगो मिथुन स्थितेऽर्के इति ये तु चांद्रमासानेवाहुर्नारदादयः माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः मध्यमः कार्त्तिके मार्गशीर्षे निंदिताः परे इति तेषां मते फाल्गुनो विहित इति तत्र मीनसंक्रमणसद्भावेपि शुभः चैत्रो निषिद्ध इति मेषसंक्रमणसद्भावेप्यशुभः तदुक्तं दैवज्ञ[illegible] दजस्तु वैशाखगतो न निंद्यः मध्वाश्रितौ द्वावपि वर्जनीयाविति अजस्तु वैशाखगतो न निंद्य इति निर्मूलमेव वस्तुतस्तु वसिष्ठेन उभयमास[illegible]धानात् सौरचांद्रमासे क्ये उत्तमो विवाहः एकतरपक्षाश्रयेण मध्यमः दिनाधिपे मेषवृषालिकुंभस्त्युग्मनक्रास्थ्यघटर्क्षसंस्थे माघद्वये माधवशुक्रयोश्च सुरर्भ्यॊ[illegible]र्कार्त्तिकसौम्य॥

॥ अलिमृगाजगते करपीडनं भवति कार्तिकपौषमधुष्वपि १३ ॥

योश्चेति अथ प्रसंगात्सौर[illegible]मासविधायक वचनानि तेषां व्यवस्था च लिख्यते तत्र ऋष्यशृंगः विवाहव्रतयज्ञेषु सौरमानं प्रशस्यते गार्ग्योपि विवाहोत्सवयज्ञेषु सौरमानं प्रशस्यते वृ[illegible]गः विवाह रैस्मृत : सौरो यज्ञादौ साक्नः स्मृतः इत्येवमादीनि सौरमासविधायकवचनानि अथ चांद्रमासविधायकानि तथा च वसिष्ठः उद्वाहे यज्ञोप[illegible]नयप्रतिष्ठा। तिथिव्रतसौरमहोत्सवाद्य पर्वक्रियावास्तु गृहप्रवेशाः सर्वे हि चांद्रेण विमृत्यते तत् नारदः यात्रोद्वाहव्रतसौरतिथिवर्षेश निर्णय पर्ववास्तूपवासादिकृच्छ्रं चांद्रे। ण गृह्यते इत्यादीनि तत्रैकतरमासावलंबनेऽपरवैयर्थ्यमस्यादित्यत्र समाधीयते यत्र सौरचांद्रमासाभ्यां मासशुद्धिरुपलभ्यते स उत्तमो विवाहः एकतरपक्षाव लंबने मध्यम इत्युक्तं प्राक् मध्यमपक्षावलंबनं च अवश्यं देशाकन्याविषयं वेदितव्यम् अपरे पुनर्देशविवाहयोः तथा तपनी कृष्णयोर्मध्ये चांद्रो मासः प्र शस्यते अन्येषु सर्वदेशेषु सौरो व्रतविवाहयोः तथा विंध्याद्दक्षिणे भागे चांद्रो मासः प्रशस्यते उदग्भागे तु विंध्यस्य सौरं मानं विधीयते अन्येषु सर्वदेशेषु मिश्रं मा

स्वयमपि ज्येष्ठापत्यस्य न ज्येष्ठे के चिन्मार्गेऽपि नेष्यत इत्युक्तं प्राक् केचिद् ग्रहणं शिष्टाचाराभावादिति सूत्र वचितु न नैवान्योन्यमिति ज्येष्ठायाः कन्यायाः ज्येष्ठपुत्रेण सह विवाहो नैव स्यात् गर्गः ज्येष्ठायाः कन्यकायाश्च ज्येष्ठपुत्रस्य वै मिथः विवाहो नैव कर्तव्यो यदि स्यान्निधनं तयोरिति १५ अथान्य विशेषं हरिणी छंदसाह कृतपरिणयादिति निजकुल इति देहलीदीपन्यायेनात्रापि संबध्यते निजकुले स्ववंशे कृतस्य पुत्रस्य परिणयात् षण्मासांतः षण्मासमध्ये कृताकरपीडनं कन्या विवाहो न स्यात् नारदः पुत्रोद्वाहात्परं पुत्री विवाहो न ऋतुत्रये न तयोर्व्रतमुद्वाहो मंडनादपि मुंडनमिति तद्वदिति निजकुले त्रिपुरुषमध्ये पुत्रस्य कन्याया वा मंडनाद्विवाहान्मुंडनं चौलोपनयनं समावर्तनं नाद्विवातद्वत् षण्मासमध्ये न कार्यम् अत्रिः कुले ऋतुत्रयादर्वाक् मंडनान्न तु मुंडनं प्रवेशान्निर्गमे चैव न कुर्यान्मंडनत्रयमिति अत्र विशेषः शार्ङ्गीये व्रतं समावर्तनकं सचौलं केशांतमेतानि

केचित्सूर्यवह्नि गंधोद्यवाहुर्नैवान्योन्यं ज्येष्ठयोः स्याद्विवाह १५ कृतपरिणयात्षण्मासांतः कृताकरपीडनं न च निजकुले तद्व-
द्धा मंडनादपि मुंडनम् न च सहजयोर्देये भ्रात्रोः सहोदरकन्यके न सहजकृतोद्वाहो वर्षे शुभे न पितृक्रिया १६ ॥ १६ ॥

वदंतितज्ज्ञाः क्षौरं पुरस्कृत्य भवंति यस्माच्चत्वारि तस्मादिह मुंडनानि चूडासीमंतकेशांतविवाहोपनयान्बुधाः मुंडमंगलमित्याहुस्तद न्यल्लघुमंगलं ज्येष्ठ कृत्वा तु षण्मासं न कुर्याल्लघुमंगलम् कुर्वंति मुनयः केचिदन्यस्मिन्नपि वत्सरे लघुवा मंगलं कार्यं कार्यं वैमित्तिकं हि तु सुतोद्वाहः प्रवेशाख्यः कार्योद्वाहस्तु निर्गमः मुंडनं चौलमित्युक्तं व्रतोद्वाहौ तु मंगलम् चौलं मुंडनमेवोक्तं वर्जयेद्दूरणात्परम् मौंजीबंधपतः कार्यं पतौ मौंजीनमुंडनम् अभिन्ने वत्सरेऽपि स्यात्तदहस्तत्र भेदयेत् अभेदे दिवसस्यापि न कुर्याद्येकमंडप इति एषामपवादस्तु देशकालसंकटे सति बोद्धव्यं उक्तं च एकोदरयोर्द्वयोरेकद्दिनो दहने भवेन्नाशः न च तरणे वैके दिनेऽप्याहुः संकटे च शुभं न प्रतिषिद्धं लग्नं संप्राप्ते संकटे महति एकोदरसंभवयोरेकाहे भिन्नमंडपे कालेऽति। न चेति सहजयोः सोदरयोर्भ्रात्रोः सहोदरकन्यके न देये नोद्वाह्ये नारदः न चैकजन्मनोः पुंसोरेकजन्यो तु कन्यके नूनं करा चिदुद्वाह्ये नैकदा मुंडन

द्वयमिति अत्रचकारोऽनुक्तसमुच्चयार्थस्तेनैकस्मैवरायसहोदरकन्याद्वयमपिनदेयं नपुत्रीद्वयमेकस्मैप्रदद्यात्तुकदाचनेतिवसिष्ठोक्तेः नसह
जस्सुतौद्वाहोव्दार्धइति सुतश्चसुतौसुताश्चसुतेसरूपाणमेकशेषइत्येकशेषः सुताचसुतौपुमान् स्त्रियेत्येकशेषः सुतौचसुताचसुतेचसुतौवेति
सुताः इतिकृतेकशेषणाद्वेद्वे पुमान् स्त्रियेत्येकशेषः सहजाश्चतेसुताश्चतेसुताश्चेतिकर्मधारयः तेषांसोदरभ्रातृणांविवाहः अब्दार्धेषण्मासमध्येन
कार्यः उद्वाहइत्युपलक्षणं ततश्चैकामातृजयोः पुत्रयोः कन्ययोर्वासमानसंस्कारोनकार्यइत्यर्थः वृद्धमनुः एकमातृजयोरेकवत्सरेपुरुषस्त्रियोः नसमा
नाक्रियांकुर्यान्मातृभेदेविधीयते समानक्रियाचूडोपनादिका भिन्नमातृजयोः समानक्रियायांनदोषः नारदः समानापिक्रिया[illegible]मेव।
विवाहाद्दुहितुः कार्येन विवाहश्चतुर्दिनमिति भिन्नमातुर्दुहितुर्विवाहः समानक्रियायांयदिदिनचतुष्टयमध्येनकार्यमित्यर्थः वसिष्ठेनविशेषउक्तः
एकोदरप्रसूतानांनात्रकार्यत्रयंभवेत् भिन्नोदरप्रसूतानांनेतिशातातपोऽब्रवीत्इति चौलोपनयनविवाहरूपंकार्यत्रयं आदौचौलततोमौंजीविवा
हश्चश्रभप्रदः मातृभेदेवुधैरुक्तोमातुरैकोनकर्हिचित् एवंसतिभिन्नोदरमंगलमावश्यकत्वेगृहभेदात् एकगृहेआचार्यभेदाद्वाकार्यं वसिष्ठः द्वि
शोभनंत्वेकगृहेनचेष्टंशुभंतुपश्चान्नवभिर्दिनैस्तु आवश्यकंशोभनमुत्सवोवाद्वारेणवाचार्यविभेदतोवेति यमलजातयोस्त्वयमपिनिषेधोनास्ति
एकस्मिन्वत्सरेचैववासरेमंडपेतथा कर्तव्यंमंगलंस्वस्त्रोर्भ्रात्रोर्यमलजातयोः तत्रापिज्येष्ठानुक्रमेणकार्यंज्येष्ठानुक्रमस्तुगर्भोसचिक्रमेण
तथाचभागवतेतृतीयस्कंदेहिरण्याक्षहिरण्यकशिपूत्पत्तौप्रजापतिर्नामतयोरकार्षीद्युःप्राक्स्वदेहाद्यमयोरजायत तंवैहिरण्यकशिपुंविदुःप्रयेतांप्र
जाहिरण्याक्षमसूतसाग्रतइति तथावैद्यके आत्रेयसंहितायां यदाविशेद्विधाभूतंबीजपुष्पोपरिस्सरत् तदाभवेद्विधागर्भः सूतिर्वेशविपर्ययात् तेनप्र
थमंजातःकनिष्ठः अनंतरंजातोज्येष्ठः अतएवयमयोश्चैवगर्भेतुजन्मतोज्येष्ठतामतेतिमनुनागर्भेजन्मतइत्युक्तंजन्मज्येष्ठेनचाह्वानसुब्रह्मण्या
स्वपिस्मृतमितितुमनुवचनम् एककोशजात्तयमलविषयं तथाचदेवलः यस्यजातस्ययमयोःपश्यतिप्रथमंमुखं संतानःपितरश्चैवतस्मिन्ज्ये
ष्ठ्यंप्रतिष्ठितमिति संतानोवंशः यदातुपुंसोबल्यातिशयाद्रेतसोद्विधापातः तदाकोशद्वयेयमलोसत्तिः॥ ६ ॥ ६ ॥ २ ॥

यदातुगर्भवायुना एकस्मिन्नेवकोशेरेतसोद्वैधीभावस्तदाएककोशेएवयुगपद्यमलजन्मेति ननुस्त्रीणांविवाहउपनयनस्थानइतिस्मृतेः कन्या
विवाहस्यपुत्रोपनयनस्यचसमानमितिचेत् नअष्टवर्षंब्राह्मणमुपनयेदितिवचने ब्राह्मणग्रहणात्कुमारमित्यनुवृत्तेश्च स्त्रीशूद्राणांव्रतबंध
निषेधाच्चयत्तुस्त्रीणांविवाहउपनयनस्थानेइत्युक्तंतत्तासांद्विजत्वासिद्ध्यर्थं अतःस्त्रीविवाहएवनतूपनयनंतस्मात्तोदर कन्यापुत्रयोर्विवाहोपन
यनयोः समानसंस्काराभावात् षण्मासमध्येपिनकार्ये शुभेइति शुभेविवाहादिमङ्गलकृत्ये पितृक्रियाश्राद्धक्रियानकार्या मंगलेनाप्यमंगलमि
तिनारदोक्तेः अमंगलंश्राद्धं समाप्तेएवमंगलेकार्यंनमध्येइत्यर्थः १६ अथप्रतिकूलनिर्णयमिंद्रवंशयाह वध्वावरस्येति निश्चयोत्तरंवाग्दानानं
तरंबध्वाकन्यायाः वरस्यवाकुलेवंशेत्रिपूरुषेपुरुषत्रयमध्येकश्चनसपिंडोनाशंप्राप्नुयात् तत्रमासोत्तरं मरणदिनादारभ्यत्रिंशद्दिनंप्रतिकूलं
ततःशांत्यास्वनुष्ठितयाविवाहःशुभत्वेनइष्यतेइदंपित्रादिभिन्नविषयम् मांडव्यः अन्येषांतुसपिंडानामाशौचमासंसम्मितं तदंतेशांतिकंकृत्वाततोलग्नं।

बध्वावरस्यापिकुलेत्रिपूरुषेनाशंव्रजेत्कश्चननिश्चयोत्तरं मासोत्तरंतत्रविवाहइष्यतेशांत्याथवासूतकनिर्गमेपरैः १७ ॥

विधीयते पित्रादिमरणेतुविशेषः वरवध्वोःपितामातापितृव्यश्चसहोदरः एतेषांप्रतिकूलंचेन्महाविघ्नकरंभवेत् पितामातामहश्चैवसूतावापिपिता
मही पितृव्यःस्त्रीसुतोभ्राताभगिनीवाविवाहिता एभिरेवविपन्नैश्चप्रतिकूलंबुधैःस्मृतं वाग्दानानंतरंयत्रकुलयोः कस्यचिन्मृतिः तदासंवत्स
रादूर्ध्वंविवाहःशुभदोभवेत् पितुराशौचमब्दंस्यात्तदर्धंमातुरेवहि मासत्रयंतुभार्यायास्तदर्धंभ्रातृपुत्रयोः अन्यत्रप्रतिकूलंसपिंडस्यमासमेकंविव
र्जयेत् विवाहस्तुतयोःपश्चात्तयोरेवविधीयते दुर्भिक्षेराष्ट्रभंगेचपित्रोर्वाप्राणसंशये प्रौढायामपिकन्यायांप्रतिकूलंनदुष्यति दीर्घरोगाभिभूतस्यदूरदे
शस्थितस्यच उदासवर्तिनश्चैवप्रतिकूलंनविद्यते संकटेसमनुप्राप्तेयाज्ञवल्क्येनयोगिना शांतिरुक्तागणेशस्यकृत्वातांशुभमाचरेत् अथावश्य
कत्वेःपवादमाह अथवेति आशौचनिर्गमेशांत्यास्वनुष्ठितयाविवाहःपरैराचार्यैरिष्यते ज्योतिःप्रकाशेप्रतिकूलेपिकर्तव्योविवाहोमासमेतरा शांतिं

अथान्यदपि [illegible] गतरमुपजायाह चूडाव्रतमिति अपिशब्दात्समावर्त्तनादि चौलमुपनयनंसमावर्त्तनंच विवाहानंतरंपुरुषत्रयमध्यएवनेष्टं तथा
व्रतादुपनय[illegible]चूडाचपुरुषत्रयपर्यन्तनेष्टा तथावध्वाःस्नुषायाःप्रवेशात्सुतायाविनिर्गमोपिपुरुषत्रयपर्यंतमेवनेष्टा मेधातिथिः पुरुषत्रयपर्यंतं
तिकूलंसर्गो[?]त्रेण प्रवेशान्निर्गमोनद्वव तथामुडनमडनेइति तस्मान्मूलपुरुषस्यचतुर्थत्वेनायंदोषःस्यादयंदोषः पुरुषत्रयेपिषण्मासपर्यंतमिव अ
तएवषण्मासइतिमासषट्कानंतरंपरतोपिविवाहादिः शुभः एतन्मूलवाक्यंकुलेक्रतुचपादौ वागिसादिनाप्युक्तं अत्राप्यवादस्तूच्यते वेति अथ
वा अब्दभेदात्षण्मासमध्येपिशुभः यथामाघेविवाहोवैशाखेचौलंयज्ञोपवीतंवाभवतीत्यर्थः संहितासारावल्यां फाल्गुनेचैत्र[illegible]मेतुपुत्रोद्वाहे[illegible]नाय
मे भेदाद्व्दस्यकुर्वीतननुत्रयविलंघनमिति १८ अथमूलादिनिष्ठनक्षत्रोत्पन्नयोर्वधूवरयोः श्वशुरादिपीडकत्वंवसंततिलकेनाह श्वश्रूविनाश

चूडाव्रतंचापिविवाहतोव्रताच्चूडाचनेष्टापुरुषत्रयांतरे वधूप्रवेशाच्चसुतां विनिर्गमःषण्मासतोवाब्दविभेदतः शुभः १८ श्वश्रू
विनाशमहिजौसुतरांविधत्तेःकन्यासुतौनिर्ऋतिजौश्वशुरंहतश्च ज्येष्ठाभजाततनयास्वधवाग्रजंचशक्राग्निजाभव।
तिदेवरनाशकर्त्री १९ द्वीशाद्यपादत्रयजाकन्यादेवरसौख्यदा॥ ७ मिति अहिजौअश्लेषा नक्षत्रोत्पन्नौकन्यापुत्रौश्वश्र्वाःसाक्षाद्भ

रस्यमातुःकन्यायावासाक्षान्मातुःनाशंविधत्तःकुरुतः तथानिर्ऋतिजौमूलोत्पन्नौश्वशुरंहतः नोश्वपतःजनकंजनंहाहतिभर्त्तुर्मूलाहि धिस्यजेत्त्रिव।
सिष्ठोक्तेः कुलन्यायत्वात्कन्यायामपिसाक्षान्मातरंज्येष्ठेति ज्येष्ठानक्षत्रोत्पन्नाकन्यास्वधवाग्रजंभर्त्तुर्ज्येष्ठभ्रातरंहंति शक्राग्निजा विशाखोत्पन्नादे
वस्यभर्त्तृकनिष्ठभ्रातुर्नाशकर्त्री उक्तंच ऐंद्रीपत्यग्रजंहंति देवरंतुद्विदैवतेति १९ एतदपवादमनुष्टुभाह द्वीशाद्येति स्पष्टार्थम् नहंतिदेवरंकन्यातुला
मिश्राद्विदैवजातदंत्यपादजात्वाज्यादुष्टावृश्चिकपुच्छवदितिवद्धनारदोक्तेः मूलेति मूलचतुर्थचरणोत्पन्नौकन्यासुतौ श्वशुरेसौख्यदौ अश्ले।
षाप्रथमचरणोत्पन्नौच श्वश्र्वाःसौख्यदौ नारदः सुतःसुतावानियतंश्वशुरंहंतिमूलजौ नांत्यपादजौनैवतथाश्लेषाद्यपादजाविति पुंस्त्वमविवक्षि

ज्योतिर्निबंधेमोजीबंधनानंतरंमूलाश्लेषादोषोनास्तीत्युक्तं मूलव्यालोद्भवोदोषः पुंसांमौंज्यांविनश्यतीतिभूपालवल्लभवचनादिति तंनमूलाश्लेषादो
षःशूद्रविषयःपर्यवस्यति तथाज्येष्ठोसन्नःपुमान् पत्यग्रजमग्रजांवाहंति विशाखोसन्नश्चपत्यनुजमनुजांहंति उक्तंचकलत्रपटले पत्यग्रजामग्रजंवा
हंतिज्येष्ठर्क्षजःपुमान् तथाभार्यानुजांचैवानुजंहंतिद्विजइत्युक्तं तत्परिहारश्चतत्रैव मूलांत्यपादजोश्रेष्ठोतथाश्लेषाद्यपादजोद्वीशांत्यपादजोदुष्टोतद्वा
ज्येष्ठांत्यपादजावितिज्येष्ठाविशाखोसन्नपुंसः दोषतत्परिहारनिरूपणग्रन्थेषदृष्टत्वादुपेक्ष्यम् २० अथाष्टकूटानांनामान्यनुष्टुभाह वर्णइति ए
तेवर्णादिमैत्र्यांतस्तागुणाधिकाएकादिगुणाधिकाःस्युः यथावर्णमैत्र्यामेकोगुणः वश्येद्वावित्यादि २१ तत्रादौवर्णकूटंप्रमाणिकयाह द्विजाइति मी
नकर्कवृश्चिकाद्विजाःब्राह्मणाः ततोनंतरमन्येमेषसिंहधनुराशयोनृपाःक्षत्रियाः वृषकन्यामकराविशोवैश्याः मिथुनतुलाकुंभाः अंघ्रिजाःशूद्राः।

मूलांत्यपादसार्पाद्यपादजातेतयोःशुभे २० वर्णोवश्यंतथातारायोनिश्चग्रहमैत्रकम् गणमैत्रंभकूटंचनाडीचैतेगुणाधि
काः २१ द्विजाझषालिकर्कटास्ततोनृपाविशोंघ्रिजाः वरस्यवर्णतोधिकावधूर्नशस्यतेबुधैः २२ हित्वामृगेंद्रंनरराशि
वश्याःसर्वेतथैषांजलजाश्चभक्ष्याःसर्वेपिसिंहस्यवशेविनालिंज्ञेयंनराणांव्यवहारतोऽन्यत् २३ ॥ २३ ॥ ९ ॥

तत्रवरवधूराश्योर्वर्णौज्ञात्वावरस्यवर्णतोब्राह्मणादिकावधूरधिकाज्येष्ठवर्णाबुधैर्नशस्यते किंतुसमाहीनावाशस्यतइत्यर्थः एकोगुणः समेवर्णे
तथावर्णोत्तमेवरे हीनवर्णेवरेशून्यंकेप्यूचुःसदृशेदलमिति २२ अथवश्यकूटमिंद्रवज्रयाह हित्वेति नरराशयोमिथुनकन्यातुलाएषांमेषादयः सर्वेपिसिंहं
त्यक्त्वावश्याः ननुजलचराणांसहानवस्थानात् कथंवश्यत्वं तत्राह जलजास्तुभक्ष्याइति एषांनरराशीनांजलजाःमकरकुंभमीनकर्कास्तुभक्ष्याः किंपुन
र्वश्याइतिसूचयितुंतुशब्दः सिंहस्यालिंवृश्चिकं विनासर्वेवश्याः अन्यदनुक्तंचतुष्पदानांजलचराणांवश्यालक्ष्यंनराणांमनुष्याणांव्यवहारतोज्ञेयम् वश्य
कूटंवश्यभक्ष्यवैरभेदेनत्रिधा तत्रवरराशेःस्त्रीराशौवश्येसतिगुणद्वयम् भक्ष्येएकोगुणः वैरेगुणाभावः २३ ॥ २३ ॥ २३ ॥ ९ ॥

अथ ताराकूटमनुष्टुभाह कन्यर्क्षादिति कन्यानक्षत्राद्वरनक्षत्रं यावद्गणयेत् तथा वरनक्षत्रादपि कन्यानक्षत्रं गणयेत् ततो वशिष्टकेन वभिर्भक्ते यद्वशिं
ष्टं तच्चेत्त्रिपंचसप्तमितं भवेत्तदाऽसद्शुभं स्मृतम् अन्यथा एकद्विचतुःषडष्टनवमितं चेत्तदा शुभम् उभयत्रापि त्रिपंचाद्रिमितशेषे ताराभैत्रीनाशेस्सवगु
णाभावः एकत्र चेत्तदाऽर्धमैत्री तदा सार्धैको गुणः उभयत्रापि चेत्र्यादिशेषाभावस्तदा पूर्णमैत्री गुणत्रयं २४ अथ योनिकूटं शार्दूलविक्रीडितेनाह
अश्विन्यंबुपयोरिति ज्येष्ठामैत्रभयोरिति अश्विनीशततारकयोर्हयो योनिरुक्तः एवं स्वातीहस्तयोः कासरो महिषः लुलायो महिषो वाहद्विषद्दूो
सासैरिभाद्वयमरोक्तेः कर्णः श्रवणः अंबुपूर्वाषाढा तयोर्वानरो मर्कटः चांद्रं मृगः अब्जयोनिर्ब्रह्मा तद्भं रोहिणी तयोरहिः सर्पः कुरंगो हरिणः अन्

कन्यर्क्षाद्दूरभं यावत्कन्याभं वरभादपि गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत्स्मृतं २४ अश्विन्यंबुपयोर्हयो निगदितः स्वात्य
र्कयोः कासरः सिंहो वस्वजपादयोः समुदितो याम्यांत्ययोः कुंजरः मेषो देवपुरोहितानलभयोः कर्णाम्बुनोर्वानरः स्याद्वैश्वा
भिजितोस्तथैव नकुलश्चांद्राब्जयोन्योरहिः २५ ज्येष्ठामैत्रभयोः कुरंग उदितो मूलार्द्रयोः श्वा तथा मार्जारोदितिसार्पयोरथ म
घायोन्योस्तथैवोंदुरुः व्याघ्रो द्वीशभचित्रयोरपि च गौरर्यम्णबुध्न्यर्क्षयोर्योनिः पादगयोः परस्परमहावैरं भयोन्योस्त्वजे ॥ टी० २६

राधाज्येष्ठयोः द्वीशभं विशाखा चित्रयोर्व्याघ्रः बुध्न्यर्क्षं उत्तराभाद्रपदा अर्यमोत्तराफाल्गुनी तयोर्गौर्योनिः अन्यत्स्पष्टं फलमाह पादगयोरि
ति एकस्मिन्पादे चरणे गतयोरुक्तनक्षत्रयोन्योः परस्परमहावैरं भवेत् यथा अश्विन्यंबुपयोर्हयो पि गदितः स्वात्यर्कयोः कासर इति पादः तयोरुक्तयोभे
योन्योरश्वमहिषयोर्महावैरं एवं सिंहहस्तिनोरित्यादि एतत्फलमाह अत्रिः एकयोनिषु संपत्तिर्द्विपत्ती संगमः सदा भिन्नयोनिषु मध्यः स्याद्वैरिभावे न चेत्तयोः
योनेरथावैनोद्वाहः सतु कार्यो वियोगदः राशिवश्यं वयश्यस्ति कारयेन्नैतु दोषभाक् अत्रातिवैर वैरोदासीन मैत्रातिमैत्रक्रमेण गुणविभागः गोव्याघ्रादीनां अ
तिवैरं तत्र गुणाभावः श्वानकमार्जारादीनां वैरं तत्रैको गुणः अश्वमेषादीनामौदास्यं तत्र गुणद्वयं गोमेषादीनां मैत्रं तत्र गुणत्रयं एकयोनौ अतिमैत्रं तत्र गुणा

अथग्रहमैत्रीं शार्दूलविक्रीडिताभ्यामाह मित्राणीति मित्रे वेति द्युमणेः सूर्यस्य भौमगुरुचंद्राः मित्राणि शुक्रशनी अस्य वैरिणौ अस्य सौम्यः बुधः समः विधोः चंद्रस्य बुधरवी मित्रे पुनरस्य विधोर्द्विषन् शत्रुर्नास्ति मंगलगुरुशुक्रशनयः समा एव अथ भौमस्य गुरुचंद्रसूर्या मित्राणि बुधः शत्रुः शुक्रशनी समौ अथ शशभृत्सूनोः बुधस्य सिताहस्करौ शुक्ररवी मित्रे अस्य बुधस्य शशी शत्रुः गुरुशनी भौमाः समाः अथ गीष्पतेर्गुरोः सूर्यभौमचंद्रा मित्राणि। बुधशुक्रौ शत्रू सूर्यजः शनिः समः अथ कवेः शुक्रस्य बुधशनी मित्रे चंद्रसूर्यौ शत्रू कुजगुरू समौ अथ शनेः शुक्रबुधौ मित्रे रविचंद्रभौमा द्विषो वैरिणः।

मित्राणि द्युमणेः कुजेज्यशशिनः शुक्रार्कजौ वैरिणौ सौम्यश्चास्य समो विधोर्बुधरवी मित्रे न चास्य द्विषत् शेषाश्चास्य समाः कुजस्य सुहृदश्चंद्रेज्यसूर्या बुधः शत्रुः शुक्रशनी समौ च शशभृत्सूनोः सिताहस्करौ २७ मित्रे चास्य रिपुः शशी गुरुशनिक्ष्माजाः समा गीष्पते मित्राण्यर्ककुजेंदवो बुधसितौ शत्रू समः सूर्यजः मित्रे सौम्यशनी कवेः शशिरवी शत्रू कुजेज्यौ समौ मित्रे शुक्रबुधौ शनेः शशिरविक्ष्माजा द्विषोऽन्यः समः २८ रक्षोनरामरगणाः क्रमतो मघाहिवस्विंद्रमूलवरुणानलतक्षराधाः पूर्वोत्तरात्रयविधातृयमेशभानि मैत्रादितींदुहरिपौष्णमरुल्लघूनि २९ निजनिजगणमध्ये प्रीतिरत्युत्तमा स्यादमरमनुजयोः सा मध्यमा संप्रदिष्टा॥ ५॥ अन्योः गुरुः समः अत्र गुणविचारः तत्रैकाधिपतित्वे परस्परमित्रत्वे पंच गुणाः समभित्रत्वे चत्वारः उभयसमत्वे त्रयो गुणाः मित्रवैरे गुणद्वयं समवैरे एकगुणः परस्परवैरे गुणाभावः २७ २८ अथ गणकूटं वसंततिलकया शालिन्या चाह रक्षोनरेति निजनिजेति क्रमतो रक्षोनरामरगणाः पादत्रयेणोच्यन्ते तत्र चित्रा राधा विशाखा मघादि तत्संयं तनक्षत्राणि रक्षोगणः पूर्वात्रयमुत्तरात्रयं विधाता रोहिणी यमो भरणी ईशः आर्द्रा एतानि भानि नरगणो मनुष्यगणः मैत्रमनुराधा अदितिः पुनर्वसुः इंदुर्मृगः हरिः श्रवणः पौष्णं रेवती मरुत्स्वामी लघूनि अश्विनी पुष्य हस्ताः एतानि नव भान्यमरगणो देवगण इति २९ निजेति स्वस्वगणे विद्यमानयोः स्त्रीपुरुषेन नक्षत्रगणयोरत्युत्तमा प्रीतिः स्यात् अमरमनुजयोर्देवमनु

परस्परं प्रीतिर्मध्यमा स्यात् असुरमनुजयो राक्षसमनुष्ययोः स्त्रीपुरुषयोर्मृत्युरेवत्र दिष्टः प्रबलदुर्बलन्यायेन मनुष्यगणस्यैव नाशः शार्ङ्गीये रक्षोगणः पुमा
न्न चेत्स्यात्कन्या भवति मानवी केपीच्छंति तदोद्वाहं व्यस्तं कोपीहनेच्छति एतत्तुल्यन्यायाद्देवराक्षसयोरपि दूष्यम् अस्यापवादमाह गर्गः रक्षोगणो य
दि पुंसां कुमारी नृगणा भवेत् सद्भकूटं खगप्रीतिर्यो निश्शुद्धं शुभं तदेति अत्रेयं गुणकल्पना नरराक्षसे मेहेद्वेरं तत्र गुणाभावः देवराक्षसे द्वेरं तत्र गुणाभा
वः देवमनुष्यत्वे चत्वारः गणैकत्वे षड्गुणाः ५० अथ राशिकूटमनुष्टुभाह मृत्युरिति स्त्रीपुरुषयोः परस्परं षष्ठाष्टमराशित्वं सति मृत्युर्ज्ञेयः एवं नवात्मजन
वपंचमेऽपत्यानां हानिः एवं द्विर्द्वादशे निर्धनत्वं दारिद्र्यं स्यात् अन्यत्र तृतीयैकादशे चतुर्दशमे समसप्तमे वा सति सौख्यकृत्पाणिपीडनं स्यात् ३१ अ
थास्य दुष्टभकूटस्य परिहारं शार्दूलविक्रीडितेनाह प्रोक्तेति स्त्रीपुरुषराश्योर्द्वयोरेकाधिपत्ये सति एकस्वामिकत्वे सति प्रोक्ते दुष्टकूटे षडष्टकादावपि

**असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो दनुजविबुधयोः स्याद्वैरमेकांततोऽत्र ३० मृत्युः षडष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे द्वि**
**र्द्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत् ३१ प्रोक्ते दुष्टभकूटके परिणयस्त्वेकाधिपत्ये शुभोऽथो राशीश्वरसौहृदेऽपि गदितो**
**नाड्यृक्षशुद्धिर्यदि॥**

विवाहः शुभो गदितः यथा मेषवृश्चिकयोः तुलावृषभयोर्वा नवपंचमेप्येकाधिपत्याभावः द्विर्द्वादशे मकरकुंभयोः।
अथवा राशीश्वरयो राशिस्वामिनोः सौहृदे मैत्रेऽपि यदि नाडीनक्षत्रयोः शुद्धिर्विधेन भवेत्तदापि दुष्टभकूटके विवाहः शुभः यथा षट्काष्टके मी
नसिंहराश्योर्नवपंचमे मेषधनुषोर्द्विर्द्वादशे मीनमेषयोरित्यादि तथा च वसिष्ठः द्विर्द्वादशे वा नवपंचमे वा षडष्टके राक्षसयोषिता वा एकाधिपत्ये भ
वनेशमैत्रे शुभाय पाणिग्रहणं विधेयमित्यादि अन्यच्च विषमात्कन्यकाराशेः षष्ठषष्ठाष्टकं न सत् समास्तु शुभं ज्ञेयं विपरीतं न शोभनं अन्यस्मिन्पप
कोरिति अन्यस्मैत्री तिषडष्टकादिभ्योऽन्यराशौ राशिस्वामिनोः परस्परशत्रुत्वे वा सति अंशपयोस्तद्राशिनवांशस्वामिनोर्बलित्वसख्ये सति स्यातां व
[illegible]हंवचसस्वितावप्रथमाद्विवचनांतपदम् बलित्वं उच्चादिस्थानस्थितत्वेन सबलत्वं सख्यितापरस्परमैत्री ते उभे चेद्भवतः॥ छ ॥ ॥ रामः

मु०टी०
वि०प्र०
७०

तथा नाड्यृक्षशुद्धौ नाडीनक्षत्रयोर्वेधाभावे सतीति तथा ताराशुद्धिवशे च सति राशिवशताभावे च राशिवश्यत्वे च सति दुष्टभकूटकेपि विवाहः शुभो रुक्तः उक्तं च जगन्मोहने वसिष्ठेन राशिनाथे विरुद्धेपि सबलांशकाधिपौ तन्मैत्रेपि च कर्त्तव्यं दंपत्योः सुखमिच्छतेति अन्यच्च तस्मिन्नेव प्रकरणे सिष्ठवाक्यं राशिनाथे विरुद्धेपि मित्रत्वे चांशनाथयोः विवाहं कारयेद्धीमान्दंपत्योः सौख्यवर्द्धनमिति अन्यच्च तस्मिन्नेव प्रकरणे वसिष्ठवाक्ये तु अन्यतर वाक्यानर्थक्यापत्तेरुपसंहारन्यायेन प्रवर्त्तते तेनावश्यं वाक्यद्वयस्य भिन्नार्थत्वं वाच्यम् तत्र कस्य कोर्थ इति संदेहे न्यूनार्थं द्वितीयवचनं केवलग्रहवैरापवादकं तुल्यबलत्वात् अंशनाथसबलत्वाभिधायकं प्रथमवचनं उभयविरोधस्य ग्रहवैरराशिवैररूपस्यापवादकं तेन राशिनाथे विरुद्धे सत्र राशी च नाथौ च एतेषां समाहारो राशिनाथं तस्मिन् राशिनाथे तथा चायमर्थः राशी विरुद्धौ षट्काष्टकादिना नाथौ विरुद्धौ कन्योरित्याक्तौ।

अन्यर्क्षेशांशपयोर्बलित्वसखिते नाड्यृक्षशुद्धौ तथा ताराशुद्धिवशेन राशिवशताभावे निरुक्तो बुधैः ३२ मैत्र्यां राशिस्वामि-
नोरंशनाथद्वंद्वस्यापि स्याद्गुणानां न दोषः खेटारित्वं नाशयेत्सद्भकूटं खेटप्रीतिश्चापि दुष्टं भकूटम् ३३ ॥ ३३ ॥

सांशयोः षट्काष्टकादिविचारस्तयोरेव सन्निहितत्वात् ग्रहणं तयोः समुचिते सति विवाहः शुभः नन्वस्मिन्वाक्ये क्लिष्टव्याख्याने किं मानं उच्यते अंशनाथसबलत्वस्याधिककरणमेव तच्च युगपदुत्पन्नस्य दोषद्वैविध्यस्य राशिविरोधग्रहविरोधरूपस्य परिहारकरूपमित्यवगम्यते अस्मिन्नपि पक्षे नाडीशुद्धिस्ताराशुद्धिः राशिवशता चापेक्षिता इति ३२ अथ दुष्टानां गणकूटभकूटानां परिहारं शालिन्याह मैत्र्यामिति स्त्रीपुरुषयोः राशिस्वामिनो मैत्र्यां सत्यां तथा राशिनवांशनाथयोः द्वंद्वस्यापि मैत्र्यां सत्यां दुष्टगुणानां दोषो न स्यात् अत्रिः राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः गणादिदोषेप्युद्वाहः पुत्रपौत्रप्रवर्धनः अथ सद्भकूटं तृतीयैकादशादिकं खेटारित्वं ग्रहवैरकृतं दोषं नाशयेत् एवमेव खेटप्रीतिः ग्रहमैत्री चापि दुष्टं भकूटं षडष्टादिकं नाशयेत् असद्भकूटे गुणाभावः भकूटदोषापवादे च तारोगुणा इति ३३ ॥ ३३ ॥ ३३ ॥ ३३ ॥ १ ॥

अथनाडीकूटं स्रग्धरयाह ज्येष्ठारौद्रेति ज्येष्ठारौद्रमार्द्रा अर्यमोत्तराफाल्गुनी अंभःपतिर्वरुणः शततारकाएभ्योनक्षत्रेभ्योयुगयुगंद्वयं ज्येष्ठामूलं उत्तराद्व
यं पुष्यमृगचित्रा ऽनुराधा भरणी धनिष्ठा पूर्वाषा
स्तः आर्द्रापुनर्वसूः शततारापूर्वाभाद्रपदा दास्त्र भमश्विनीच एतन्नक्षत्रनवकंपरस्परमेकनाडीत्युच्यते
ढापूर्वाफाल्गुनीउत्तराभाद्रपदाएतन्नक्षत्रनवकंमध्यनाडीत्युच्यते अथवायुस्वरिनव्यालविश्वोडुयुगयुगंवायुस्वातीतयुगद्वयंस्वातीविशाखाअग्निःकृ
त्तिकारोहिणी व्यालः अश्लेषामघा विश्वोडुयुगं विश्वेउत्तराषाढाश्रवणश्च पौष्णभंरेवती एतन्नक्षत्रनवकं अपरातृतीयेकनाडीत्युच्यते एतत्फलमा
ह दंपत्योः स्त्रीपुंसयोः एकनाड्यापरिणयनंमसत् उ ष्टफलस्यात मध्यनाड्या हि मिश्रयेनमृत्युद्वयोरपिस्याव नारदेनतुविशेषउक्तः चतुस्त्रिराद्य
भेत्स्याया कन्यायाः क्रमशोऽश्विभात वन्हिभादिंदुभान्नाडी त्रिचतुःपंचपर्वसु गणयेत्तंरव्य पाँवेकनाड्यांमृत्युर्नसंशयः एकनाडीचिपाक्षगुणैःसर्वै
समन्वितः वर्जनीयः प्रयत्नेनदंपत्योर्निधनंयतइति अमुमर्थस्पष्टमाह गर्गः चतुष्पात्कन्यकाऋक्षंगणयेदश्विनादिकं त्रिभंसव्योपसव्येन भि
न्नपर्वशुभावहं कन्यकाभस्त्रिपाचेत्स्याद्गणयेत्कृत्तिकादिकं चतुर्भिःपर्वभिस्तद्वदभिजिन्नारकानितम् कन्यकर्क्षेद्विपाचेत्स्याद्गणयेत्सौम्यभादिकं।
पंचभिस्त्ववरोहेतुपंचमांगुलिवर्जितं आसन्नात्येकनाडीस्यादासन्नमृतिदायिनी दूरस्थाचैकनाडीस्याद्दूरस्थानिष्टकारिणीति नाडीविचारे चंडेश्वरः पृष्ठ
मध्येशुभसमन्वितभोगःक्रोडेवनितावितवियोगः मध्येरेखेभवतिविवाहेउभयोर्मरणंवदतिवराहः अश्व्यादिनाडी वेधसंक्रमास्तन्द्वितीयकं याम्या
दितुर्यंतुर्यंचकृत्तिकादिद्विपश्चकं अन्यच्च अर्केन्दुजक्षोणितनूजजीवाः केतुःसितोसकुशशांकसौराः जन्मादिनाडीत्रितयेशुभाःस्युःशुभेऽशुभंः
स्यात् शुभंशुभंव तद्यथा अर्कः १।१०।१९ बुधः २।११।२० मंगलः ३।१२।२१ बृहस्पतिः ४।१३।२२ केतुः ५।१४।२३ शुक्रः ६।१५।२४ राहुः ७।१६।२५
चंद्रः ८।१७।२६ शनिः ९।१८।२७ शुभग्रहनाडीनक्षत्रेशुभकार्यंकुर्यान्नाशुभग्रहनाडीनक्षत्रेइत्यर्थः चतुर्नाडीत्वहल्यायांपांचाले पंचनाडिका
त्रिनाडी सर्वदेशेषुवर्जनीयाःप्रयत्नतइति मनुस्तु अहल्येतुचतुर्नाडीसंयोगःकालमृत्युदः एषयोगोन्यदेशेषुअपमृत्युफलप्रदः पंचनाडीसमायोगः
पांचालेकालदंडदः इतरत्रसमायोगोदुःखदाशिद्यदोषकृत् त्रिनाड्यांतुसमायोगःसर्वत्रानिष्टकारकइति॥ छ॥ छ॥ ५॥

आवश्यकत्वेगुरुः दोषापनुत्तयेनाड्यांमृत्युंजयजपादिकं विधायब्राह्मणांश्चैवतर्पयेत्कांचना दिना हिरण्मयींदक्षिणांचदद्याद्धूर्णादिकूटके गावोन्नवसनं
हेमसर्वदोषापहारकमिति अन्यच्चषड्काष्टकेमेमिथुनप्रद्घात्कांस्यसरूप्यनवपंचमेति वस्त्रप्रदेयंकनकंचशान्त्याद्विद्वादशेब्राह्मणतर्पणंचेति ३४ अ
थेद्ववक्त्रयापूर्वमध्यापरभागयोगीनिभांसाह पौरमेति पौरमाद्रेवक्त्रयाः षड्भांमानिजोंत्याभिप्रायमेकवचनम् पूर्वार्द्धयोगिनिज्ञेयानि आर्द्रादिद्वादश
मध्यभागयोगिनिज्ञेयानि ज्येष्ठादीनिनवअपरभागयोगिनिज्ञेयानि फलमाह भर्त्ताप्रियइति अयंभावः राज्ञामंतःपुरस्थस्त्रीसमागमेगणिकादिसं
मागमेवापूर्वार्द्धयुतिनक्षत्रेसतिस्त्रीणांभर्त्ताप्रियः मध्यभागयुजिभेपरस्परंप्रीतिर्भवेत्परेपरभागयुतिभेस्त्रीनृणांप्रियाभवेदिति एवंवधूवरयो

ज्येष्ठारौद्रार्यमांभः पतिभयुगयुगंदास्रभंचैकनाडीपुष्येंदुत्वाष्ट्रमित्रांतकवसुजलभंयोनिबुध्न्येचमध्या वाय्वग्नि
व्यालविश्वोडुयुगयुगमथोपौष्णभंचापरस्यादंपत्योरेकनाड्यांपरिणयनमसन्मध्यनाड्यांहिमृत्युः ३४ पौष्णेशशाक्रादृ
सस्तूर्यनंदपूर्वार्द्धमध्यापरभागयुग्मं भर्त्ताप्रियःप्राग्युजिभेस्त्रियास्यान्मध्येद्वयोःप्रेमपरेप्रियास्त्री ३५ अकचटतपयश
वर्गाः खगेशमार्जारसिंहश्वनाम सर्पाखुमृगावीनांनिजपंचमवैरिणामष्टौ ३६ राश्यैक्यंचेद्भिन्नमृक्षंद्वयोःस्यान्नक्षत्रैक्ये

नेवसमागमेपिज्ञेयमिति रत्नमालाटीकायांमहादेवेनोक्तंभागमपि ३५ अथप्राच्यसंमतंवर्गकूटभार्यमाह अकचटेति अव (राशियुग्मंतथैव।
र्गोचसंज्ञकः कुचुटुतुपुइतिपंचवर्गाः एकोयवर्गोन्यःशवर्गः एवमष्टौवर्गाः तत्र अवर्गःखगेशस्यगरुडस्यकवर्गोमार्जारस्यचवर्गःसिंहस्यटवर्गःश्वनःत
वर्गःसर्पस्यपवर्गआखोर्मूषकस्य यवर्गोमृगस्यशवर्गोऽवेर्मेषस्य अत्रनिजात्स्वस्मात्पंचमोवैरिणोयेषांतेतथोक्ताः गरुडसर्पयोःमार्जारमूषकयोः
सिंहमृगयोःश्वमेषयोः परस्परमहावैरमित्यर्थः स्त्रीपुंसयोर्नक्षत्रभस्यवर्गेचेत्तदाअश्वमंयदात्वेकवर्गेतदाशुभंएतच्चस्वामिसेवकयोरपिविचार्यम्
३६ इदानींनक्षत्रराश्यैक्यविशेषशालिन्याह राश्यैक्यंचेदितिद्वयोर्वधूवरयोःएकराशित्वेसतियदिभिन्नमृक्षंस्यात् तदानाडीदोषोगणानांचदोषोनस्या

यथा शततारापूर्वाभाद्रपदापादत्रयं च तथैव नक्षत्रैक्ये राशियुग्मे राशिद्वये चेत्स्याच्चदापि प्रायुक्तो दोषो न स्यात् यथा पूर्वाभाद्रपदापादत्रयं चतुर्थ
चरणश्च अत्रापि विशेषमाह गर्गः एकराशौ पृथक् धिष्ण्ये युता राप्रथमा भवेत् अतीव शोभना प्रोक्ता स्त्रीतारा चेत्तु शोभना अथैकराशिनक्षत्रैक्येऽप
वादमाह नक्षत्रैक्य इति वधूवरयोः राश्यैक्ये नक्षत्रैक्ये चरणद्विचरणभेदश्चेत्तदापि शुभं स्यात् जन्मनक्षत्राज्ञाने उपायमाह वसिष्ठः अज्ञातजन्मनां नृणा
नामभे परिकल्पना तेनैव चिंतयेत्सर्वं राशिकूटं द्विजन्मवत् जन्मभं जन्मधिष्ण्येन नामभं नामधिष्ण्यतः व्यत्ययेन यदा योज्यं दंपत्योर्निधनप्रदमिति।
३७ सेवकादिभस्य स्वाम्यादिभात् पूर्वं तत्र विशेषं वसंततिलकयाह सेव्याधमर्णेति स्पष्टार्थम् तथोक्तं डामरसंग्रहे भामिनीजन्मनक्षत्राद्द्वितीयं पतिज

नाडीदोषो नो गुणानां च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात् ३७ सेव्याधमर्णयुवतीनगरादिभं चेत्पूर्वं हि भृत्यधनिभर्तृपु
रादिसद्भात् ॥ २ ॥ सेवाविनाश धननाश न भर्तृनाश ग्रामादिसौख्यहतिरक्रमशः प्रदिष्टं ३८ कुजशुक्रसौम्यशशि
सूर्यचंद्रजाः कविभौमजविशानिसारयोगुरुः इह राशिपाः क्रियमृगास्यतौलिकेंदुभतो नवांशविधिरुच्यते बुधैः ३९ स
मगृहमध्ये शशिरविहोरा विषभमध्ये रविशशिनोः सा ४० ॥

न्मभं न शुभं भर्तृनाशाय कथितं ब्रह्मयामले प्रथमं सेव्यजन्मर्क्षाद्द्विती।
यं सेवकस्य च न सेवासु स्थिरा तस्य जलबुद्बुदवत् स्त्रियेत्कृणग्राहकं जन्मर्क्षं प्रथमं ऋणदस्य मात् द्वितीयं ऋणसंबंधान कर्त्तव्यः कदाचन कदाचिद्द्रव्य
लोभेन क्रियते नैव लभ्यते पार्वती प्राणनाथेन प्रोक्तं डामरसंग्रहे ग्रामभं प्रथमं यस्य द्वितीयं जन्मभं भवेत् न ग्राह्यः सर्वथा ग्रामो यतः प्राणार्थनाशदः॥
ति ३८ अथ राशिस्वामिनो मंजुभाषिण्याह कुजशुक्रेति स्पष्टार्थं क्रियमृगास्येति क्रियो मेषः मृगास्यं मकरः तौलिकस्तुलः इंदुभं कर्कः एभ्यो राशिभ्यो
बुधैर्नवांशविधिरुच्यते मेषे मेषादेव वृषे मकरात् मिथुने तुलतः कर्के कर्कादेव एवं सिंहे मेषात् एवं कन्यादिषु मकरादिभ्यः एवमेव धनुरादिष्वपि मेषादिभ्य ए
व ३९ अथ होरां गायत्रीछंदोभेदेन शशिवदनावृत्तेनाह समगृहेति पंचदशभागमितैकैका होरा ततः समराशिमध्ये प्रथमा चंद्रस्य द्वितीया सूर्यस्य विषम

अथ त्रिंशांशद्रेष्काणांश्च वसंततिलकयाह शुक्रेति समराशिमध्ये क्रमेण प्रथमतः पंचांशानां शुक्रः स्वामी ततः शैलांशानां सप्तानां बुधः ततोऽ
ष्टानां गुरुः ततः पंचानां शनिः ततः पंचानां भौमः विषमभे तु अस्मात्समराशेर्विपरीतं ज्ञेयम् प्रथमः पंचानां भौमः ततः पंचानां शनिः ततोऽष्टानां जीवः त
तः सप्तांशानां बुधः ततः पंचांशानां शुक्रः अयं त्रिंशांशकः संज्ञः द्रेष्काणकाद्इति अस्य प्रमाणं दशांशाः तत्र प्रथमदशांशाः प्रथमो द्रेष्काणः स प्रथमस्य स्वा
धीशस्य ततो दशांशाः विंशतिभागपर्यंतं द्वितीयो द्रेष्काणः सः स्वाधिपतिः पंचमराशीश्वरस्य ततो विंशतिभागानंतरं दशांशास्तृतीयो द्रेष्काणः सः
स्वराशेर्नवमाधीश्वरस्य यथा मेषे प्रथमद्रेष्काणो भौमस्य द्वितीयः सूर्यस्य तृतीयो गुरोरिति ४१ अथ द्वादशांशषड्वर्गोपसंहारं च सफलं वसंतति
लकयाह स्याद्द्वादशांश इति इह षड्वर्गे द्वादशांशाः राशितः स्वराशेरेव संधर्भा महूयात्मको ज्ञेयः मेषस्य मेषादि वृषस्य वृषादि इत्यर्थः गेहं होरा दृक्कः नव

**शुक्रज्ञजीवशनिभूतनयस्य बाणाः शैलाष्टपंचविशिखाः समराशिमध्ये त्रिंशांशको विषमभे विपरीतमस्माद्द्रेष्का**
**णकाः प्रथमपंचनवाधिपानां ४१ स्याद्द्वादशांश इह राशित एव गेहं होराथ दृक्कनवमांशकसूर्यभागाः त्रिंशांशक**
**श्च षडिमे कथितास्तु वर्गाः सौम्यैः शुभं भवति चाशुभमेव पापैः ४२ ॥** मांशाः द्वादशांशाः त्रिंशांशाः इमे षड्वर्गाः कथिताः एते वर्गाः

सौम्यग्रहाणां चेद्भवंति तदा शुभं पापानां चेदशुभं मिश्राश्चेदधिकवर्गसदृशं फलं अत्र नारदादिभिरेकविंशतिर्महादोषा उक्ताः यथा पंचांगशुद्धिरहि
तो दोषस्त्वाद्यः प्रकीर्तितः उदयास्तशुद्धिरहितो द्वितीयः सूर्यसंक्रमः तृतीयः पापषड्वर्गो भृगुः षष्ठः कुजोऽष्टमः गंडांतकर्तरी रिष्फषडष्टेंदुश्च संग्रहः दंपत्योरष्ट
मं लग्नं राशिर्विषघटी तथा दुर्मुहूर्तो वारदोषः खार्जूरिकसमांघ्रिभं ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतं कुनवांशो महापातो वैधृतावेकविंशतिरिति अ
न्यैस्तु दशदोषा उक्ताः वेधश्च लत्ता च तथैव पातः खार्जूरयोगं दशयोगवक्रं पुनश्च जामित्रमुपग्रहाश्च बाणाख्यवज्रो दश चैव दोषा इति अथ ग्रंथकृता
लत्तयोः पृथक् वक्तव्यत्वाद्दोषनामानि भोक्तानि तत्र पंचांगशुद्धिर्दुर्मुहूर्तं वारदोषग्रहणोत्पातनक्षत्रदोषा आद्ये शुभाशुभप्रकरणे निरूपिता एवं वि
पुनर्नोच्यते दुर्मुहूर्तं वारदोषयोः पुनरभिधानं प्रयोजनं तत्रैव स्पष्टम् अनिरूप्यते तत्र पापषड्वर्गाख्यो दोषः कुजशुक्रेत्यादिभिश्चतुर्भिः श्लोकैर्निरूपितः

अथ गंडांतदोषं शार्दूलविक्रीडितेनाह ज्येष्ठापौष्णेति गंडांतं नाम संधिविशेषः स चानेकविधः नक्षत्रतिथिलग्नसंधिः तथा योगकरणवर्षायनर्तुमासप
क्षदिनरात्रिमध्याह्नप्रातःसायंनिशीथसंधिश्चेति तत्र नक्षत्रतिथिलग्नसंधिर्गंडांतसंज्ञा उच्यते ज्येष्ठापौष्णभं रेवती सार्पभं माश्लेषा एतेषामंतघटिकाद्वय
तथा मूलाश्विनीमघानामाद्यौ घटिकाद्वयं तद्भस्य नक्षत्रस्य गंडांतं ज्ञेयं यथा रेवत्यश्विन्योराश्लेषामघयोर्ज्येष्ठामूलयोरंतरालवर्ति घटीचतुष्टयं नक्ष
त्रगंडांतमशुभदमित्यर्थः अथ लग्नगंडांतं कर्केति कर्कः अलिर्वृश्चिकः अंडजो मीनः मीनो वैसारिणोऽंडज इत्यभिधानात् एषां लग्नानां अंततोऽर्धघ
टिका सप्तम्यर्थे तसिः अंते अर्धघटिका तथा सिंहमेषौ प्रसिद्धौ अश्वो धनुः एषां लग्नानां आदिमतोऽर्धघटिका लग्नगंडांतं यथा कर्कसिंहयोर्मीनमेषयोर्वृ
श्चिकधनुषोश्चांतरालवर्तिन्येका घटिका लग्नगंडांतमशुभदमित्यर्थः पूर्णांतेति पूर्णाः पंचमीदशमीपंचदश्यस्तासामंते घटिके द्वे तथा नंदाः प्र

**ज्येष्ठापौष्णभसार्पभांत्यघटिकायुग्मं च मूलाश्विनीपित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गंडांतकं । कर्कालिंडजभांततोऽर्ध**
**घटिका सिंहाश्वमेषादिगा पूर्णांताद्घटिकात्मकं त्वशुभदं नंदातिथेश्चादिमं ॥ ४३ ॥ लग्नात्सा पावृज्वनृजू व्ययार्थस्थौ यदा त.**

तिपत्षष्ठ्येकादश्यः तासामादिमैका घटिका तिथिगंडांतं नाम यथा पंचमीषष्ठ्योः पंचदशीप्रतिपदोः वा तिथ्योरंतरालवर्ती घटीद्वयं तिथिगंडं ॥ दो ॥
तमशुभमित्यर्थः एवं गंडांतसंज्ञः संधिस्तु अथान्येऽपि संधयो वसिष्ठेनोक्ताः पक्षाब्दसंधिस्त्रिदिनं च मासस्य संधिस्त्रिनाड्यः खलु संध्ययोश्च नाड्यश्चतस्रस्ति
थिऋक्षयोगसंधिस्तदर्धं करणस्य संधिः पक्षांते पुत्रनाशः स्यान्मासांते तु धनक्षयः वर्षांते वर्गनाशः स्याद्ग्रहणात्सर्वनाशनमिति आवश्यके त्वेतु नक्षत्रयोग
तिथिसंधिषु नाडिकैका तिथ्यष्टविंशतिपलैः सहितोभयत्र कर्कालिमीनतनुसंधिषु दिक्पलानि वर्ज्यानि शेषविवरेषु च पंच पंच विवासनासिद्धं केषांवा
कैवाक्यमनुसर्तव्यं गंडांतपरिहारमाह वसिष्ठः गंडांतदोषमखिलं शुभमुहूर्ताभिजिद्दहत्यः हंति यद्वन्मृगं व्याघ्रः पक्षिसंघमिवाखिलमिति ४३ अथ कर्त्तरी
दोषमनुष्टुभाह लग्नात्सा पापाविति यदा पापग्रहौ ऋज्वनृजू लग्नाद्व्ययार्थस्थौ द्वादशस्थः पापग्रहो ऋजुमार्गी द्वितीयस्थः पापोऽनृजुर्वक्री स्यात्तदा ॥ ४४ ॥

कर्तरीनामदोषः स्यात् मृत्युदारिद्र्यशोकदा भवेत् कर्त्तरीकारकौ ग्रहौ उभावपि वक्रिणौ शीघ्रगौ वा तदा कर्त्तरी नेत्याह वसिष्ठः लग्नस्य पृष्ठाग्रगयोः साध्वोः
सा कर्त्तरी स्याद्दृजु चक्रगयोः तावेव शीघ्रौ यदि वक्रचारौ न कर्त्तरी चेति पितामहोक्तिरिति इयं कर्त्तरी चंद्रस्यापि द्रष्टव्या कश्यपः चंद्रस्य कर्त्तरी तद्वच्छुभदृष्टा
न दोषदेति परं तु लग्नस्य चन्द्रस्य वा क्रूरमध्यगतत्वदोषो स्त्येव कर्त्तरीतः स्वल्पफलः कन्यानाशकरत्वात् क्रूरग्रहमध्यगते लग्ने चंद्रे यवा करग्रह
णं तेपमसद्नाभिमुखं गमनं वेच्छंति कन्यायाइ इति वसिष्ठोक्तेः कर्त्तरीदोषापवादमग्रेपि स्वयं वक्ष्यति ४४ अथ संग्रहदोषमनुष्टुभाह चंद्रेति सूर्ययु
के चंद्रे दारिद्र्यं स्यात् एवं भौमादिषु मरणादिफलं क्रमेण स्यादित्यर्थः पापद्वययोगे चंद्रस्य मृतिः स्यात् नारदादिभिर्बुधगुरुसाहित्यफलमशुभमुक्तं अत्र
तु श्रीपतिवाक्यानुरोधात् वसिष्ठेनचक्रे चिन्मते शुभत्वोक्तेश्च शुभमुक्तं श्रीपतिः शुभं चंद्रमौलिभृदीज्यविज्ञामिति वसिष्ठः दारिद्र्यंरविणाकु

**कर्त्तरीनामसाज्ञेयामृत्युदारिद्र्यशोकदा ४४ चंद्रे सूर्यादिसंयुक्ते दारिद्र्यं मरणं शुभं सौख्यं सापत्न्यं वैराग्यं पापद्वययुते मृ**
**तिः ४५ जन्मलग्नभयोर्मृत्युराशौ निष्ठः करग्रहः एकाधिपत्ये राशीशे मैत्रे वा नैव दोषकृत् ४६ मीनोक्षककर्कालिमृग**
**स्त्रियोष्टमं लग्नं यदा नाष्टमगेहदोषकृत्॥** मुजेनमरणं सौम्येनस्वुः प्रजादौ भोग्यं गुरुणा सितेन सहिते चंद्रे ससापत्नकं प्रव्रज्यार्केसु
तेन सद्ग्रहयुजौ वाक् तिके विद्धुभं बाधैर्मृत्युरसद्ग्रहैः शशियुते दीर्घः प्रवासः शुभं इति एतत्परिहारो नारदेनोक्तः स्वक्षेत्रगं स्वोच्चगं वा मित्रक्षेत्रगतेयदि।
युतिदोषो न भवेद्दंपत्योः श्रेयसे तदेति ४५ अथाष्टमलग्नदोषं सापवादमनुष्टुभाह जन्मलग्नभयोरिति जन्मलग्न जन्मराशिसंबंधिनी मृत्यौ राशौ अष्टमराशौ
विवाहलग्ने करग्रहो निष्ठः अत्र जन्मलग्ने जन्मराशौ विवाहः नारदः जन्मराश्युदये मेने वजन्मलग्नोदयः शुभः तयोरुपचयस्थानं यदि लग्नगतं शुभं अष्टम
लग्नापवादमाह एकेशेति जन्मराशिजन्मलग्नयोरन्यतरस्य विवाहलग्नस्य स्वाम्यैक्ये सति यथा मेषवृश्चिकयोः तुलातयो राशीश्वरयोर्मैत्रे सति यथा
सिंहमीनयोः एतादृशे विषये अष्टमलग्नदोषो न स्यात् ४६ अथोत्तरार्धोक्तमेवार्थं स्पष्टमुपजातिकयाह मीनोक्षेति उक्षो वृषः स्त्री कन्या एते राशयो यद्यष्टमं

घटिकाचतुष्टयं १५।५।८।७।७।५।४।८।७।१०।३।१०।१२।७।८ नस्याद्यं हृदश दिक्चशैलावाणाश्वतत्त्वनिय थाक्रमेण सूर्यादिवारेष्वपरं त्रतस्ता नाड्यो विषंस्यात्खलुवर्जनीयं ४०।२।१२।१०।७।५।२५।५१ अथदुर्मुहूर्तदोषविवक्षुरादौ दिवामुहूर्त्तान्मालिनीछंदसाह गिरिशेति अथबाणचंद्रा विस्तु कैर्मुहूर्तस्यपार्थक्यनलक्षणंनोक्तं इंद्रानलौइंद्राग्नी एतेवासरेपंचदशमुहूर्त्ताःस्युः५२ रात्रिमुहूर्त्तानतुष्टुभाह शिवेति प्रथममुहूर्त्तस्वामीशिवएव। ततोजपादादयोभेशाः नक्षत्रस्वामिनोमुहूर्त्तेशाःस्युःयथा अजपादःअहिर्बुध्न्यःपूषाअश्विनौयमःअग्निःब्रह्मासोमइत्यष्टौततोदशमुहूर्त्तादितिजी

युगाश्वितो२४बुध्न्यभतोपयाम्यभेखचंद्रतो१०मित्रभंवासवःश्रुतो५० मूलेंगवाणात्५६ विषनाडिकाःकृतावर्ज्याःशुभेष्वेवि षनाडिकाध्रुवाःनिघ्नाभभोगेनखनर्क६०भाजिताःस्फुटाभवेयुर्विषनाडिकास्तथा ५१ गिरिशभुजगमित्राःपित्र्यवसं बुविश्वभिजिदथचविधातापीद्रइंद्रानलौच निर्ऋतिरुदकनाथोप्यर्यमाथोभगःस्युःक्रमशइहमुहूर्त्तावासरेवाणचं द्राः५२ शिवोजपादादयोस्युर्भेशाअदितिजीवकौ विष्ण्वर्कत्वाष्ट्रमरुतोमुहूर्त्तानिशिकीर्तिताः५३ रवावर्यमाब्रह्मरक्ष श्चसोमेकुजेवह्निपित्र्येबुधेचाभिजित्स्यात् गुरौतोयरक्षोभृगौब्रह्मपित्र्येशनावीशसार्पौमुहूर्त्ताोनिषिद्धाः५४ निर्वेधेशशि करमूलमैत्र्यपित्र्यब्राह्म्योत्तरपंक्तैःशुभोविवाहःरिक्तामारहिततिथौशुभेह्निवैश्वप्रांत्यांघ्रिःश्रुतितिथिभागतोभिजित्स्यात्

चोगुरुःविष्ण्वर्कत्वाष्ट्रःमरुतःप्रसिद्धाःएतेसर्वेनिशिमुहूर्त्ताःप्रकीर्तिताःअह्नःपंचदशोभागोमुहूर्त्तोस्यतथानिशीतिकश्यपोक्तेः५३ अथदुर्मुहू र्त्तान्भुजंगप्रयातेनाह रवावर्यमेति रवौअर्यमामुहूर्तोनिषिद्धःएवंसोमेब्रह्मरक्षःइंद्रेकत्वं ब्रह्मरक्षस्वामिकौमुहूर्त्तौनिषिद्धौअन्यत्स्पष्टं ५४ अथवेधवि वक्षुर्विहितनक्षत्रादिकमभिजिन्मानंचप्रहर्षिण्याह निर्वेधेशितिवेधरहितेमृगादिनक्षत्रैःविवाहःशुभःरिक्तेतिरिक्तामा४।९।१४।३० आभिर्व र्जिततिथिषुशुभेह्निशुभग्रहवारेविवाहःशुभःअभिजिल्लक्षणमाह अथवैश्वेति वैश्वमुत्तराषाढातस्याःप्रांत्यांघ्रिश्चतुर्थचरणःश्रुतेःश्रवणस्य

अथवेधदोषंपंचशलाकाचक्रोधारेनैपेसंस्पष्टंशार्दूलविक्रीडितेनाह वेधोऽन्योन्यमिति विरिंच्यभिजितोः रोहिण्यभिजितोर्ग्रहस्त्वोवेधोऽन्योन्यंपरस्परं भ
वेत् रोहिणीस्थेग्रहेऽभिजिति रोहिणीविद्धा एवंसर्वत्रव्याख्येयंचरणवेधमाह खेटइति तत्रतस्मिन्नक्षत्रे विद्यमानेग्रहेसतियदिचतुर्थपादेस्तितदापरनक्ष
त्रस्यप्रथमपादस्यवेधः यदितृतीयपादेतर्हि द्वितीयचरणस्यवेधः एवंयदोद्वितीयपादेतदातृतीयपादस्यवेधः यदिप्रथमपादेतदाचतुर्थपादस्यवेधइत्यर्थः
अयंचरणवेधः सौम्यग्रहपरएव नारदः पादमेवंशुभेविद्धमशुभैर्नैवकृत्स्नतइति क्रूराविद्धयुतंधिष्ण्यंक्रूराक्रांतंचक्रुत्तनभंमणिहेममयंहर्म्यैभूताक्रांतमि
वसजेदिति श्रीपतिः वधूप्रवेशनेदानेवरणेपाणिपीडनेवेधःपंचशलाकास्योऽन्यत्रसप्तशलाककइतिज्योतिर्निबंधेगर्गः मघायांप्रथमेपादेमूलस्य

वेधोन्योन्यमसौविरिंच्यभिजितोर्याम्यानुराधर्क्षयोर्विश्वेंदुद्वयोर्हरिपित्र्ययोर्ग्रहकृतोहस्तोत्तराभाद्रयोः स्वातीवारुणयोर्भवेन्निर्ऋ-
तिभादित्योस्तथोफाल्ययोः खेटेतत्रगतेतुरीयचरणाद्योर्वातृतीयद्वयोः ५६ शाक्रेज्येशतभानिलेजलशिवेपौष्णार्यमर्क्षेवसुद्वीशे
वैश्वस्कंधाशुभेहयभगेसार्पानुराधेमिथः हस्तोपांतिमभेविधाववैधिभेमूलादितीत्वाष्ट्रभाजांघ्रीयाम्यमघेकृशानुहरिभेविद्धे
कुभद्रेखिले ५७ ऋक्षाणिक्रूरविद्धानिक्रूरमुक्तादिकानिच॥ ((प्रथमेतथारेवत्याश्चचतुर्थेशेविवाहः प्राणनाशनः इति तदग्रेडांतरंज्ञे

यम् ५६ अथविवाहादन्यत्रयज्ञोपवीतादौकेश्चिद्विवाहेपिसप्तशलाकाचक्रवेधोवर्ज्यउक्तस्तदर्थंचक्रन्यासंविनैवसप्तशलाकावेधंशार्दूलविक्री
डितेनाह शाक्रेज्येइतिकुभद्रेखिलेसप्तशलाकाचक्रेशाक्रेज्येज्येष्ठापुष्यनक्षत्रे मिथःपरस्परंक्रूराधिष्ठितत्वेविद्धेज्ञेयं एवंजलशिवेपूर्वाषाढार्द्रेइत्या
दिव्याख्येयं दीपिकायां यस्याःशशीसप्तशलाकचक्रेपापैरपापैरथवा विवाहे उद्वाहवस्त्रेणसुसंवृतांगीश्मशानभूमिंरुदतीप्रयातीति ५७ अथक्रू
राक्रांतादिदोषसापवादमनुष्टुभाह ऋक्षाणीति क्रूरग्रहैर्विद्धानितथाक्रूरैर्मुक्तानित्यक्तानि आदिशब्दात् क्रूरयुतानिक्रूरगतव्यानिचकारात्त्रिविधोत्पातदू
षितानिचनक्षत्राणितानियदिचंद्रेणभुक्तामुक्तानितदाशुभानिहोणिशुभकर्माहाणिविवाहादौयोग्यानिबुधैः॥ ७ ॥ ५ ॥ २ ॥ ६ ॥

[illegible] यंति ५८ अथ लत्तादोषमुपजातिकयाह ज्ञराह्विति गोनवजातयोह्याविंशतिरारा: पंच एते मितं भं स्वाक्रान्तनक्षत्रात् ज्ञराहुपूर्णेंदु
सिता: स्वपृष्ठे संलतयंते यथा बुध: सप्तमं राहु नवमं राहो: सदा वक्रत्वान्नवमगणनाक्रमेणैव कार्या यथाश्विन्यां राहुराश्लेषां लत्तयतीति पूर्णेंदु: पू
र्णिमांतचंद्रो ह्याविंश तत्त्वकृष्णपक्षे पंचम्यादितिथौ न भवति शुक्र: पंचमं स्वपृष्ठे लत्तयतीत्यर्थ: अर्कशनीज्यभौम: क्रमेण पुरस्तादग्रे सूर्याष्टतर्का
ग्निमितं संलत्तयंते यथा सूर्य: स्वाक्रांतनक्षत्राद्द्वादशं शनिरष्टमं गुरु: षष्ठं भौमस्तृतीयं नक्षत्रं अग्रतो लत्तयतीत्यर्थ: वराह: रविलता वित्तहरीनित्यं के
जीवि निर्दिशेन्मरणं चार्द्री नाशं कुर्याद्द्धी धीनाशं वदत्येव सौरी मरणं कथयति बंधुविनाशं बृहस्पतेर्लता मरणं लता राहो: कार्यविनाशं भृगोर्वदंतीति
५९ अथ पातदोषं पथ्यार्यया आह हर्षणेति व्यतीपातक इति स्वार्थेक: हर्षणेत्यादिषट्योगानां अंते यन्नक्षत्रं भवेत् पातेन चंडीशचंडायुधाख्येन निपा

भुक्ता चंद्रेण मुक्ता निशुभार्हा [illegible] वसते ५८ ज्ञराहुपूर्णेंदुसिता: स्वपृष्ठे भं सप्तगोजातिशरैर्मितं हि संलत्तयंतेर्कशनीज्यभौ
मा: सूर्याष्टतर्काग्निमितं पुरस्तात् ५९ हर्षणवैधृतिसाध्यव्यतीपातकगंडशूलयोगानां अंते यन्नक्षत्रं पातेन निपातितं तत्
स्यात् ६० पंचास्याजौ गोमृगौ नौ लिकुंभौ कन्यामीनौ कर्कली चापयुग्मे तत्रान्योन्यं चंद्रभान्वोर्निरुक्तं क्रांते: साम्यं नो शुभं मंगले
षु ६१ व्याघातगंडव्यतिपातपूर्वशूलांत्यवज्रे परिघातिगंडे योगे विरुद्धे त्वभिजित्समेत: स्वार्जूरमर्को द्विषमे शशी चेत् ६२॥

तितं स्यात् ६० अथ क्रांतिसाम्यापरपर्यायं महापातदोषं शालिन्याह पंचास्येति पंचास्याजौ सिंहमेषौ अन्ये प्रसिद्धा: एषु राशिषु पाठक्रमेण व्युत्क्रमेणाव
स्थितयोश्चंद्रभान्वो: क्रांतिसाम्यं निरुक्तं तन्मंगलेषु नो शुभं स्यात् अनेन क्रांतिसाम्यसंभवमात्रं सूचितं तदानयनं सूर्यसिद्धांताद्ग्रामविनोदाद्वास्य
ष्टं ज्ञेयं ६१ अथ स्वार्जूरदोषं स्फुबोधमिंद्रवज्रयाह व्याघातेति अंत्यो वैधृति: यस्मिन्दिने व्याघातादिके विरुद्धे दुष्टे योगे सति अर्कादर्कनक्षत्रान्वाच्छशी चं
द्रो ऽभिजित्समेतो विषमे विषमसंख्याके नक्षत्रे स्यात्तदा स्वार्जूराख्यो दोष: स्यात् यदा समे स्यात्तदा न दोष इत्यर्थ: एकार्गलो दृष्टिपातश्चाभिजिद्रहिता
निवेद इति कश्यपेनात्राभिजिद्ग्रहणं ना निषिद्धा केशवार्कत्रिविक्रमादिभिरंगीकृतेति उभयवचनप्रामाण्याद्विकल्प: ६२ ॥ ६२ ॥ ६२ ॥

तारा: चंद्रनक्षत्राणिपंचाष्टदशचतुर्दशसप्तैकोनविंशतिः पंचदशाष्टादशैकविंशति

अथोपग्रहदोषमुपेंद्रवज्रयाह शराष्टेति सूर्यभतः सूर्याक्रांतनक्षत्रादुक्तातारा: चंद्रनक्षत्राणिपंचाष्टदशचतुर्दशसप्तैकोनविंशतिः पंचदशाष्टादशैकविंशति: एषांदेशभेदेनपरिहारमाह कुरुभाने
र्द्वाविंशतित्रयोविंशतिचतुर्विंशतिपंचविंशतिसंख्याका: अमीसप्तदशउपग्रहोपनामकादोषा: स्युः कुरु तिरेकविंशतिः एषांदेशभेदेनपरिहारमाह शकभाने
तिकुरुदेशेवाल्हिकदेशेशकभाम ६३ अथप्रसंगात्पातोपग्रहलतास्वपवादगर्धयामंचानुष्टुभाह पातेति पातश्चंडीशचंडायुधाख्योदोषः उपग्रहो: प्रागुक्तः लता
त्रयेतुपूर्णे तु सितेसादिनालतातत्रखेटपतन: ग्रहचरणतुल्यः नक्षत्रचरणोनेष्टः अयमर्थः उपग्रहेपातेरविर्यस्मिन् चरणेस्याततस्यैवतस्यचरणोवर्ज्योना
न्यः लतायांतुलताकारोग्रहोयत्रचरणेस्यात्त समसंख्यएवचरणंलक्षितनक्षत्रस्यवर्ज्योनान्य: उक्तंच उपग्रहेपुलतायांतथाचंडायुधाह्वये ग्रहोस्ति
यत्प्रमाणांशेविद्धंशेसत्प्रमापकइति अयंपरिहारः खार्जूरिकेपिद्रष्टव्य: सूर्योयस्मिन्पादेभक्तत्समसंख्यएवचरणएकरेखावस्थितचंद्रनक्षत्रस्य

शराष्टदिक्शक्रनगातिधृत्तिथिर्धृतिश्चप्रकृतेश्चपंचउपग्रहाः सूर्यभतोब्जताराः शकभानदेशेकुरुबाल्हिकानां ६३ पातो
पग्रहलतास्वनेष्टोंघ्रिः खेटयत्तत्समः वारस्त्रिघ्नोऽष्टभिस्तष्टःसैकस्यार्धयामक: ६४ शक्रार्कदिग्वसुरसाब्ध्यश्विनःकु
॥ लिकारवेः ॥

वर्ज्यइतिखार्जूरिकसमांघ्रिमभमित्युक्तत्वात् वारइति इष्टोवारस्त्रिभः अष्टभिस्तष्टः शेषितोयोंक: सैक: सोर्धयामोदोषः स्यात् ।
कश्यप: शैलाक्षश्रुतयः ७।५।४सूर्येचंद्रेषडपर्वताः ६।४।७ भौमेबाणाग्निनेत्राणि ५।३।२ सौम्येवेदाक्षिवायवः ४।२।५ गुरुवारेग्निचंद्रमाः ३।१।८
शुक्रेनेत्राद्रिवन्हयः २।७।३ शनौचंद्रभतर्का: १।८।६ स्युः कुलिकोयमघंटकः अर्धप्रहरसंज्ञास्तान्मंगलेषुविवर्जयेत् निधनंप्रहरार्धेतुनिःसत्वंयम
घंटकेकुलिकंसर्वनाशः स्याद्रात्रावेतेनदोषदाइति ६४ अथकुलिकमनुष्टुभाह शक्रेति रविमारभ्यसर्ववारेषुक्रमादुक्तसंख्यास्तिथ्यंशामुहूर्त्ताकुलि
का: स्युः यथादिनेरवौ १४ चंद्रे १२ भौमे १० बुधे ८ गुरौ ६ शुक्रे ४ शनौ २ रात्रावेतेविरेका: कार्या: यथारवौ १३ चं ११ भौ ९ बु ७ गु ५ शु ३ श १ शनौतु अंत्योपि
रात्रे: पंचदशोपिमुहूर्त्त: कुलिक: एतेनिंदिता: एतेषामर्धयामादिदोषाणांपुनर्निरूपणंविवाहेअवश्यवर्ज्यतार्थंशीघ्रोपस्थित्यर्थंचातिकुलिकाख्याः ॥

वारेशे सबले वा प्रबलाढ्ये लग्नगे शुभे कुलिकोदयदोषस्तु विनश्यति न संशयः वाराधीशे बलोपेते विधौ वा बलसंयुते अर्धप्रहरसंभूतो दोषो नैवात्र विद्यते शुभे केंद्रगते चंद्रे शुभांशे वा शुभेक्षिते लग्नेगे सबले वापि कुलिकस्तु विधीयते अर्द्धप्रहरपूर्वार्धे मध्यं तु यमघंटजे कुलिकोत्यांशशुभमाचरेत्तद्वृति ६५ अथ दग्धातिथ्याख्यं दोषमिंद्रवज्रयाह चापांत्येति तत्तद्राशिद्वयस्थिते पतंगे सूर्ये द्वितीयाप्रमुखा उभयपक्षसाधारणाः समासंख्याकास्तिथयो दग्धाः स्युः यथा धनुर्मीनगते सूर्ये द्वितीया दग्धा वृषकुंभगेर्के चतुर्थी कर्कमेषगे षष्ठी कन्यामिथुनगेष्टमी सिंहवृश्चिकगे दशमी तुलामकरगेर्के द्वादशी दग्धा इत्यर्थः मासदग्धाश्च तिथयो मध्यदेशे विवर्जिताइ तिपरिहारः ६६ अथ जामित्रदोषं भ्रमरविलसितेनाह लग्नादिति विवाहलग्नाच्चंद्राद्वा सप्तमभव

**रात्रौ निरेकास्तिथ्यंशाः शनौ वांत्योपनिंदिताः ६५ चापांत्यगे गोघटगे पतंगे कर्काजगे स्त्रीमिथुने स्थिते च सिंहालिगे नक्रघटे समाः स्युस्तिथ्यो द्वितीयाप्रमुखाश्च दग्धाः ६६ लग्नाच्चंद्रान्मदनभवनगे खेटे न स्यादिह परिणयनं किं वा बाणाशुगमितलवगे जामित्रं स्याच्छुभकरमिदं ६७ एकार्गलोपग्रहपातलत्ताजामित्रकर्त्तर्युदयास्तदोषाः नश्यंति चंद्रार्कबलोपपन्ने लग्ने यथार्कोभ्युदये तु दोषा ६८ उपग्रहर्क्षं कुरुवाल्हिकेषु कलिंगवंगेषु च पातितं भं॥** नगते ग्रहे परिणयनं न स्या

त् अस्यापवादः किं वेति ग्रहाधिष्ठितनवांशमारभ्य वाणाशुग ५५ मितलवगे पंचपंचाशन्मितनवांशगे चंद्रे लग्ने वा जामित्रं सूक्ष्मं स्यात् यथा मेषे पंचमनवांशे भौमोस्ति तस्मात् तुलायां पंचमनवांशस्थश्चंद्रो निषिद्धोऽन्येऽष्टौ नवांशाः शुभाः एवंविधं सूक्ष्मजामित्रमिदं शुभकरं स्यात् अस्यापवादो व्यवहारोच्चये स्वोच्चे वा स्वभवने स्फुरदंशुजालः सौम्यालये हि नगृहे शुभवर्गगो वा जामित्रकादि परिसंचितदोषराशिं हत्वा ददाति बहुशः सुखमेव चंद्रइति ६७ अथैकार्गलादिदोषाणां अपवादं साक्षाद्वसिष्ठवचनमेवेंद्रवज्रयाह एकार्गलेति चंद्रार्कबलोपपन्ने स्वोच्चे मित्रादिराशिस्थितत्वरूपे विद्वित स्थितत्वरूपे च सति एकार्गलादयो दोषा नश्यंति यथार्कोभ्युदये दोषा रात्रिर्नश्यति ६८ अथ केषांचिद्दोषाणां देशविशेषेण परिहारमुपजात्याह उपग्रह

स्पष्टार्थं अन्यच्च लतामालवके देशे पातः कौसल्के तथा एकार्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत् युतदोषो भवेद्गौडे जामित्रस्य च यामुने वेधदोषस्तु विं
ध्याख्यदेशे नान्येषु केचनेति ६९ अथ दशयोगदोषमुपजात्याह शशांकेति चेद्यदि चंद्रसूर्यनक्षत्रयोर्युतेर्योगात् भैः सप्तविंशतिभिर्भक्ताद्यः शेषस्तस्मिन्
शून्यैकचतुःषट्दशैकादशपंचदशाष्टादशैकोनविंशतिविंशतिसंख्याके सति एतेकाः दशयोगसंभवा भवंति शिष्टानां दशानामंकानामभिहितत्वाद्
दशयोग इत्यन्यथासंज्ञा ७० अथ दशयोगफलं तदपवादं च शार्दूलविक्रीडितेनाह वाताभ्रेति शून्ये शेषे वातदोषः स्यात् एकशेषेऽभ्रात् चतुःशेषेऽग्नेः षट्
शेषे महीपात् दशशेषे चोरात् एकादशस्क मरणम् पंचदशस्क रुक् अष्टादशस्क वज्रम् एकोनविंशेषु दाहः कलिः सकंटक इत्यर्थः विंशतिशेषे क्षतिः द्रव्यना
शः अथापवादः योगांक इति खभूषुमादिरूपे योगांके समयुग्मसंख्याके सति दलिते अर्धीकृते मनुभिश्चतुर्दशभिर्युक्ते योंकः स्यात् तद्दास्त्रादश्विनीतो भ

**सौराष्ट्रशाल्वेषु चलत्तितं भं त्वेकेन तु विद्धं किल सर्वदेशे ६९ शशांकसूर्यर्क्षयुतेर्भशेषे खभूयुगांगागनिदशेशा तिथ्यः नागेंदवोंकेंदु**
**मितानखाश्चेद्भवंति चैते दशयोगसंज्ञाः ७० वाताभ्राग्निमहीपचौरमरणं रुग्वज्रदाहक्षतिर्योगांके दलिते समे मनुयुतेऽ**
**थोजे तु सैकेऽर्धिते॥** ((नक्षत्रं स्यात् अथौजे तु सैकेऽर्धिते योगांके ओजे विषमे सैके अर्धिते अश्विनीतः भं नक्षत्रं स्यात् यथा समांकाः दश। अर्धिताः ५
मनु १४ युतः १९ मूलं नक्षत्रं जातं ओजांके यथा विषमांके १५ योगः सैकः १६ अर्धितं ८ पुष्यनक्षत्रं जातं अथानंतरं मनुभिः संमिताश्चतुर्दश रेखास्तिर्य
क्क्रमात् लिखेत् ततः अनेन प्रकारेण यं नक्षत्रमागतं ततः आरभ्य साभिजिन्नक्षत्रवृंदं अस्मिंश्चक्रे लेख्यं तत्र नक्षत्रे ग्रहाः स्थाप्याः दिननक्षत्रे चंद्रः स्था
प्यः ततः एकरेखास्थयोः ग्रहचंद्रयोः परस्परावलोकनरूपो वेधो महाभयदः उक्तं च ज्योतिःसारसागरे तिथ्यंगवेदैकदिगूनविंशशून्यभवाष्टादशविंश
संख्याः इंदोर्हुना सूर्ययुतोडुनाथ योगादमी चेद्दशयोगदोषाः मरुन्मेघाग्निभूपालचौरमृत्युरुजोऽशनिः कलिर्हानिर्दशैते दोषाः त्याज्यास्तु सर्वथा॥
धैः योगांके विषमे सैके समे सवस्कलोचनैः दलीकृताश्विनीपूर्वं दशयोगमुदाहृतम् दशयोगे महाचक्रे प्रमदाद्यदि विध्यते॥ ७१ ॥ ॥

क्रूरैः सौम्यग्रहैर्वापिदंपत्योरेकनाशनमिति दशयोगापवादांतरमाह भरद्वाजः गुरौलग्नाधिपेशुक्रे सवीर्येलग्नकेंद्रगेः दशदोषाविनश्यंति पथाग्नौतू लराशयः व्यासः गुरुणाभृगुणावापिसंयुतेदृष्टमेवच दशयोगसमायुक्तमपिलग्नंशुभावहम् ७१ अथपंचकाख्यबाणदोषंशालिन्याह लग्नेनेति शुक्लपक्षादिकागतास्तिथयोवर्तमानलग्नेनाढ्याः युक्ताः अंकैर्नवभिस्तष्टाः शेषभागसंख्ये अष्टसंख्येसगाख्याबाणः एवंद्विसंख्येशेषेवह्न्याख्यः चतुःसंख्येराजाख्यः षट्संख्येचौराख्यः एकसंख्येमृत्युसंज्ञोबाणश्चनेबाणाः दाक्षिणात्येषुमहाराष्ट्रेषुप्रसिद्धाः ७२ अथव्यासमतेनबाणांसापवादंमालिन्याह रसगुणेति रसगुणशशिनागाब्धिभिराढ्यावासौसंक्रांतियातांशकमितिश्चेतिकर्मधारयः सूर्यभुक्तांशानांमितिः संख्यापंचधास्थाप्याक

भंदास्तादथसंमितास्तुमनुभीरवाः क्रमात्संलिखेद्वेधास्मिन्ग्रहचंद्रयोर्नशुभदः स्यात्एकरेखास्थयोः ७१ लग्नेनाढ्यायाततिथ्यांकतष्टाः शेषेनागद्व्यब्धितर्केंद्रसंख्ये रोगोवह्नीराजचौरौचमृत्युर्बाणश्चायंदाक्षिणात्येप्रसिद्धः ७२ रसगुणशशिनागाब्ध्याढ्यसंक्रांतियातांशकमितिरथतष्टांकैर्यदापंचशेषाः रुगनलनृपचौरामृत्युसंज्ञश्चबाणानवहृतशरशेषेशेषकैक्येसशल्यः ७३ रात्रौचौररुजौदिवानरपतिर्वह्निःसदासंध्ययोर्मृत्युश्चाथशनौनृपोविदिमृतिर्भौमेग्नि (चौरोरवौ॥

लादिकमुपेस्थंक्रमेणषट्त्रिएकाष्टचतुर्भिराढ्यासंयोज्यांकैर्नवभिस्तष्टासतियदापंचशेषायस्मिन्स्थलेपंचशिष्यंतेतत्क्रमेण रुगादिर्बाणोज्ञेयः यथा आदौपंचशेषेरोगबाणः द्वितीयपंचशेषेऽग्निबाणः तृतीयेराजबाणः चतुर्थेचौरबाणः पंचमेमृत्युबाणः तस्मात्तद्वर्ज्यंभवतीत्यर्थः अपंबाणः शल्यरहितः तेनस्वल्पदोषः तदपवादभूतः सशल्योबाणउच्यते नवेति यानिभागामतानिशेषाणितेषामैक्येनवहृते पश्चाद्धरशेषेसतिसशल्यसहितोबाणः स्यात् पंचव्यतिरिक्तशेषेशल्यरहितोदुष्टइत्यर्थः अन्येस्तुतिथिवारभलग्नांकोरसाग्न्यब्धाष्टवेदयुक्नंदात्तपंचशेषेरुकवह्निराट्चौरमृत्युरुक्दिति ७३ अथसमयभेदेनवारभेदेनकर्मभेदेनचत्रिविधंबाणपरिहारंशार्दूलविक्रीडितेनाह रात्रौचौरेति चौररुजौबाणौरात्रौत्याज्यौ

वन्हिवाणः सदा दिवारात्रौ त्याज्यः संध्ययोः सायंप्रातः संध्ययोः मृत्युबाणस्त्याज्यः ज्योतिः प्रकाशे रोगं चौरं त्यजेद्रात्रौ दिवा राजन्यपंचकं संध्ययोर्मृत्युं त्या
ज्यं सर्वदा वन्हिपंचकमिति अथवासरभेदेन परिहारः अथेति शनिवारे नृपबाणः विद्बुधवारे मृतिबाणः भौमेऽग्निचौरौ बाणौ रवौ रोगबाणस्त्याज्यः उक्तंच ।
रवौ रोगं कुजे वन्हिं शनौ च नृपपंचकं वर्ज्यं पुनः कुजे चौरं बुधवारे च मृत्युदम् अथ कार्यभेदेन परिहारः अथेति क्रमतएषु शुभकर्मसु एते बाणाः वर्ज्याः य
था व्रते यज्ञोपवीते रुक् गृहस्याच्छादनेऽग्निः नृपसेवायां राजबाणः याने चौरः पाणिग्रहे मृतिबाणो वर्ज्यः उक्तंच नृपाख्यं नृपसेवायां गृहगोपेऽग्नि
पंचकम् याने चौरं व्रते रोगं त्यजेन्मृत्युं करग्रह इति ७४ अथ ग्रहदृष्टिमुपजातिकयाह त्र्याशमिति येखेटाः यस्मिन् स्थाने स्थिताः तस्मात् कथ्यमाना नि
स्थानानि चरणाभिवृद्ध्या पश्यंति तद्यथा त्र्याशं दशमं च एकचरणदृष्ट्या पश्यंति अनेन तत्तद्भावफलं चरणाभिवृद्ध्यैव भवतीति सूचितं मंद इति मं

रोगो व्रतगेहगोपनृपसेवायानपाणिग्रहे वर्ज्यश्च क्रमतो बुधै रुगनलक्ष्मापारचौरामृतिः ७४ त्र्याशं त्रिकोणं चतुरस्र
मस्तं पश्यंति खेटाश्चरणाभिवृद्ध्या मंदो गुरुर्भूमिसुतः परे च क्रमेण संपूर्णदृशो भवंति ७५ यदा लग्नांशेशो लवमथ
तनुं पश्यति युतो भवेद्वायं वोढुः शुभफलमनल्पं रचयति॥ ॥ दः शनैश्चरः स्वस्थानात् त्र्याशं संपूर्णदृक् चतुश्चरणदृष्टिः एवं गुरुस्त्रि
कोणे पूर्णदृक् भूमिसुतश्चतुरस्रे पूर्णदृक् परेऽर्कचंद्रबुधशुक्राः सप्तमे पूर्णदृशः ७५ अथोद्वाहस्य तशुद्धिः शिखरिणी भुजंगप्रयाताभ्यामाह यदा लग्नांशेश
इति लवेशो लव मिति लग्नेशः लग्नांशस्तस्येशः स्वामी लग्ननवांशस्वामी लवं नवांशं पश्यति वाऽथवा नवांशेन सह युतो भवेत्तदा वोढुर्वरस्यानल्पं शुभफ
लं रचयति यथा मेषलग्ने मिथुनांशस्तदीशो बुधस्तुलायां मिथुनं पश्यति तत्र तिष्ठति वा अयमुद्यांशशुद्धेः प्रथमप्रकारः तदभावे तु लग्नांशेशस्तनुं लग्नं
पश्यति लग्नेन सह युतो भवेत्तदापि वोढुः शुभफलमनल्पं स्यात् यथा मेषलग्ने एव मिथुननवांशः स्वामी बुधो मकरे नवांशं न पश्यति किंतु लग्नं पश्य
ति अथ मेष एव तिष्ठति अयमुद्यांशशुद्धेर्द्वितीयः प्रकारः लवद्यूनस्वामी लवान्नवांशात्॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

द्यूनंसप्तमनवांशः तत्स्वामी लवमदनभंलवान्मदनभंसप्तमनवांशंपश्यतितेनसह युतोभवेत् तदावध्वाः अनल्पंबहुशुभंरचयति यथा मिथुननवांशो
लग्नसप्तमोधनुरंशः ॥ तदीशोगुरुर्मेषेधनुःपश्यतितत्रतिष्ठतिवा अयमस्तशुद्धेः प्रथमप्रकारः तदलाभेतुलवद्यूनस्वामीलग्नान्मदनंसप्तमं
भवनंपश्यतियुतोवासप्तमभवनेतदावध्वाःशुभं यथा गुरुः कर्केस्वनवांशंनपश्यति किंतुसप्तमभवनंतुलांपश्यति अथवातुलायामेवास्तितदावध्वाःशु
भं अयमस्तशुद्धेर्द्वितीयःप्रकारः इतरस्येति यदा लग्नांशेशोलवंतनुंवानुपश्यति तत्रयुतोवानस्यात् तदावरस्याशुभं एवंलवद्यूनस्वामीनवांशंसप्तमंवानप
श्यति तत्रयुतोवानस्यात् तदाकन्यायाअशुभं कश्यपः स्वस्वेशेनोदयास्तांशौवीक्षितौवाथसंयुतौ लग्नंवास्तगृहंतत्तदंशेशेनेक्षितेयुजमिति ७६ लवेशाद्
ति नवांशस्वामीनवांशंप्रपश्येत् लग्नस्वामीलग्नंप्रपश्येत्तदावरस्यशुभं एवंलवद्यूनयोनवांशात्सप्तमनवांशस्वामी अंशद्यूनं अंशासप्तमराशिंपश्येत्

**लवद्यूनस्वामील्लवमदनभंलग्नमदनंप्रपश्येद्वावध्वाःशुभमितरथात्वेयमशुभं ७६ लवेशोलवंलग्नपोलग्नगेहंप्र**
**पश्येन्मिथोवाशुभंस्याद्वरस्य लवद्यूनयोंशद्युनंलग्नयोस्तंमिथोवीक्षतेस्याच्छुभंकन्यकायाः ७७ लवपतिशुभमित्रंवीक्ष**
**तेंशंतनुंवापरिणयनकरस्यस्याच्छुभंशास्त्रदृष्टम् ॥** ७७ लग्नपोलग्नस्वामी अस्तंलग्नात्सप्तमभवनंपश्येत् तदाकन्यायाःशुभंस्यात्
वामिथः अंशसप्तमाधीशोलग्नंसप्तममीक्षते लग्नात्सप्तमाधीशश्चांशंसप्तममीक्षते तदापिकन्यायाःशुभंस्यात् अत्राप्यन्यथात्वेदंपत्योरशुभमिति
र्थः नारदः लग्ननवांशकौस्वस्वपतिनावीक्षितौयुतौनवेद्वान्योन्यपतिनाशुभमित्रेणवातथा वरस्यमृत्युः स्यात्ताभ्यांसप्तमसमोदयांशकौ एवंतौवीक्षित
युतौमृत्युर्वध्वाःकरग्रहेइति ७७ अथपूर्वोक्तप्रकारेणोदयास्तशुद्धेरभावेतृतीयःप्रकारउच्यतेमालिनीछंदसालवपतीति शुभंचतन्मित्रंचेतिकर्म
धारयः लवपतेर्लग्ननवांशेशस्यशुभग्रहः चंद्रबुधगुरुशुक्राणामन्यतमश्चेन्मित्रंस्यात्सचेदंशंनवांशंतनुंचवीक्षतेतदापरिणयनकरस्यवरस्य
शास्त्रदृष्टंपुत्रादिप्राप्तिरूपंशुभंफलंस्यात् एवंमदनलवपस्यास्तांशेशस्यमित्रंसौम्यतच्चांशनद्युमम् ॥ छ ॥ ॰ ॥ छ ॥

अंशाल्लग्ननवांशाद्यूनं सप्तमनवांशश्चेद्वीक्षते अथवा तनुमदनगृहं लग्नात्सप्तमभवनं चेद्वीक्षते तदा वध्वाः शर्म कल्याणं स्यात् यद्युभयत्रापि नवांशस्वा मिनो मित्रपापग्रहश्चेत्तं सदृष्टिरशुभैवेति फलितार्थः वराहः शुभदृष्टिस्विह स्यान्नयदोदयांशे लग्नेन नवांशस्तोशाउपैति शुभदृष्टं तदास्तत्सौम्यनिरीक्षितो यः शु भायसस्या स्ववदंतिसंत इति केचिद्विवाहे वज्रयोगं निषिद्धमाहु तल्लक्षणं तिथिवारं च नक्षत्रं नवभिश्च समन्वितः सप्तभिस्तु हरेद्भागं शेषांके फलमादिशेत् त्रिशेषे तु जलं विद्यात्पंचशेषे च भंजनः सप्तशेषे वज्रपातो ज्ञेयं वज्रस्य लक्षणमिति ७८ अथार्कसंक्रमणदोषं मंजुभाषिण्याह विषुवायनेति विषुवं तुला मेषसंक्रांती चनसृष्ठुसंक्रांतिषु परपूर्वमध्यमानगतागामिवर्त्तमानान् दिवसान् बुधः शुभक्रियाविधौ विवाहादौ त्यजेत् इतरसंक्रांतिषु संक्रमणका लात् परतोग्रे पूर्वभागपि षोडशघटिका मिलित्वा द्वात्रिंशत् घटिकास्त्यजेत् गुरुः अयने विषुवे पूर्वपरं मध्ये दिनं त्यजेत् अन्यसंक्रमणपूर्वाः परः षोड

मदनलवपमित्रं सौम्यमंशेशु जं वा तनुमदनगृहं चेद्वीक्षते शर्म वध्वाः ७८ विषुवायनेषु परपूर्वमध्यमान् दिवसांस्त्यजेदितर संक्रमेषु हि घटिकास्तु षोडश शुभक्रियाविधौ परतोपि पूर्वमपि संत्यजेद्बुधः ७९ देवद्व्यकतवोष्टा ष्टौ नाड्योऽङ्काः खनृपाः क्र मात् वर्ज्याः संक्रमणेऽर्कादेः प्रायोर्कस्याति निंदिताः ८० घस्रे तुलालौ वधिरौ मृगाश्वौ रात्रौ जसिंहा जवृषा दिवांधाः ॥ छ ॥

षनाडिका इति ७९ अथ प्रसंगात् सकलग्रहाणां संक्रांतिघटिरनुष्टुभाह देवेति यथाक्रमेण सूर्यादेः संक्रमणे एता घटिका वर्ज्याः यथा रवेः प्राक्पश्चा त् त्रयस्त्रिंशत् घटिकास्त्याज्याः चंद्रस्य द्वे भौमस्य नव बुधस्य षट् गुरोरष्टाष्टौ अष्टाशीतिः शुक्रस्यांका नव शनेः खनृपाः षष्ट्यधिकं शत इति ८० अथ पं गवंधवधिरास्यान्लग्नदोषानुपजातिकयाह घस्र इति घस्रे दिवसे तुलावृश्चिकौ वधिरसंज्ञकौ रात्रौ मकरधनुः संज्ञौ शेषं स्पष्टं वसिष्ठः तुलावृश्चिकश्चै वादिवसे वधिरौ तथा धनुश्च मकरश्चैव वधिरौ निशि कीर्तितौ मेषो वृषो मृगेंद्रश्च दिवसांधाः प्रकीर्तिताः नृयुक् कर्कटकन्याश्च रात्रावंधाः प्रकीर्तिताः ॥
कुंभमीनौ च पंगू द्वौ दिवासत्रौ यथाक्रमं इति ॥ छ ॥ ९ ॥

अनेनतस्मिन्‌कालेंऽधादिलग्नानिवर्ज्यानीत्यर्थः ॥१ अथकेचिन्मतमाह बधिराधन्वीति स्पष्टार्थे ॥२ अथैषांप्रयोजनंसापवादंवसंतर्षिण्याह दा॥
रिद्यमिति पंग्वंगेपंगुलग्ने अन्यत्स्पष्टं ॥३ अथविहितनवांशाश्चित्रदंडकेनसाह कार्मुकेति युग्मंमिथुनंएषानवांशाः झषगेवामीननवांशेविकल्पेन वा॥
शब्दएकीयमतसूचनार्थः एषंशेषुयर्हिउपयामोविवाहोभवेत्तर्हिकन्यासतीपतिव्रताभवेत ॥४ अथविहितनवांशेकविन्निषेधश्रीछंदसाह अंत्यनवांशे
ति विहितनवांशेष्वपियथामेषलग्नेधनुर्नवमांशोतिमाइत्येवंविधेविषयेकाचनकन्यानपरिणेयानविवाह्या परंतुवर्गोत्तममंतिमनवांशंहित्वातत्र॥

कन्यातुयुक्कर्कटकानिशांधादिनेघटोंत्यनिशिपंगुसंज्ञः ॥१ बधिराधन्वितुलालयोपराह्णे मिथुनंकर्कटकोंगनानिशांधाः॥
दिवसांधाहरिगोक्रियास्तुकुब्जामृगकुंभांतिमभानिसंध्ययोर्हि ॥२ दारिद्र्यंबधिरतनौदिवांधलग्नेवैधव्यंशिशुमरणंनि
शांधलग्ने पंग्वंगेनिखिलधनानिनाशमीयुःसर्वत्राधिपगुरुदृष्टिभिर्नदोषः ॥३ कार्मुकतौलिककन्यायुग्मलवेझष॥
गेवा यर्हिभवेदुपयामस्तर्हिसतीखलुकन्या ॥४ अंत्यनवांशेनचपरिणेयाकाचनवर्गोत्तममिह हित्वा नोचरलग्नेनच॥
रलवयोगेतौलिमृगस्थशशिभृतिकुर्यात्‌ ॥५ व्ययेशनिःखेवनिजस्तृतीयेभृगुस्तनौचंद्रखलानशस्ताः लग्नेट्कविभ॥
ग्लौश्वरिपौमृतौग्लौलग्नेट्शुभाराश्चमदेचसर्वे ॥६ ॥ ॥६ ॥ ॥६ ॥ ॥६ ॥कालभैरव॥

विवाहउचितएव यथा मिथुनलग्नेमिथुननवांशे अंत्योंशकाअपिश्रेष्ठायदिवर्गोत्तमाह्वयाइतिकश्यपोक्तेःनोचरलग्नइत्ति तौलिमृगस्थतुलामकर
स्थचंद्रेचरलग्नेविहितचरलवयोगंनाकुर्यात यथामेषलग्नेतुलांशइति ॥५ अथलग्नभंगमुपजात्याह व्ययेशनिरिति द्वादशेशनिर्नोशस्तःखेद
शमेऽवनिजोभौमोनशस्तःलग्नेचंद्रखलाःचंद्रःपापग्रहाश्चनशस्ताःलग्नेट्लग्नस्वामीकविःशुक्रोग्लौश्चंद्रश्चरिपौषष्ठेनशस्ताःग्लौश्चंद्रःलग्नेट्
लग्नस्वामीशुभाबुधगुरुशुक्राआरोभौमश्च एतेमृतावष्टमेनशस्ताःमदेसप्तमेसर्वेग्रहामशस्ताः ॥६ ॥ ॥६ ॥ ॥६ ॥ ॥ ॥

मु०टी० | वि०त्र० | ८०

अथान्यान्परिहारान्शालिन्याह केंद्रे कोणइति केंद्रे सप्तमरहिते १।४।१० कोणेनवपंचमेवातत्रगुरौसतिसर्वेदोषानाशमायांति कश्यपः काव्येगुरौवासौ
म्येवायदाकेंद्रत्रिकोणगे नाशयत्यखिलादोषाः पापानीवहरिस्मृतेः अथवा आयेएकादशेरवौसतिसर्वेदोषानाशमायांति वालग्नेचंद्रेवावर्गोत्तमेराशि
नवांशयुक्तेसति यथा मिथुनेमिथुनोनवांशस्तदापिदोषनाशः द्वितीयवाशब्दस्यानुक्तसमुच्चयार्थत्वात् चंद्रोलग्नादुपचयेसर्वदोषविनाशकः उक्तंच।
यत्रैकादशगः सूर्योदोषानाशंययुस्तदा स्मरणादेवरुद्रस्यपापंजन्मशतोद्भवं वर्गोत्तमगतेलग्नेसर्वेदोषालयंययुः चंद्रेवाप्यथवायेपिग्रीष्मेकुसरिता
यथा चंद्रेति एकादशेचंद्रेसतिदुर्मुहूर्त्तांशदोषाः दुर्मुहूर्त्तार वावर्यमेत्यादयः अंशदोषाः पापग्रहनवांशाख्याः तेसर्वेतद्वत् नाशमायांतिकश्यपः मुहू
र्त्तलग्नेषद्वर्गकुनवांशग्रहोद्भवाः येदोषास्तान्निहंत्यवयत्रैकादशगः शशी ज्योतिर्निबंधे नक्षत्रदोषकनवांशदोषंगंडांतदोषंचमुहूर्त्तदोषं विरुद्धपंचां

केंद्रेकोणेजीवआयेरवौवालग्नेचंद्रेवापिवर्गोत्तमेवासर्वेदोषानाशमायांतिचंद्रेलाभेतद्वद्दुर्मुहूर्त्तांशदोषाः ९० त्रिकोणकें
द्रेवामदनरहितेदोषशतंकंहरेत्सौम्यः शुक्रोद्विगुणमपिलक्षंस्फरगुरुः भवेदायेकेंद्रेंगपउतलवेशोयदितदा समूहंदोषा
णांदहनइवतूलंशमयति ९१ द्वौद्वौज्ञभृग्वोः पंचेंद्वौरवौसाधत्रयोगुरौ रामामंदागुकेत्वारेसाधैकैकंविशोपकाः ९२ ॥ ६

गविरुद्धदोषंनिशाकरोलाभगतोनिहंति १० अथसामान्यतोदोषसमूहपरिहारंशिखरिण्याह त्रिकोणेतित्रिकोणेसप्तमरहितेकेंद्रेयदिसौम्योबुधः
स्तिष्ठतद्दोषशतकंहरेत् उक्तस्थानेशुक्रोपिद्विगुणंद्विशतीहरेत् उक्तस्थानस्थितोगुरुरपिलक्षंदोषान्हरेत् भवेदिति अंगपोलग्नस्वामीउतवार्थेलवेशोलग्न
गतनवांशनाथोवा आयेकेंद्रेयदिभवेत्तदासर्वेदोषान् हरेत्दोषाणांसमूहंनाशयति यथा दहनोग्निस्तुलंकार्पासमिव लग्नेइलग्नांशनाथोवा अत्र यगःकें
द्रेगोपिवाराशिंनिहंतिदोषाणामिंधनानीवपावकइति ९१ अथलग्नविंशोपकोअनुष्टुभाह द्वाविति ज्ञभृग्वोरेकोप्रदयोःसतोर्द्वौद्वौविशोपकौ ए
वंविधेचंद्रेपंच सूर्येसार्धास्त्रयः ३।३० गुरौरामास्त्रयःमंदःशनिःअगूराहुःकेतुःआरोभौमःएषुप्रत्येकंसार्धमेकैकम् १।३० विंशोपकाज्ञेयाः ९२ ॥ ६॥

राम: | ८०।

ग्रहवशेन श्वशुरादिविभागं संयोजनमुपजात्याह श्वश्रूरिति सितः कन्यायाः श्वश्रूः सूर्यः श्वशुरः तनुर्लग्नं ननु शरीरं स्यात् जामित्रपः सप्तमाधीशो दयितो

तो भर्ता मनः चंद्र एतेषां शुभकारीणां बलं विचार्य तांत्रिकः सिद्धांतवेत्ता विवाहितां विवाहादनंतरं श्वशुरसदीनांस्करवं स्यादिति प्रवदेत् केचिद्विशेषतरमप्युक्तं

सूर्यसुतिः स्त्रीचविधोस्तथा राहित्तस्कतो ज्ञाच्च सुखं गुरोश्च धर्मः सितादर्के सुतास्त्र वेश्मजन्नूपात्सुमुद्वाह विधौ सुयुक्त्येति ९३ अथ संकीर्णजातीनां विशेष

मतमप्युक्तं दसाह कुत्सेपक्ष इति कुत्सेपक्षे शनिभौमार्कवारे विवाहोक्तनक्षत्रभिन्ननक्षत्रेषु वकारादुष्टयोगेष्वपि संकीर्णानामनुलोमप्रतिलोमजा

नामपि यदि करपीडा विवाहः स्यात् तर्हि सा करपीडा सुतायुर्धनलाभप्रीतिविज्ञास्यै भवति एषा स्थितिर्वासःवाग्रहणात् एतत् भावे प्रागुक्तदिनेपि विवा

श्वश्रूः सितोऽर्कः श्वशुरस्तनुस्तनुर्जामित्रपः स्याद्दयितो मनः शशी एतद्बलं संप्रतिभाव्य तांत्रिकस्तेषां सुखं संप्रवदेद्विवाहतः

९३ कुत्सेपक्षे सौरिकुजार्केपि च वारे वर्ज्येनक्षत्रे यदि वा स्यात्करपीडा संकीर्णानां तर्हि सुतायुर्धनलाभप्रीतिप्राप्त्यै साभ

वतीह स्थितिरेषा ९४ गांधर्वादिविवाहेऽर्काद्वेद ४ नेत्र २ गुणे ३ द्वव: १॥ ६॥ २॥ हः कार्य इति ९५ अथ गांधर्वादिविवाहे वि

शेषमनुष्टुभाह गांधर्वादीति प्राजापत्यब्राह्मदैवार्षसंज्ञाः विवाहा उक्तकाले एव कार्याः गांधर्वासुरराक्षसपैशाचकाख्याः सर्वकालिकार्याः श्रीपतिः

प्राजापत्यब्राह्मदैवार्षसंज्ञाः कालेषूक्तेष्वेव कार्यो विवाहः गांधर्वाख्यश्चासुरो राक्षसश्च पैशाचो वा सर्वकालं विधेय इति तत्र केचिदर्कात्सूर्यनक्ष

त्रात् वेदनेत्राग्निभिः क्रमेण सत्स्यात् अयमर्थः सूर्याक्रांतनक्षत्रमारभ्य चत्वार्यृक्षभानि ततो द्व्यृक्षभे ततस्त्रीण्यृक्षभानीति क्रमेण त्रिपर्यायत्रयाणां पा

दावां समाहारस्त्रिपदी तस्यां ब्रह्मविष्णुरुद्रपदाभिधचक्रत्रये इत्यर्थः एकस्मिन्नपि पदे यदृक्षं भं तदृक्षभमेव पदत्रये य शुभं तच्छुभं [illegible] अक्ष

भर्क्षभानि क्रमेण पठितानि स्वपदत्रयाणां मुख्यार्थकथनात् पृथक्कथनानुपयोगः तथा च पदत्रयमुक्तं भूपालवल्लभे एवं पदत्रये चक्रे दंनक्षत्रं दाप

गांधर्वासुरपैशाचराक्षसेषु विचिंतयेदिति ९५ अथ विवाहात्प्राक् कर्त्तव्यानामावश्यककृत्यानां दिनशुद्धिं पृथ्वीछंदसाह विधोर्बलेति अत्र चंद्रब
लमावश्यकत्वेन विचार्यं वारको मांगलकलशः गृहभूषणं चित्रलेखनादि अंगणविभूषणं समार्जनगोमयाद्यालेपः अथच वेदिका वस्त्ररं वधूवरोप
वेशनार्थं स्थलविशेषः मंडपो गृहाच्छादनं काष्ठादिना वितादिना वा बहुवचनात् कटाहाधारोपणहरिद्राचंदनकं जिकाधारणादि सकलशुभारंभा
कउद्वाहतः पूर्वं विवाहोक्तैरुडुभिर्नक्षत्रैः पंचांगशुद्धिसहिते दिने रचयेत् उपलक्षणत्वात्तत्तत्संबंधरूपनयनादावपि पूर्वशुभकर्मप्रारंभान्वि
रचयेत् तथा इदं कार्यजातं त्रिनवषण्मिते दिने पूर्वं न आचरेत् चित्राविशाखाशततारकाश्विनीज्येष्ठाभरण्यो शिवभाच्चतुष्टयम् हित्वा प्रशस्त

कृ२ पुगां ४ गा ६ गि ३ भू १ रा मा ३ त्रिपद्याम शुभा शुभाः ९५ विधोर्बलमवेक्ष्य वारलनवारकं गृहांगणविभूषणान्यथ च वेदिकामं
डपान् विवाहविहितोडुभिर्विरचयेत्तथोद्वाहतो न पूर्वमिह माचरेत्त्रिनवषट्मिते वासरे ९६ हस्तोच्छ्राया वेदहस्तैः समं
तात्तुल्या वेदी सद्मनो वामभागं युग्मे घस्रे षष्ठहीने च पंचसप्ताहे स्यान्मंडपोद्वासनं सत् ९७ मेषादिराशिजवधूवरयोः
र्वेदी श्वतैलादि लापनविधौ कथितात्र संख्या शैलादिशः शरदिगस्तनगाद्रिबाण बाणास्त्रबाणगिरयो ७।१०।५।१०।५।
७।७।५।५।५।५।७ विबुधैस्तु केश्चित ९८॥ ॥फलतैलवेदिकाप्रदानकं कंडनमंडका स्फिकमिति दैवज्ञमनोहरोक्तेः तत्रैव मूलेंदुरुद्र
श्रवणार्कपौष्णविश्वेशचित्रानलरेवतीषु संस्थापनं कंजिककुंडिका यावारेरविभूमिसुतस्य शस्तमिति ९६ अथ वेदीलक्षणं मंडपोद्वासने दिना
नियमं च वृत्तशालिन्याह हस्तोच्छ्रायेति स्पष्टार्थः नारदः हस्तोच्छ्रिता चतुर्हस्तैश्चतुरस्रा समंततः स्तंभैश्चतुर्भिः सुश्लक्ष्णा वामभागे स्वसद्मनः मंडपोद्वास
नं कार्यं समे तु हि तु दिवसे बुधैः षष्ठं तु विषमे नेष्टं उत्कासप्तमपंचमामिति ९७ केश्चित्तैलादिलापनसंख्यानियमउक्तस्तमाह मेषादिराशिजेति स्पष्टं रे।

अथ ग्रामनक्षत्रसंमतं मंडपादौ स्तंभनिवेशनमिंद्रवज्रयाह सूर्येति कन्यातुलासिंहगतेऽर्के शैवे ईशानकोणे विवाहादौ स्तंभः स्थाप्यः वृश्चिकधनुर्म करस्थिते वायुकोणे मीनमेषकुंभस्थिते निर्ऋतिकोणे वृषमिथुनकर्कस्थितेऽग्निकोणे स्तंभः स्थाप्य इत्यर्थः ९९ अथ गोधूली प्रशंसां मंदाक्रांतयाह नास्मि मिति स्पष्टार्थं गोधूल्यधिकारिण आह नारदः प्राच्यानां च कलिंगानां मुख्यं गोधूलिकं स्मृतं गांधर्वादिविवाहेषु वैश्योद्वाहे च योजयेत् भूपालवल्लभे विप्रेषु घटिकालभेद् तव्यं गोरजं बुधैः संकीर्णे गोरजः शस्तं परेषु द्वितयं शुभं घटिकालग्नाभावे कार्ये विप्रैस्तु गोरजोलग्नमिति महादोषानपरित्यज्य प्रोक्ताधिष्ण्यादिकेषु च। कारयेद्गोरजो यावत्तावल्लग्नं शुभावहमिति दैवज्ञमनोहरे कुलिकं क्रांतिसाम्यं च मूर्तौ षष्ठाष्टमः शशी पंचमो धूलिके त्याज्या अन्यदोषाः शुभावहा इति तत्र गो

सूर्येंगनासिंहघटेषु शैवे स्तंभोऽलिकोदंडमृगेषु वायौ मीनाजकुंभे निर्ऋतौ विवाहे स्थाप्योऽग्निकोणे वृषयुग्मकर्के ९९ नास्मि
मृक्षं न च तिथिकरणं नैव लग्नस्य चिंता नो वा वारो न च लवविधिर्नो मुहूर्तस्य चर्चा नैवा योगो न च मृतिभवनं नैव जामित्रदोषो
गोधूलिः सा मुनिभिरुदिता सर्वकार्येषु शस्ता १०० पिंडीभूते दिनकृति हेमंतर्तौ स्यादर्धास्ते तपसमये गोधूलिः संपूर्णास्ते जल
धरमालाकाले त्रेधा योज्या सकलशुभे कार्यादौ १०१ ॥ गोधूलिकालः केशवार्केणोक्तः अत्रोभयत्र घटिकादलमिष्टमाहुरिति केचित्तु।

गावः दिनांते निशि पश्चिमायां पश्येत्तु तीयं रविबिंबभागं तस्मात्सदंनाडिकयुग्ममेके गोधूलिकालं मुनयो वदंतीति यथायोग्यं देशव्यवस्था १०० अथ गोधू लीभेदं जलधरमालाछंदसाह पिंडीभूत इति हेमंतर्तौ शीतकाले मार्गादिमासचतुष्टये दिनकृति सूर्ये पिंडीभूते गोलकसदृशे संध्यायां नीहारावृत्तत्वेन निःप्रभे इत्यर्थः तस्मिन्समये गोधूली ज्ञेया तथा तपसमये उष्णकाले चैत्रादिमासचतुष्टये अर्धास्ते अर्द्धबिंबस्य दृश्यत्वे गोधूलिः जलधरमेघास्तेषां माला समूहस्तस्या धारके वर्षाकाले श्रावणादिमासचतुष्टये सूर्ये संपूर्णास्तेऽदर्शनं यस्य तादृशे सति गोधूलिः जलधरमालाछंदो जाभापिस्स वितनकेवलमिपं विवाहे किं तु सकलशुभे कार्यादौ ज्ञेया १०१ ॥ १०१ ॥ ७ ॥ ४ ॥ ४ ॥ ७ ॥ सभा ॥

अथगोधूलीसमये वश्यवर्ज्यानिवैश्वदेवीछंदसाह अस्तंयातेइति गोधूलिरित्यनुवर्त्तते बृहस्पतिवारेसूर्ये अस्तंयातेगोधूलिःशुभःस्यात नतुपूर्वं अर्धयामसद्भावात् तथासौरेशनौसार्केसत्येवगोधूलीशुभा नतस्तानंतरंकुलिकसद्भावात् क्रांतिसाम्यमपित्याज्यम् तथालग्नात्सायंकालीनलग्नात् अष्टमेरिपुभवनेषष्ठेवालग्नेएववाचंद्रेसतिकन्यानाशःस्यात् लग्नेइति लग्नस्थेमदनस्थेमृत्युस्थेवाभौमेसतिवोढुर्वरस्यनाशःस्यात् शेषंस्पष्टं १०२
अथसूर्यस्पष्टगतिमिंद्रवज्रयाह मेषादिगे इति मेषादिद्वादशराशिषुस्थूलाकलात्मिकास्पष्टगतिरित्यर्थः १०३ सूर्यस्यतात्कालिकीकरणमनुष्टुभाह संक्रांतिपातेति पंचांगेयद्दिनेयावतीषुघटीषुचसंक्रांतिस्ततआरभ्यस्वाभीष्टदिनपर्यंतंयावन्तिदिनानिघटीपलानिभवंतितैर्मेषादिष्टराशिस्थार्कस्पष्ट

अस्तंयातेगुरुदिवसेसौरेसार्केलग्नान्मृत्यौरिपुभवनेलग्नेचंद्रे। कन्यानाशस्तनुमदनमृत्युस्थेभौमेवोढुर्लाभेधनसहजे।
चंद्रेसौख्यं १०२ मेषादिगेर्केष्टशरा ५८ नगाक्षाः ५७ सप्तेषवः ५७ सप्तशरा ५७ गजाक्षाः ५८ गोक्षाः ५९ खतर्काः ६० कुरसाः ६१ कुतर्काः ६१ चंद्रषट् ६१ ग्रहषट् ६१ नवपंच ५९ भुक्तिः १०३ संक्रांतियातघस्रादेर्गतिनिघ्नाः खषट् ६० हृता लब्धेनांशादिनायोज्यंयातर्क्षस्पष्टभास्करः १०४ तनोरिष्टांशकास्सूर्वनवांशादशसंगुणाः रामाप्तालब्धमंशाद्यंतनोर्वर्गारिसाधने १०५ अर्कात्लग्नांतानयनाद्भोग्यमुक्तैर्भागैर्निघ्नात्स्वोदयात्त्वाग्निभक्तात्॥ गतिर्गुणनीयाषष्ट्याभाज्यायल्लब्धंतेंशाःअवशिष्टंकलादि अंशावयवास्ते आदिशब्दवाच्याः तैर्यातर्क्षयातराशिःसूर्यभुक्तमेषादिराशिर्युक्तःसन्तात्कालिकःस्पष्टभास्करःस्यात् १०४ अथलग्नानयनमाह तनोरिति लग्नस्यत्रिंशत्भागास्तेषां नवांशोविचारितःसपादास्त्रयाआगच्छेत्ततःसूर्वनवांशायावंतःस्युस्तेदशगुणाराममिति त्रिभिराप्तायल्लब्धमंशाद्यं अंशकलाविकलात्मकं सत्तनोरिष्टकालिकं भुक्तंस्यादिति नत्वाप्राक्गुरुकुजार्कशुक्रसौम्येत्यादिप्रकारेणषड्वर्गसाधनंस्यात् १०५ अथेष्टंसाधिताभ्यांरविलग्नाभ्यांघटिकानयनंशालिन्याह॥
अर्कादिति अयनांशसहितात्सूर्यात्राशिभोग्यांशैःसायनसूर्याक्रांतराशेः।

स्वदेशीयउदयाः मेषादिराशीनांबलात्मकंप्रमाणंपगुण्यंस्वाग्निभिस्त्रिंशताभक्तंलब्धानिभोग्यानिचपलानिस्युः एवंलग्नात्सायनांशात् भुक्तांशैः स्वोदयोगु
ण्याः स्वाग्निभक्तोलब्धानिभुक्तानिपलानि एवंजातानांभोग्यभुक्तपलानामैक्यंकार्यंतत्सायनोशालग्नार्कयोरंतरालोदयपलैर्युक्तंकार्यंषष्ट्याभक्तं
सूर्योदयादिष्टघटिकाभवेयुः १०६ विशेषंशालिन्याह चेल्लग्नार्काविति सायनांशौलग्नार्कौएकराशौभवतस्तयोर्विश्लेषांशास्तैर्गुणितः स्वदेशीय
उदयः ततः स्वाग्निभक्तोलब्धमिष्टकालः सूर्योदयात्स्यात् तत्रयदार्कात्सायनादेकराशिस्थितंलग्नमूनंस्यात्तदायदिष्टकालआगतःससूर्योदयात्प्रा
क्तनात्रिशेषाभवेत् अयमर्थः आगतइष्टकालः षष्ट्याप्रपात्यप्राग्दिनीयसूर्योदयानंतरमेतावानिष्टकालः अथवारात्रिमानात् प्रपात्यप्राग्दिनीयसूर्यास्तान
तरमेतावानिष्टकालःअथरात्रौविशेषमानीतेइष्टकालेअंशप्रवृत्तेःपंचपलानियोज्यानीतिसंप्रदायः तत्समयेपरस्परदर्शनंकार्यमित्याह कश्यपः अ

भोग्यंभुक्तंचांतरालोदयाढ्यंषष्ट्याभक्तंस्वेष्टनाड्योभवेयुः १०६ चेल्लग्नार्कौसायनावेकराशौतद्विश्लेषघ्नोदयःस्वाग्निभ।
क्तः स्वेष्टःकालोलग्नमूनंयदार्कात्रात्रौशेषःकाल्पषड्भुंनिशायां १०७ उत्पातान्सहपातदग्धतिथिभिर्दुष्टांश्चयोगांस्तथाचं
द्रेज्योशनसामथास्तमयनंतिष्यःक्षयर्द्धीतथा॥ ६ न्योन्यवीक्षणंसम्यक्सुलग्नेकारयेत्सदेति सुलग्नसाधनंघटिकायंत्रेणसाध्यंतत्रघटी
स्थापनेनादरः ताम्रपात्रेजलेपूर्णेगंधैःपुष्पैरलंकृते तंदुलस्थैस्ततःपुनेशफचिभूमावहर्प्यते मंडलार्धोदयंवीक्ष्यजलपात्रेविनिक्षिपेत् तत्रमंत्रः यंत्राणांस।
र्व्ययंत्रत्वमितिधात्रापुराकृतं सौभाग्यमायुरारोग्यसुपुत्रधनहेतवे जलंयंत्रकमेतस्मादिष्टसिद्धिप्रदोभवेत् अथवासाधयेच्छायाद्वादशांगुलशंकु
नेति शंकुघटीज्ञानंरामविनोदेमयोक्तंततएवज्ञेयम् १०७ अथविवाहादौशुभकार्येषुवर्ज्यान्विस्मरणार्थंशार्दूलविक्रीडितत्रयेणाह उत्पातानिति
सेन्दुक्रूरेति क्रूराक्रांतमितिच उत्पातादीन् उद्वाहेविवाहेयज्ञोपवीतादौशुभकर्मसुचत्यजेदितितृतीयश्लोकेनान्वयः उत्पातान् दिव्यभौमांतरिक्षात्
लक्षणान्तत्संबंधिसप्तवर्ज्यान्दिवसान् पातोमहापातः क्रांतिसाम्यमितियावत् दग्धतिथयश्चापांत्यगेगोघटगेइत्यादिनोक्ताः एतैः सहउत्पातंत्यजे

तथाडुष्टान्व्यतीपातादियोगान् चंद्रगुरुशुक्राणामस्तमयनमस्तं तिथ्यः क्षयवृद्धीतिथिक्षयं तिथिरद्धिंच गंडांतं तिथिनक्षत्रलग्नानां त्रिविधम् विष्टिर्भद्रा संक्रमदिनं संक्रमकालोदुभयतो वर्ज्यघटिकाः अयने विषुवे च पूर्वापरदिनसहितं संक्रांतिदिनं ज्ञेयम् तन्वंशपापास्ततनुर्लग्नम् अंशः लग्नगतो विहितनवांशः तौपापास्तः तौतन्वंशपोतयोरस्तं लग्नेशांसं लग्ननवांशस्वाम्यस्तं च तथातन्वंशेश विधून्लग्नेशनवांशेशचंद्रान् अष्टमषष्ठस्थानगान् तथापापग्रहवर्गान् १०८ सेंदुक्रूरखगोदयांशं इंदुसहितं लग्नं लग्नांशं च क्रूरग्रहसहितं लग्नं लग्नांशं वेत्यर्थः उदयास्तशुद्धि उदयाशुद्धिमस्ताशुद्धिं च इदं तस्याज्ञेयमशुभमित्याद्युक्तं चंडायुधं हर्षणवैधृतिसाध्येत्यादिनोक्तं खार्जूरं व्याघातगंडइत्यादिनोक्तं दशयोगः सूर्यर्क्षं चंद्रसंयुतेभेशेषदृष्ट्यादिनोक्तम् योगो ग्रहयुतिः तत्सहितं जामित्रं लत्ताव्यधं जामित्रं लग्नजामित्रं चंद्रजामित्रं च लग्नाच्चंद्रान्मदनभवने गेइत्यादिनोक्तम् लत्ताज्ञराहुपूर्णेन्दु

**गंडांतं च सविष्टिसंक्रमदिनं तन्वंशपास्तं तथा तन्वंशेशविधून्तथाष्टरिपुगान्पापस्य वर्गांस्तथा १०८ सेंदुक्रूरखगोदयांशमुदयास्ताशुद्धिं चंडायुधान्खार्जूरं दशयोगयोगसहितं जामित्रलत्ताव्यधं बाणोपग्रहपापकर्त्तरितपातिथ्यर्क्षवारोत्थितं दुष्टयोगमथार्धयामकुलिकाद्यान्वारदोषानपि १०९ क्रूराक्रांतविमुक्तभंग्रहणभं यत्क्रूरगंतव्यभं त्रेधोत्पातहतं च केतुहतभं संध्योदितं भं तथा॥**

७) सिताद्यत्यादिनोक्ता व्यधं पंचशलाकासप्तशलाकोक्तं च बाणाः पंचकं उपग्रहः प्रसिद्धः शराष्टदिक् शक्रनगेत्यादिपापकर्त्तरीसमाहारद्वंद्वैकवचनं तिथ्यृक्षवारोत्थितं दुष्टयोगं तिथिनक्षत्रवारैः रुत्थोः उत्थितमुत्पन्नं दुष्टयोगम् यथा तिथिनक्षत्रोत्थं सार्पद्वादश्यां वैश्वमादिमइत्यादि तिथिवारोद्भवं सूर्येशपंचेत्यादि नक्षत्रवारोद्भवं याम्यत्वाष्ट्रमित्यादि तिथिनक्षत्रवारोद्भवं हस्तार्के पंचमीतिथावित्यादि दुष्टयोगं अर्धयामकुलिकाद्यान्वारदोषानपि आदिशब्देन दुर्मुहूर्त्तादिकं च १०९ क्रूराक्रांतविमुक्तभं क्रूरग्रहेण युक्तभं क्रूरविमुक्तभं च ग्रहणभं यस्मिन्नक्षत्रे चंद्रसूर्योपरागे जातस्तद्भं क्रूरस्य गंतव्यभं त्रेधोत्पाताः त्रिविधोत्पाता दिव्यभौमांतरिक्षाः तैर्हतं भम्॥ ॥ ॥ ॥ ॥ ॥

तन्मासषट्कं त्याज्यम् एवंग्रहणनक्षत्रमपि केतुहतभं केतुना धूमकेतुना स्पर्शनैश्चपन्नक्षत्रंहतं अनेननक्षत्रांतरेपिदोषः संध्योदितंभं सूर्यास्तकालेयन्नक्षत्रस्य स्थिति
जेउदयंतत्सूर्यनक्षत्राच्चतुर्दशं नक्षत्रमित्यर्थः तद्वच्च ग्रहभिन्नयुद्गतभं ग्रहेणभेदितग्रहयुद्गतंच षण्मासंनिषिद्धं तथा ग्रहकृतान् लग्नस्यदोषान् व्ययेशा
निः स्वेव निजइत्यादिकानांलग्नसंबंधिदोषान्संत्यजेत् मूलवाक्यानिपूर्वमेवलिखितानि ११० ॥ इतिमुहूर्त्तचिंतामणिप्रमिताक्षरायांविवाहप्रकर
णंसमाप्तम् ६ अथवधूप्रवेशप्रकरणम् अथवधूनूतनपरिणीतायावध्वाप्रथमतः क्रियमाणोभर्तृगृहेप्रवेशोवधूप्रवेशस्तंन्मुहूर्त्तमुपेंद्रवज्रयाह समा
द्वीति विवाहाद्विवाहदिवसादारभ्याष्टदिनांतरालेषोडशदिनांतरालेषोडशदिनमध्येसमाद्रिपंचांकदिने समदिनानि द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशच

तद्वच्चग्रहभिन्नयुद्गतभंसर्वाणिमान्संत्यजेदुद्वाहेशुभकर्मसुग्रहकृतान्लग्नस्यदोषानपि ११० इतिमुहूर्त्तचिंतामणौवि
वाहप्रकरणंषष्ठम् ६ समाद्रिपंचांकदिनेविवाहाद्वधूप्रवेशोष्टदिनांतराले शुभःपरस्ताद्विषमाब्दमासदिनेसवर्षा
सरतोयथेष्टम् १ ध्रुवक्षिप्रमृदुश्रोत्रवसूमूलमघानिले ॥ चतुर्दशषोडशानि विषमदिनमध्येसप्तमपंचमनवमदिनानिते

षुवधूप्रवेशः शुभः नारदः आरभ्योद्वाहदिवसात्षष्ठेवाप्यष्टमेदिनेवधूप्रवेशः संपत्त्यैदशमेथसमेदिने षष्ठादीनांसमत्वादेवग्रहणेसिद्धेपुनस्तदुक्ति
रितिमाशास्त्रार्थः वधूप्रवेशनंकार्यंपंचमे सप्तमेदिने नवमेचशुभेवारे सुलग्ने शशिनोबलेइतिज्योतिर्निबंधेषोडशदिवसानंतरंवधूप्रवेशस्त
दाविषमाब्दमासदिने विषमवर्षेविषममासेविषमदिनेचकार्यः अक्षवर्षादिति पंचवर्षादनंतरं विषमवर्षादिनियमोनास्ति किंतुदोषरहितकालेवधू
प्रवेशो विधेयः उक्तंच विवाहमारभ्यवधूप्रवेशोयुग्मेदिनेषोडशवासरांतः ऊर्ध्वंततोऽब्देयुजिपंचमांतंपुनःपुरस्तान्नियमोनवास्तीति १ अथनक्षत्राण्य
ह्निमनुष्टभाह ध्रुवेति ध्रुवादिनक्षत्रेषुवधूप्रवेशः सन्शुभफलः रिक्ताराके रिक्ता ४।९।१४ आरेभौमे अर्केरवौनद्दष्टः ॥ छ ॥ ९ ॥ छ ॥

अर्थोर्न्यतिथिषुरविभौमव्यतिरिक्तवारेषुशस्तइत्यर्थः अपरेबुधवारेपिनेष्टः ३ अथविशेषमहेंद्रवज्रयाह ज्येष्ठेपतिज्येष्ठमिति विवाहतोविवाहानंत
रंआद्दिमेज्येष्ठेभर्तृगृहेस्थितावधूःपतिज्येष्ठंहंति आद्दिमेऽधिकेपतिंभर्तारंहंति आद्दिमेशुचावाषाढे श्वश्रूंभर्तृजननींहंति आद्दिमेसहस्येपौषेश्वशुरंभ
र्तुःपितरंहंति आद्दिमेक्षयेक्षयमासेभर्तृगृहेतिष्ठंतीतनुंनिजंशरीरंहंति म्रियतइत्यर्थः तथा आद्दिमेमधौचैत्रेतातगृहेपितृगृहेतिष्ठतितातंपितरंहंतिइ
त्यर्थः यदिपित्राद्यभावः तर्हितन्मासितत्रगृहावस्थितोसत्यामपिनकोपिदोषइत्यर्थः नभयंतेषामभावइत्युक्तेः ज्योतिर्निबन्धेविवाहात्प्रथमेपौषेआषा
ढेचाधिमासके नसाभर्तृगृहेतिष्ठेच्चैत्रेतातगृहेपिच आषाढोज्येष्ठोपलक्षकः अधिमासोक्षयमासोपलक्षकः ३ ॥ इतिमुहूर्त्तचिंतामणावमिताक्षरायांस्व

वधूप्रवेशः सन्नेष्टोरिक्तारार्केबुधेपरैः २ ज्येष्ठेपतिज्येष्ठमथाधिकेपतिंहंत्यादिमेभर्तृगृहेवधूःशुचौ श्वश्रूंसहस्येश्वशु
रंक्षयेतनुंतातंमधौतातगृहेविवाहतः ३ ॥इतिमुहूर्त्तचिंतामणौवधूप्रवेशप्रकरणंसप्तमम् ७ चरेदथौजहायनेघटा
लिमेषगेरवौरवीज्यशुद्धियोगतःशुभग्रहस्यवासरे नृयुग्ममीनकन्यकातुलावृषाविलग्नके द्विरागमंलघुध्रुवेचरेस्त्र
पेमृदूडुभिः १॥ गुरुतटीकायांवधूप्रवेशप्रकरणंसप्तमंसमाप्तम् ७ अथद्विरागमनप्रकरणंव्याख्यायते॥ तत्रवधूप्रवेशानंतरंपरावृत्य
पितृगृहंप्राप्तायवध्वाः पुनर्भर्तृगृहेप्रवेशोद्विरागमनशब्दवाच्यस्तन्मुहूर्त्तंप्रियंवदामरञ्छंदसाह चरेदिति अथानंतरेषुलघुध्रुवादिनक्षत्रेषुओजहा
यनेविषमवर्षेप्रथमतृतीयादिवर्षेतथाघटालिमेषगेरवौकुंभेवृश्चिकेमेषेरवौसति तथावरस्यरवीज्यशुद्धियोगतःशुभग्रहस्यवारे मिथुनमीनकन्यातु
लावृषाणामन्यतमेलग्नेशुभयुतदृष्टेसति लघुध्रुवचराणिप्रसिद्धानि अस्त्रपोमूलम् मृदूडुनिप्रसिद्धानि एतेषुद्विरागमंचरेत्कुर्यात् अत्रसामान्यतःगु
रुशुक्रास्तादिविचारः पूर्वोक्तएवज्ञेयः १॥ १ ॥ १ ॥ १ ॥ ६ ॥ ९ ॥ २ ॥ ६ ॥ श्रीराम ॥

अथसन्मुखशुक्रदोषंप्रहर्षिण्याह दैत्येज्यइति दैत्येज्यः शुक्रः गंतव्यादिगभिमुखेगंतुर्दक्षिणभागेवास्थितःस्यात्तदा शिशुर्बालकः गर्भिणीगर्भवती नवोढा नूतनपरिणीता एतानगच्छेयुः यदिचतिशुक्रेगच्छेयुस्तदेत्याह बालइति चेद्बालोगच्छतितदाविपद्यतेम्रियते नवोढाचेद्व्रजतितदावंध्या अपत्यसंभावनारहितास्यात गर्भिणीचेद्व्रजतितदा अगर्भागर्भस्रवतीस्यात यदिशुक्रः पूर्वस्यामुदितः पूर्वांगतः सन्मुखः उत्तरांगतुर्दक्षिणःपश्चिमांगतुः दृष्टिः दक्षिणगंतुर्वामःस्यात तदापूर्वोत्तरेदिशोनगच्छेत यदिपश्चिमायामुदितःशुक्रः तदापश्चिमांगतुःसन्मुखः दक्षिणांगतुःदक्षिणः पूर्वांगतुः पृष्ठे उत्तरांगतुर्वामः तदा पश्चिमदक्षिणदिशोनगच्छेत केचिदीपोत्सवप्रतिपदिनस्यादिनियमविनैवनवधूप्रवेशंवाञ्छंति उक्तंच अस्तंगतेगुरौशुक्रेसिंहस्थेवाबृहस्पतौ दीपोत्स

दैत्येज्यो ह्यभिमुखदक्षिणेयदिस्याद्गच्छेयुर्नहिशिशुगर्भिणीनवोढा बालश्चेद्व्रजतिविपद्यतेनवोढाचेद्वंध्याभवतिचगर्भिणीत्वगर्भा २ नगरप्रवेशविषयाद्युपद्रवेकरपीडनेविबुधतीर्थयात्रयोः नृपपीडनेनववधूप्रवेशनेप्रतिभार्गवोभवतिदोषकृन्नहि ३ पित्र्यगृहेचेत्कुचपुष्पसंभवःस्त्रीणांनदोषःप्रतिशुक्रसंभवः ॥ ६ ॥ ७ ॥ ८ ॥

वदिनेचैवकन्याभर्तृगृहंविशेदिति २ अथप्रतिशुक्रापवादंमंजुभाषिण्याह नगरप्रवेशेतिनगरप्रवेशे विषयोदेशः आदिशब्देनग्रामः तोस्योपद्रवे अन्यराजकृतोपद्रवेदुर्भिक्षाद्युपद्रवेवास्तिगंतव्यदिशिप्रतिशुक्रदोषोनास्ति करपीडने विवाहे देवयात्रायांयासत्योविबुधादेवास्तेषांयात्रा यथानगरकोटयात्रातीर्थयात्राप्रयागादिकातयोः नृपपीडनेराज्ञःसकाशात पीडावांदंगादिकृतायांसत्यांनववधूर्नूतनपरिणीतानववधूःतस्याःप्रवेशेप्रतिभार्गवःसंमुखशुक्रदोषकृन्नहिभवति भार्गवःस्वभवनपुरप्रवेशेदेशानांविभ्रमेतथोद्वाहेनूतनवध्वागमनेप्रतिशुक्रविचारणंनास्ति एकग्रामेपुरेवापिदुर्भिक्षेराजविप्लवे विवाहेतीर्थयात्रायांप्रतिशुक्रंनदुष्यतीतिवादरायणोक्तेः ३ अथप्रौढास्त्रीणांद्विरागमनेतथागोत्रपरत्वेनवप्रतिशुक्रापवादंमत्तमयूरेणाह पित्र्येगृहइति पितुरिदंपित्र्यंतस्मिन्पित्र्येगृहेकुचौस्तनौपुष्पमृतुस्तत्संभवस्यात्तदास्त्रीणांप्रतिशुक्रसंभवोदोषोनास्तीत्यपित्र्येपत्युः

चंडेश्वरः पिनाकास्त्रेकचकुरूमयोः संभवोवायदिस्यासत्युक्रदिनेभवतिरवेः सन्मुखोवायशुक्रः शुक्रेलग्नेगुणवतितिथौ चंद्रतारा विशुद्धौ स्त्रीणांयात्रा भवतिसफलासेवितुंस्वामिसद्म अथभृगुः अंगिरावत्सवसिष्ठकश्यपात्रीणांभरद्वाजमुनेःकुलेकार्थः एतद्वंशासन्नानांप्रतिशुक्रसंभवोदोषोनास्ति बादरायणः कश्यपेषुवसिष्ठेषुभृग्वत्र्यंगिरसेषुच भारद्वाजेषुवत्सेषुप्रतिशुक्रंनदुष्यतीति अयंचापवादोयात्रामात्रपरः केचिदस्मिन्नपवादंत्वधर्मे मुखोप्यूचुःमहेश्वरः तीर्थानांगमनेतद्वैकनगरेग्राम्यंचसैन्यंतथेति ५ पूर्वैःसह ७ ॥ इतिदैवज्ञानंतसुतदैवज्ञरामविरचितायांस्वकृतमुहूर्त्त चिंतामणिटीकापांप्रमिताक्षरायांद्विरागमनप्रकरणंअष्टमंसमाप्तम् ८ अथाग्न्याधानप्रकरणंव्याख्यायते यत्तुकालनियमेनाधानादिवि

भृग्वंगिरोवत्सवसिष्ठकश्यपात्रीणांभरद्वाजमुनेःकुलेतथा ५ ॥ इतिमुहूर्त्तचिंतामणौद्विरागमनप्रकरणंअष्टमंसमाप्तम् ८ स्यादग्निहोत्रविधिरुत्तरगेदिनेशेमिश्रध्रुवांत्यशशिशक्रसुरेज्यधिष्ण्ये रिक्तासुनोशशिकुजेज्यभृगौननीचेनास्तंगतेनविजितेनचशत्रुगेहे १ नोकर्कनक्रझषकुंभनवांशलग्नेनोअंतनोरविशशीज्यकुजेत्रिकोणे ॥ ६ ॥ द्वि

हितंतत्रनमुहूर्त्तविचारः यदातुकालनियमाभावस्तदामुहूर्त्तविचारस्तदुक्तंतिलकेनाह स्यादग्निहोत्रविधिरिति उत्तरगेदिनेशेउत्तरायणगते सूर्येसतिमिश्रेकृत्तिकाविशाखेध्रुवाणिरोहिण्युत्तरात्रयंअंत्यरेवतीशशीमृगः शक्रोज्येष्ठाकरेज्यधिष्ण्यंपुष्यः एषुनक्षत्रेषुअग्निहोत्रविधिः स्यात् रिक्तासुनोकार्यंचंद्रमंगलगुरुशुक्रेषुनीचगतेअस्तंगतेविजितेग्रहांतरेषुतथाशत्रुगृहस्थितेषुअग्न्याधानंनोकार्यं १ अथलग्नशुद्धिवसंततिलकेनाह नोकर्केति कर्कमकरमीनकुंभानांनवांशेलग्नेचाग्न्याधानंनोकार्यं लग्नेचंद्रेसतिनोकार्यम् चंद्रोपलक्षणत्वाच्छुक्रेपिनोकार्यं यस्यचा धानलग्नस्थेचंद्रेचभृगुनंदनेउपेतितस्यजातोग्निर्निर्वाणसततंकुलग्नेतिकश्यपोक्तेः रविशशीज्येति सूर्यचंद्रगुरुभौमेषुत्रिकोणेकेंद्रस्थेषुद्विभवो

परैर्बुधशुक्रशनिराहुकेतुभिः त्रिलाभषट्स्वस्थितैः तृतीयैकादशषष्ठदशमस्थानस्थितैः सद्भिः आधानदिनंस्यात् निधनेति अष्टमस्थानशुद्धेलग्ने
अष्टमस्थानेशुभग्रहोपिनशुभः अथवानिधनशुद्धइति निधनमष्टमलग्नकर्तुरिष्टाधानकर्तुर्जन्मराशिलग्नाभ्यामष्टमंलग्नमित्यर्थः तस्यशुद्धत्वं
ग्रहभावइतियावत् तेनयुक्तेलग्नमित्यर्थः अत्रव्याख्या नद्वयेपिप्रमाणसद्भावाद्द्वयमपियुक्तं अत्रनिधनशुद्धिश्चवाभ्यांयुतेलग्नइत्यर्थः २ अथा
ग्न्याधानकर्तुराधानलग्नवशाद्योगकर्तृत्वयोगाननुष्टुभाह चापइति जीवेगुरौचापेधनुस्थेलग्नेगसति आधानलग्नेधनुरारव्येगुर्वधिष्ठितेसतीत्यर्थे
अयमेकोयोगः अथवा भौमेमेषलग्नस्थितेसति अयंद्वितीयोयोगः अथवाऽधानलग्नाद्यमेसप्तमेवाभौमेसति योगद्वयमेतत् अथवाऽजेचंद्रेषष्ठ

केंद्रस्थैषट्त्रिभवगेचपरैस्त्रिलाभेषड्स्वस्थितैर्नैधनशुद्धियुतेविलग्ने २ चापेजीवेतनुस्थेवामेषेभौमेंवरेयुनेषट्त्र्यायेके

ऽर्केरवौवास्याज्जाताग्निर्यजतिध्रुवं ३ ॥ इतिमुहूर्त्तचिंतामणौअग्न्याधानप्रकरणंनवमंसमाप्तम् ९ ॥ राजाभिषेकःशुभ

उत्तरायणेगुर्विन्दुशुक्रैःकर्तैर्बलान्वितैः ॥

ऽथतृतीयैकादशस्थानस्थेसतियोगत्रयमेतत् अथवाषष्ठत्र्यायेस्थेसूर्येसतियोगत्रयमेतत्
एवंविधेलग्नेयोजाताग्निरग्निहोत्रकर्त्ताध्रुवंनिश्चयेनयजतिज्योतिष्टोमादियागंकरोतीत्यर्थः ३ ॥ इतिश्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायांस्व
कृतमुहूर्त्तचिंतामणिटीकायांप्रमिताक्षरायामग्न्याधानप्रकरणंनवमंसमाप्तम् ९ ॥ अथराजाभिषेकप्रकरणंव्याख्यायते ॥ तत्रकालशुद्धिमिंद्रव
ज्रयाह राजाभिषेकइति उत्तरायणगतेसूर्येसतितथागुर्विन्दुशुक्रैः बृहस्पतिचंद्रशुक्रैःकर्तृभिः सद्भिः तथाभौमार्कौतुविसिद्धौ लग्नेशोजन्मलग्नेशः देशेशोव
र्त्तमानजातकीयमहादशांतर्दशयोः स्वामिनौः जन्मपोजन्मराशिस्वामी एतैर्बलान्वितैः उच्चस्वगृहादिगृहस्थैः सद्भिः राजाभिषेकः शुभउक्तः नोचेत्रेति
[illegible]टीका: ५।१।१४ आरोभौमः निशारात्रिः मलिम्लुचोधिमासः एतुराजाभिषेकोनाकार्यः ॥

कुर्याच्चेत् भौमवारे [illegible] सेनापत्यभिषेकपरो ज्ञेयः भौमस्य सेनापतित्वात् गो विप्रराज्यापितृकर्म चतुष्पदे पीति चतुष्पदे राज्याभिषेक उक्त सोमवास्या याभ्यन्त्येवेद्रिः १ अथाभिषेके नक्षत्राणि लग्नशुद्धिं चेंद्रवंशयाह शाक्र इति शाक्रो ज्येष्ठाः श्रव श्रवणः क्षिप्राण्यश्विनी पुष्य हस्ताः मृदूनि चित्रा मृगरेवत्यनुराधाः ध्रुवाणि रोहिण्युत्तरात्रयं एतैर्नक्षत्रैराजाभिषेकः शुभः अत्र चित्राग्रहणं ज्येष्ठाश्रवः क्षिप्रमृदुध्रुवेषु सौम्यपहस्तान्हि तिथी चेस्त्विका इतिमहेश्वरवचनात् अन्यग्रंथेतदभावात् शीर्षोदय इति शीर्षोदया मिथुनकन्यातुलावृश्चिककुंभाख्याः तेषु अभिषिकलग्नेषु अथवा उपचये स्वजन्मलग्नात्स्वजन्मराशेर्वा उपचये त्रिषडेकादशदशमानामन्यतमे लग्ने सति शुभे शुभग्रहे तनौ लग्नगते सति अभिषेकः शुभः कश्यपः जन्मराशेरुपचये लग्ने शीर्षोदये

भौमार्कलग्नेशदशेशजन्मपेनोंश्चैत्ररिक्तारनिशामलिम्लुचे १ शाक्रश्रवःक्षिप्रमृदुध्रुवोडुभिःशीर्षोदयेवोपचयेशुभेतनौ पापेस्त्रिषष्ठायगतेःशुभग्रहेः केंद्रत्रिकोणाष्टधनत्रिसंस्थेः २ पापे स्तनौरुक् निधनेमृतिःसुतेपुत्रार्तिरर्थव्ययगेदरिद्रता स्यात्खेलसोभ्रष्टपदोद्युनांबुगैः सर्वेशुभंकेंद्रगतेःशुभग्रहेः ३ ॥ ऽ ये स्थिरे शुभग्रहे क्षितियुतेन युते वा क्षिते परैरिति पापैरिति पापग्रहेः तृतीयषष्ठैकादशस्थानस्थितेः शुभग्रहेः प्रथमचतुर्थसप्तमदशमनवमपंचमैकादशद्वितीयतृतीयस्थानस्थितै राजाभिषेकः शुभः २ अथ विषमे सापवादमिदं वंशयाह पापैरिति तनौ लग्नस्थिते पापग्रहे रुक् रोगः स्यात् राज्ञ इति शेषः निधनेऽष्टमे पापग्रहे मृतिः स्यात् सुते पंचमे पापग्रहे पुत्रार्तिः पुत्रपीडा स्यात् अर्थव्ययगे द्वितीयद्वादशगे पापे दरिद्रता स्यात् खे दशमे पापैरलसो निरुद्योगः स्यात् द्युनांबुगैः सप्तमचतुर्थस्थानस्थैः पापग्रहैः भ्रष्टपदो भ्रष्टैश्वर्यः स्यात् अथापवादमाह सर्वे शुभमिति केंद्रगतेः शुभग्रहेः सर्वं प्रागुक्तं दुष्टफलं शुभं शुभोदर्कं स्यात् ३ ॥ ३ ॥ ३ ॥ ३ ॥ ३ ॥ ३ ॥ ३ ॥

अथविशेषंभुजंगप्रयातेनाह गुरुर्लग्नकोणइति लग्नेगुरुश्चेत्स्यादथवाणनवपंचमेगुरुःस्यात् कुजोभौमोऽरीशत्रुगृहेषष्ठःस्थःस्यात् खेदशमे
सितःशुक्रःस्यात् एतादृशेभिषेकयोगेयोराजाभिषिच्यतेसंसदासर्वकालंराजलक्ष्म्यामोदते अयमेकोयोगः सौरिसूर्य्यौतृतीयायगौस्यातां यस्या
लेस्थंशनिस्तृतीयेरविरेकादशेगुरुःस्ववंध्यो खेदशमेवधौचतुर्थेवाचेद्गुरुःस्यादेवंविधयोगेऽभिषिक्तस्यनृपस्यधात्रीपृथ्वीस्थिरासंवृहस्त
गतेस्यात् ४ इतिराजाभिषेकप्रकरणम् १० ॥ अथयात्राप्रकरणंव्याख्यायते ॥ तत्रकिंचित्कार्यमुद्दिश्यदेशांतरगमनम् यात्रेति साद्विविधा परविषयेवि
जयार्थंगंतुसमरविजयाख्या निखिलापरयात्रासामान्यासाभवेद्विविधा कथिततिथिवारर्क्षैश्चभिमतफलदाभवेच्चसामान्या समराह्वयेचयात्रायोगविल

गुरुर्लग्नकोणेकुजोरौसितःखेसराजासदामोदतेराजलक्ष्म्या तृतीयायगौसौरिसूर्यौस्ववंध्वोर्गुरुश्चेद्धरित्रीस्थिरास्यात्
पस्य ४ पूर्वैःसह १० यात्रायांप्रविदितजन्मनांनृपाणंदातव्यंदिवसमबुद्धजन्मनांच प्रश्नाद्यैरुदयनिमित्तमूलभूतैर्विज्ञाते
त्वशुभशुभेबुधःप्रदद्यात् १ जननराशितनूयदिलग्नगेतदधिपौयदिवाततएववा ॥ ॥ ग्नक्षितीशायोगे[illegible] तत्रयात्राधिका

रिणःप्रहर्षिण्याह यात्रायामिति प्रविदितच्छायाघटिकादिनाज्ञातजन्मलक्षणयातत्कालीनलग्नकुंडलिकाग्रहस्थितिशुभाशुभफलादिकंज्ञानंयेषां
तेषांनृपाणांयात्रायां दिवसंदातव्ययात्रादिनंदेयमित्यर्थः यदाह वराहः विदितेहोराराशौस्थानादिवलग्रहाणांच जातुषि[illegible]रिज्ञातेशुभमशुभंयातुरि
हभाव्यमिति नतुयस्यजन्मकालोनज्ञातस्तस्यकथंयात्रास्यादित्यतआह अबुद्धमज्ञातंजन्मकालोयेषांतेषामपिप्रश्नाद्यैः पृष्टोपैः श्रुत्यादिभिरशुभशुभे
विज्ञातेप्रतिबुधेयात्रादिवसंप्रदद्यात् कीदृशैः प्रश्नाद्यैःउदयोलग्नं निमित्तंशकुनादि एतदादीनमूलभूतानिनिदानानिकारणानियेषांतैः प्रश्नोदयनि
मित्तादिभिःतेषामपि[illegible]लादयइतिनारदोक्तेः १ अथप्रश्नादेवफलंदुत्तविलंवितेनाह जननेति अत्रयद्यपिजन्मलग्नजन्मराशिफलंवर्त्तते तथापि
जातकोक्तशुभाशुभफलदग्रहदशानवगमादज्ञानजन्मतंवज्ञेयम् अतएवराशिलग्नानामभावेयदिपृच्छति प्रश्नंवक्ष्यति॥ ॥ ॥

जननं जन्मतत्तत्रैवाधिनीराशिलग्नेयदिप्रश्नलग्नेस्यातां जन्मराशिजन्मलग्नंवायदिप्रश्नलग्नंस्यात्तदावसुधापत्तेराज्ञोविजयएववा अथवातदधि
पौलग्नराशिस्यातां जन्मराशिपतिर्जन्मलग्नपतिर्वायदिप्रश्नलग्नेस्यात्तथापिराज्ञोविजयएव अथवात्तत्तएवाभ्यामेवजन्मलग्न तनुराशिभ्यामेव नि
रिपुस्वामद्वितीयषष्ठदशमिकादशानामन्यतमंगृहं यद्युदयेपलग्नंस्यात्तदाविजयएवस्यादित्यर्थः २ अथान्यप्रश्नमंजुभाषिण्याह रिपुजन्मलग्नभमिति।
रिपोःशत्रोः जन्मलग्नभंजन्मलग्नंजन्मराशिश्चतेतत्रद्वाहिबुकेचतुर्थेद्युनेसप्तमेवास्यातांतदाराज्ञोजयोभवेत् अथवातयोःशत्रुजन्मलग्नराश्योरधिपौ
स्वामिनौप्रश्नलग्नाद्धिबुकेद्युनेवास्यातांतदापिविजयएव अथवाततएवताभ्यांशत्रोर्जन्मलग्नराशिभ्यामेवोपचयगृहं ३।६।१०।११ प्रश्नलग्नाद्धि
बुकेद्युनेवास्यात्तदापिविजयएव अथवातनौप्रश्नलग्नेशुभवर्गकःशुभग्रहाणांषड्वर्गकैश्चेत्स्यात्तदापिविजयएव अथवायदिमस्तकोदयाः

त्रिरिपुस्वायगृहंयदिवोदयेविजयएवभवेद्वसुधापतेः २ रिपुजन्मलग्नभमथाधिपौत्तयोस्ततएववोपचयंयदिचेद्भवेत्।
हिबुकेद्युनेथशुभवर्गकस्तनौयदिमस्तकोदयगृहन्तदाजयः ३ यदिपृच्छतनौवसुधारुचिराशुभवस्तुयदिश्रुतिदर्श
नगंयदिपृच्छतिवादरतश्चशुभग्रहदृष्टयुतंचरलग्नमपि ५॥ ५॥ ५॥ ५॥ ५॥

शीर्षोदयाःप्रश्नलग्नगताश्चेत्स्युस्तदापिजयएव वराहः उदयमुदयपंवाजन्मभंजन्मपंवात्तदुपचयगृहंवावीक्ष्यलग्नेपियामोः विनिहतमरिपक्षंवि
द्धिमार्गारिदंवाहिबुकगृहसमेतंपृच्छतोऽस्तस्थितेवेति ३ अथान्यंप्रश्नंतोटकेनाह यदीति अत्रवसुधापतेर्जयइत्यनुवर्त्तते यदिपृच्छतनौप्रश्नल
ग्नेवसुधाभूमिरुचिरास्यात् अथवायदिशुभवस्तुमंगल्यवस्तुमंगलवस्त्राभरणादिश्रुतिदर्शनगंश्रवणेगोचरम् दर्शनमत्रेचाक्षुषं अथवापृच्छकआ
दरतोदिवज्ञंपृच्छति तदापिवसुधापत्तेर्जयःस्यादितिसर्वत्रव्याख्येयम् अथवाचरलग्नंमेषकर्कतुलमकरास्यंयदिप्रश्नलग्नंशुभग्रहैर्दृष्टयुतंवा
तदापिजयएव ॥५॥ ६ ॥ राम: ॥

अथ शुभाशुभफलं द्रुमालिन्याह विधुकुजेति चंद्रमंगलशुक्रैः अग्ने सौरिणा शनिना दृष्टे तदा प्रश्नकर्तुर्भंगः पराजयो नाशो वा स्यात् अथ चंद्रमृतिभे
मदनसंस्थे चंद्रे अष्टमे सप्तमे वा लग्ने सूर्ये सति एवंविधे योगे पि प्रष्टुः सपदि भंगः स्यात् अथाऽव्ययानामनेकार्थत्वात् अपिशब्दोपि पर्यायार्थः तथाहि भास्करे
मन्मिमदनसंस्थे चंद्रे लग्नगे च सति एवंविधे योगे पि प्रष्टुर्भंगः स्यात् उक्तं च वराहेण चंद्रे सरुधिरे लग्ने भंगः सूर्यात्मजेक्षिते द्यूनेने धनगे चंद्रे लग्नया
तेऽरिष्याकरे विपर्यये वा षाणस्य त्रासमंगवधागमाः इति वाऽथवा पापग्रहे चतुर्थाष्टमलग्नसप्तमानामन्यतमभेऽन्यतमस्थे सति प्रष्टुर्भंगः स्यादिति ५ अ
थ प्रश्नलग्ने विशेषं भुजंगप्रयातेनाह त्रिकोणे कुजादिति कुजान्मंगलात् त्रिकोणे नवपंचमे सौरिशुक्रज्ञजीवाश्चेत्स्थः अथवा एकोपि वा सौरि

विधुकुजयुतलग्ने सौरिदृष्टेथ चंद्रे मृतिभमदनसंस्थे लग्नगे भास्करेपि हिबुकनिधनहोराद्यूनगे वापि पापे सपदि भ
वति भंगः प्रश्नकर्तुस्तदानीम् ५ त्रिकोणे कुजात्सौरिशुक्रज्ञजीवा यदैकोपि वा नो गमो र्को च शशी वा बलीयांस्तु मध्ये।
तयोर्यो ग्रहः स्यात्स्वकीयां दिशां प्रत्युतासौ नयेच्च ६ प्रश्ने गम्यदिगीशात्तेवट: पंचमयोगः स्वो भूयाद्बलयुक्तः स्वाभासंन
यते सौ ७ धनुर्मेषसिंहेषु यात्रा प्रशस्ता शनिज्ञोशनोराशिगे चैवमध्या ॥

६ शुक्रज्ञजीवानामन्यतमश्चेत्त्रिकोणे स्यात्तदाप्यु
रिष्टगमनं न स्यादेव वाऽथवाऽर्कश्च शशी त्रिकोणे चेत्स्यात्तदाप्युद्दिष्टगमनं न स्यादेव तर्हि कस्यां दिशि गमनं स्यादित्याह बलीयानिति तयोरर्जुनोक्तौ
दिग्गिरिकुप्रतिबंधकारको ग्रहयोर्मध्येपि ग्रहो बलवान्स्यात्स: स्वकीयां दिशां प्रत्युतं सांप्रतं भवेत् ६ अथ योगांतरमर्द्धलेखयाह प्रश्नेति गम्यदिगीशात्
गंतुर्द्दृष्टयोर्दिगीशस्यामुद्दिशः स्वामी प्रश्नलग्ने यत्र स्थाने स्यात्ततः पंचमस्थाने यो ग्रहो बली भूयाद्भवेत् तदा सौ ग्रहः स्वामाशां स्वदिशं नयते प्रापयतीति ७ अथ या
त्राकालं भुजंगप्रयातेनाह धनुर्मेषेति धनुर्मेषसिंहस्थे रवौ यात्रा प्रशस्ता शुभफलदा शनिज्ञोशनोराशिगे मध्या मकरकुंभमिथुनकन्यावृषतुलागते रवौ
यात्रा मध्यमा यात्रिक कर्कमीनालिसंस्थे रवौ दीर्घा बहुकालसाध्या यात्रा न फले स्यर्थः वराहः यात्राऽजसिंहतुरगोपगते वरिष्ठा मध्या शनैश्चरबुधोशनसां गृहेषु

मानौ [illegible] बधिनी [illegible] गेतिदीर्घोशस्तश्चदेवलमते ध्वनिपृष्टगोर्कः इति देवलमतेऽ ध्वनिमार्गेसूर्यः पृष्टगतः शस्तः पृष्टगतत्वंतुवसंतराजोक्तभ्र
मणवशे [illegible] यथा दग्धादिगै शीज्वलितादिगंद्रो धूमान्वितावानलदिक्प्रभाते इत्येवमेवग्रहराष्ट्रकेनभुंक्ते दिशांता इति अ [illegible] नेत्रेमेगभ्रका
रेणय [illegible] ह [illegible] समयः सादिक्सूर्यसंमुखोच्यतेतत्पंचमीदिक्सूर्यपृष्टगतेत्युच्यतेइत्याहुः वस्तुतस्तुद्वादशराशि [illegible] मवशेनयस्यांदिश्यर्के
स्थितःतांपृष्ठतःकृत्वायायादित्यर्थः यथा लग्नस्थेर्केपश्चिमायांदिशंगच्छेत् चतुर्थेदक्षिणे सप्तमेपूर्वो दशमेउत्तरामित्यर्थः [illegible] दाह देवलः लग्नस्थेवरु
णाशां हिबुकस्थेदक्षिणांरवौ यायात् सप्तमगेपूर्वाशांमेषूरणसंस्थितेसौम्यामिति एवंविदिक्ष्वपित्तेयं यथा द्वितीयतृतीयस्थितेर्केनैरृत्यी पंचमेषष्ठेआग्ने
यी अष्टमेनवमेएशानीं एकादशेद्वादशकेवायव्यांगच्छेदिति अथताराणिषेधमाह जनुरिति स्वजन्मनक्षत्रादिनक्षत्रपर्यंतसंख्येयस्तु तस्मिन्नेवभक्ते अव

रवौ कर्कमीनालिसं स्थितिदीर्घोजनुःपंचसप्तत्रितारावनेष्टाः ८ नषष्ठीनचद्वादशीनाष्टमीनो सितायातिथिःपूर्णिमा [illegible]
नरिक्ता॥ ७ ॥

शिष्टाः प्रथमसप्तमपंचमतृतीयाख्यास्ताराश्चेत्स्युस्तदानेष्टानिषिद्धाः ८ अथतिथ्यादिशुद्धिं भुजंगप्रयातेनाह नषष्ठी
ति सितायातिथिःशुक्लपक्षप्रतिपत् आसु तिथिषुयात्रानप्रशस्येत्यर्थः नारदः षष्ठाष्टमीद्वादशीचरिक्तामावर्जितास्तुच यात्राशुक्लप्रदिनिधनोयाधना
ग्रेचेति हयोश्विनी आदित्यंपुनर्वसुः मित्रोनुराधा इंदुर्मृगःजीवःपुष्यः अंत्यंरेवती हस्त श्रवण धनिष्टाः एतैर्नवभिर्नक्षत्रैः यात्राप्रशस्तोत्तमा मध्यानिनि
षिद्धानिचभानिवशिष्ट आह तिस्रोत्तराश्चवरुणनैरृतेंद्रपूर्वात्रयंब्रह्मभयुग्दशैवं मध्यान्यमिशान्यनलानिलेशाहिर्बुध्न्यचित्राहिमघांतकानी [illegible] तिस्रो
त्तरादित्यार्षःसंधिःननुवशिष्टेनवाराउक्ताः क्रूरेज्यदैत्येज्यशशीदुजानांवराश्चवर्गाःशुभदाप्रयाणे आदित्यभूसूनुशनैश्चराणांवाराश्चवर्गानशुभप्रदास्तुरि
ति अम्रकुजोनोक्ताइतिचेन्न नारदादिभिरनुक्तत्वात् वशिष्ठादिभिरुक्तपापग्रहवारस्थलनिषेधवैयर्थ्याच्चदोषाधिकोस्त्ववनार्थतादितिचेन्न भिन्नकर्तृकेषु
मुनिग्रंथेषु मुनिवचनानांवैयर्थ्यानर्हत्वात् ॥ ९ ॥ ३ ॥ ७ ॥ रामः ॥

वंविधागतिरुचितानलेककर्तृकेग्रंथे तत्रदिक्पूर्वापरविरोधे अथोत्तरंवाकार्यम् ग्रंथांतरेणसहैकवाक्यतावाकार्या तत्रायंवसिष्ठवाक्यस्वरसः शुक्रेहिनकुजमंद
वारेइतिवाक्यात्पापग्रहवारनिषेधोगौणइत्यनुमीयते तस्यगतिस्त्वेवंयदास्वजन्मराशेरुपचयेयोग्रहः शुभो वाशुभोवाभावत्रतुससर्वदिक्षुहितः परंतुशु
भदिशोविहाययदात्वनुपचयस्थः संतुकुत्रापिनिहितः यदाहराजमार्त्तण्डः उपचयकरग्रहदिनेशुद्धिः क्रूरेपिपापिनांभवति सौम्येप्यनुपचयस्थेनभ
वतियात्राशुभायातुरिति तस्मान्नार्थोवारिक्तानिवाराबोक्ताइत्युक्तम् ९ अथवारसहितनक्षत्रसहितंचपृथ्वीछंदसाह नपूर्वदिशीति शक्रभेज्येष्ठायांपूर्व
दिशिनव्रजेत् तथाविधुसौरिवारेसोमशनिवारेपिपूर्वदिशिनव्रजेत् अजपद्भेपूर्वाभाद्रपदायांतथागुरुवारेपियमदिशिनव्रजेत् रविशुक्रयोर्वारेतथा
धातृभेरोहिण्यांपाशिदिशिपाशीवरुणःतद्दिशिपश्चिमदिशिनव्रजेत् कुजबुधवारे तथार्यमर्क्षेउत्तराफाल्गुन्यांसौम्यककुभिउत्तरदिशिनव्रजेत्।

हयादित्यमैत्रेंदुजीवांसहस्तश्रवोवासवैरेवयात्राप्रशस्ता ९ नपूर्वदिशिशक्रभेनविधुसौरिवारेतथानचाजपद्भेगुरौयम
दिशीनशुक्रार्कयोःनपाशिदिशिधातृभेकुजबुधेर्यमर्क्षेतथानसौम्यककुभिव्रजेत्स्वजयजीविताथीबुधः १० पूर्वाह्ने
ध्रुवमिश्रभैर्ननृपतेर्यात्रानमध्याह्नकेतीक्ष्णाख्यैरपराह्णकेनलघुभैर्नोपूर्वरात्रेतथा॥ ~ ॥ ~ ॥

कःस्वजयजीविताथीबुधःस्वधनंजयःशत्रुपराजयपूर्वकःसोत्कर्षःजीवितमायुष्यंएतानिअर्थयते असौनव्रजेत्वारेष्वपरिहारमाह गुरुः सूर्यवा
रेघृततथाश्यसोमवारेपयस्तथा गुडमंगारकेवारेबुधवारेतिलानपि गुरुवारेदधिप्राश्यशुक्रवारेयवानपि माषान्भुक्त्वाशनेर्वारेगच्छन्शूलेनदोषभाक्
गावृतंदरसंपायसंदधिघृतंविलाःवारसल्हराण्यर्कादनाहारणतादवादितिच १० अथकालशूलंशार्दूलविक्रीडितेनाह पूर्वाह्णेध्रुवेति ध्रुवाख्यैर्मि
[illegible] भास्यात् तीक्ष्णाख्यैर्भैर्मध्याह्नेनस्यात् अपराह्णेलघुनक्षत्रैः पूर्वरात्रेमैत्राख्यैःमध्यरात्रिसमयेउग्रनक्षत्रैःतथारात्र्यंतेरा
त्रिचि [illegible] तत्रविशेषः॥ ~ ॥ ~ ॥ ~ ॥ ~ ॥ ~ ॥ रामः॥

हरिहरस्वरपुष्यपुरशिभिः श्रवणहस्तपुष्यमृगैः सर्वस्मिन्नपि काले यात्रा शुभा स्यात् ११ अथ तत्रापि कालविशेषमध्यमानां निषिद्धानां च कियतां भानां वर्ज्ये घटिका इन्द्रवज्रयाह पूर्वेति पूर्वात्रये प्रथमाः षोडश नाड्यो निषिद्धाः कृत्तिकायामेकविंशतिः मघायामेकादश भरण्यां सप्त घटिकाः त्याज्या इत्यर्थः स्वातीविशाखाश्लेषाज्येष्ठानामाद्याश्चतुर्दश घटिकास्त्याज्याः चतुर्भुजः भरण्यां सप्त घटिका वह्निभे चैकविंशतिः एकादश घटी पित्र्ये त्रिपूर्वासु च षोडश।
स्वातीसर्पविशाखार्द्राज्येष्ठासु च चतुर्दश वर्जयेद् एता घटिका यात्रायां शुभमिच्छता इति १२ अथ मतान्तरेण वर्ज्या उपेन्द्रवज्रयाह पूर्वार्धमिति स्पष्टार्थम्
१३ अथ भानां जीवपक्षादिकाः संज्ञा भुजंगप्रयातेनाह तमोभुक्तेति तमो राहुर्वक्री ग्रहः तेन भुक्ता मुक्ता एवंविधा विश्वसंख्याः त्रयोदशसंख्यास्तारा नक्षत्राणि

मित्रार्यमैन्द्रे च मध्यरात्रिसमये चोग्रेस्तथा नो चरे राज्यं तेहरिहस्तपुष्यशशिभिः स्यात् सर्वकाले शुभा ११ पूर्वाग्निपित्र्यान्तकता
रकाणां भूपप्रकृत्युग्रतुरंगमाः स्युः स्वातीविशाखेन्द्रभुजंगमानां नाड्यो निषिद्धा मनुसंमिताश्च १२ पूर्वार्धमाग्नेयमघा
निलानां त्यजेद्धि चित्रा हि यमोत्तरार्द्धं नृपः समस्तागमने जयार्थी स्वातीमघाचोशनसामतेन १३ तमोभुक्ततारास्मृता वि
श्वसंख्याः शुभौ जीवपक्षोमृतश्चापि भोग्याः तदाक्रान्तभं कर्त्तरीसंज्ञमुक्तं तनोर्खेदुसख्यं भवेद्ग्रस्तनाम १४ मार्त्तण्डे मृतपक्ष
गेहिमकरश्चेज्जीवपक्षे शुभा यात्रा स्याद्विपरीतगे क्षयकरी द्वौ जीवपक्षे शुभा॥ ✓ जीवः पक्षः स जीवपक्षसंज्ञानि शुभकराणि भोग्या
राहुणाक्रान्तनक्षत्रात् भोग्यानि गम्यानि त्रयोदशभानि मृतो मृतपक्षसंज्ञानि तदाक्रान्तभं तेन राहुणाक्रान्तभं तेन सह कर्त्तरीसंज्ञनामकं स्यात् यथा राहु
हस्तनक्षत्रे तेन भुक्तानि चित्रास्वातीप्रमुखानि पूर्वाभाद्रपदान्तानि त्रयोदश जीवपक्षः तदाक्रान्तभाद्धस्तात् सप्तदशमुत्तराभाद्रपदाख्यग्रस्तसंज्ञं तेन
राहुणा भोग्यानि उत्तराफाल्गुनी पूर्वाफाल्गुनी मघाश्लेषा पुष्य पुनर्वसू आर्द्रा मृग रोहिणी कृत्तिका भरणी अश्विनी रेवत्याख्यानि मृतपक्षः हस्तस्तु क
र्त्तरी ग्रस्तमिति च १४ अथ जीवपक्षादीनां फलं शार्दूलविक्रीडितेनाह मार्त्तण्ड इति मृतपक्षे मार्त्तण्डे सूर्ये सति चन्द्रश्चेज्जीवपक्षे स्यात्॥

नसयात्राशुभास्यात् विपरीतगेमार्त्तंडेजीवपक्षगेसति चंद्रश्चेन्मृतपक्षगः तदा यात्रा क्रियमाणा यातुः क्षयकरीस्यात् द्वौ सूर्याचंद्रमसौ चेज्जीवपक्षेस्यातां
तदाशुभाशुभतरेत्यर्थः अर्थादुभौ मृतपक्षेस्यातांतदायात्रातिक्षयकरीस्यात् यथास्यापवादमाह अस्तर्क्षमिति मृतपक्षतः मृतपक्षनक्षत्रात् ग्रस्तर्क्षराहुंणा
ग्रस्तभात्पंचदशसंख्यंशुभंशुभकरंस्यात् यथाशवान्मरिष्यमाणोदेही प्रबलः ग्रस्ताद्राहुभतः पंचदशसंख्याकात् कर्त्तरीराहुक्रांतशुभंशुभकरंस्यात् यायीति
योराजावैरिणमुद्दिश्यजिगमिषुः सयायी तत्स्वामीचंद्रः यश्चस्वदेशेदुर्गंकृत्वातिष्ठतिसस्थायी रविः स्थितिमान् स्थायीराज्ञः स्वामी तौद्वौसूर्याचंद्रमसौजीवगौजीवप
क्षगतौ तयोःराज्ञोः स्थायियायिराज्ञोःजयकरौरविश्चेज्जीवपक्षगः तदास्थायिनोजयः चंद्रश्चेज्जीवगस्तदायायिनोजयःउभौचेज्जीवगौतदासंधिकरौ अर्थाद्द्वा
वपिचेन्मृतपक्षगौउभयोःपराजयकारी अत्रबहुविचारः स्वरोदयादवगंतव्यः १५ अथाकुलकुलाकुलकुलगणंवसंततिलकाशार्दूलविक्रीडिताभ्यामाह स्वा

ग्रस्तर्क्षमृतपक्षतःशुभकरंग्रस्तातथाकर्त्तरीयायींदुस्थितिमान्रविर्जयकरौतौद्वौतयोर्जीवगौ १५ स्वात्यंतकाहिवसुपौष्ण
करानुराधादित्युध्रुवाणिविषमास्तिथयोऽकुलाः स्युः॥ ॥ — ॥ ॥ ॥

स्वात्यंतकाहीति पूर्वार्धमिति स्वातीअंतकंभरणी आश्लेषाधनिष्ठारेवतीहस्तअनुराधापुनर्वसुध्रुवाणिउत्तरात्रयरोहिण्याः एतानिद्वादशभानि विषमा
स्तिथयः प्रतिपत्तृतीयापंचमीसप्तमीनवम्येकादशीत्रयोदशीपंचदश्यइत्यष्टौतिथयः शनिचंद्रसूर्यबृहस्पतिवाराः चत्वारः एतेप्रत्येकमकुलसंज्ञाः
अथज्ञोबुधवारः मूलंअंबुपंशततारकाः ईशआर्द्राविधिमभिजित्चत्वारि भानि दशषट्द्वि तिथ्यः दशमीषष्ठीद्वितीयास्तिस्रस्तिथयः एतेप्रत्येककुला
कुलसंज्ञाः स्युः अथपूर्वास्तिस्रः अश्विनीपुष्यमघाइंदुमृगः कर्णश्रवणः दहनः कृत्तिका द्वीशंविशाखा ज्येष्ठाचित्राएतानिद्वादशभानिशुक्रभौमवारौ
अष्टचतुर्वेदमिताः द्वादशाष्टमीचतुर्दशीचतुर्थीसंज्ञाश्चतस्रस्तिथयः प्रत्येककुलसंज्ञकाः स्युः फलमाह यायीति अकुलसंज्ञकेतिथिनक्षत्रवारगणे
समरेयुद्धप्रारंभेसतियायीसजाजयीस्यात्॥ ॥

यदिकुलसंज्ञके तिथिनक्षत्रेवारगणे सतिस्थायी राजा तद्वज्जयी स्यात् कुलाकुलसंज्ञके तिथिवारनक्षत्रगणेयुध्यतोर्युद्धंकुर्वतोः भूमीशयो राज्ञोः परस्प
रंसंधिःस्यात् १६ १७ अथपथिराहुचक्रंस्रग्धरयाह स्युर्धर्मेइति अश्विनीपुष्याश्लेषाधनिष्ठाशततारकाविशाखानुराधाख्यानिभानिधर्मेधर्मस्थाने
लिख्यानि अथभरणीपूर्वाभाद्रपदाज्येष्ठाश्रवणपुनर्वसूमघास्वात्याख्यानिभानि अर्थेस्युः अथकृत्तिकार्द्रोत्तराभाद्रपदाचित्रामूलाभिजित्पूर्वाफाल्गुनी
नक्षत्राणिकामेस्युः अथरोहिणीआप्यपूर्वाषाढामृगोंत्यरेवतीविश्वमुत्तराषाढा अर्यमभउत्तराफल्गुनीहस्ताख्यानिभानिमोक्षेस्युः पथिशब्देआरियस्य

सूर्येंदुमंदगुरवश्चकुलाकुलज्ञोमूलांबुपेशाविधिमंदशाषट्द्वितिथ्यः १६ पूर्वाश्विज्यमघेंदुकर्णदहनद्वीशेंद्रचित्रास्तथा
शुक्रारौकुलसंज्ञकाश्चतिथयोऽर्कोष्टेंद्रवेदैर्मितौः यायीस्यादकुलेजयीचसमरेस्थायीचतद्वत्कुलेसंधिःस्याद्द्वयोःकुला
कुलगणेभूमीशयोर्युध्यतोः १७ स्युर्धर्मेदस्रपुष्योरगवसुजलपद्वीशमैत्राण्यथार्थेयाम्याजांघ्रींद्रकर्णादितिपितृपवा
नोडून्यथोभानिकामेवह्न्यार्द्राबुध्न्यचित्रानिर्ऋतिविधिभगाख्यानिमोक्षेथरोहिण्यार्थेंदुत्यसविश्वार्यमभदिनकृत्क्षाणिय
थादिराहौ १८ धर्मगेभास्करेवित्तमोक्षेशशीवित्तगेधर्ममोक्षस्थितिःशस्यते कामगेधर्ममोक्षार्थगःशोभनोमोक्षगेके
वलंधर्मगःप्रोच्यते १९ पौषपक्षत्यादिकाद्वादशैवतिथ्योमाघादौद्वितीयादिकास्ताः ॥ ॥ तादृशेराहौपथिराहावित्यर्थःचक्रेइ

ति विशेषमध्याहार्यं १८ अथस्रग्विण्यातत्फलमाह धर्मगेभास्करइति धर्ममार्गस्थितेभास्करेसतिचेद्वित्तमोक्षेशशी अर्थमार्गेमोक्षमार्गेवाशशी
स्यात्तदाशोभनः अथवित्तगेअर्थगेभास्करेसति धर्ममार्गगःमोक्षमार्गेवाशशीशोभनः अथकामगेभास्करेसति धर्मार्थमोक्षमार्गगःशशीशोभनः अथ
मोक्षमार्गेभास्करेसति धर्मगः शशीशोभनः अर्थाद्विपरीतावस्थितयोर्द्वयोः सूर्याचंद्रमसोरशुभत्वंस्यात् १९ अथतिथिचक्रंशालिन्याह पौषेइति अ
त्रपौषादितः प्रतिमासेद्वादशकोष्ठकालेख्याः एवंकृतेश्चतुश्चत्वारिंशदधिकम् ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

| पौ | मा | फा | चै | वै | ज्ये | आ | श्रा | भा | आ | का | मा | पूर्व | दक्षिण | पश्चिम | उत्तर |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | सौख्यं | क्लेशः | प्रीतिः | अर्थागम |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | शून्यं | मैत्रं | निस्व | मित्रता |
| ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | द्रव्यक्ले | दुःख | द्रव्याप्ति | अर्थः |
| ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | लाभः | सौख्यं | मंगलं | विपुल |
| ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | लाभः | द्रव्याप्तिः | धनं | सौख्यं |
| ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | प्रीतिः | लाभः | मृत्युः | अर्थागम |
| ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | लाभः | कष्टं | द्रव्यला | सख्य |
| ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | कष्टं | सौख्यं | क्लेशः | सुखं |
| ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | सौख्यं | लाभः | कार्यं | कष्टं |
| १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | क्लेशः | कष्टाप्ति | अर्थः | धनं |
| ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | मृत्युः | लाभः | द्रव्यला | शत्रु |
| १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | शून्यं | सौख्यं | मृत्यु | अरत्न |
| पौ | मा | फा | चै | वै | ज्ये | आ | श्रा | भा | आ | का | मा | पूर्व | दक्षिण | पश्चिम | कष्ट उत्तर |

शतंकोष्ठकाजायंतेतत्रचक्राकृतिर्यथान्यासः प्राग्लिखितः।
तत्रपक्षस्यशुक्लस्यकृष्णस्यवाप्रवृतिःपक्षमूलंप्रतिपत्त
दादिकाःप्रथमंपौषमासेप्रतिपदादिकाःद्वादशतिथयो
धोधोलेख्याःमाघादिमाघादिमासेषुद्वितीयादिकास्ति
थयोलेख्याःयथामाघेद्वितीयादिकाःफाल्गुनेतृतीयादि
काःचैत्रेचतुर्थ्यादिकाःवैशाखेपंचम्यादिकाःज्येष्ठेषष्ठ्या
दिकाःआषाढेसप्तम्यादिकाःश्रावणेष्टम्यादिकाःभाद्र
पदेनवम्यादिकाःआश्विनेदशम्यादिकाःकार्त्तिकेएका
दश्यादिकाःमार्गशीर्षेद्वादश्यादिकाःसर्वास्तिथयोद्वा
दशपंक्तालेख्याःअवशिष्टस्थानानिप्रतिपदादिभिःपूर
णातिकामातिस्त्रइतिकामात्रयोदशीचतुर्दशीपंचदश्य
स्तृतीयादिवत्कत्रयोदशीतृतीयावत्चतुर्दशीचतुर्थी
वत्पंचदशीपंचमीवत्स्युरित्यर्थः फलार्थमतिदेशायम्
तत्रप्रतिपदादौपूर्वदक्षिणापश्चिमोत्तरासुदिक्षुयानेचि
कीर्षितेसतिफलशुभाशुभंसौख्यंक्लेशइत्यादिनाद्तत्र

येणवक्ष्येकथयिष्यामि २० फलानिशालिनीत्रयेणाह सौख्यमिति लाभइति सौख्यमितिच श्लोकत्रयंस्पष्टार्थमेव तत्रपौषप्रतिपदि दिक्चतुष्टयेसौख्यंक्ले
शोभीतिरर्थागमश्चेतिफलचतुष्टयंक्रमेणज्ञेयं एवंद्वितीयादिष्वपिश्लोकश्चतुर्थांशोक्तफलंस्यात् २१ २२ २३ अथसर्वांकज्ञानंवसंततिलकयाह तिथ्यृक्षेति
तिथयोत्रशुक्लप्रतिपदाद्यितोग्राह्याः तत्रतिथिनक्षत्रवाराणांयुतिः स्थानत्रयेस्थाप्याक्रमेणसप्तभिरष्टभिस्त्रिभिश्चतष्टाभक्तावशिष्टासतिप्रथमस्था
नेवियतिशून्येसतिअतिदुःखीयात्राकर्त्तास्यात् मध्येद्वितीयस्थानेधननाशः चरमेतृतीयस्थानेशून्येमृत्युः स्यात् स्थानत्रयेंकयुजिअंकयुतेसौ

कामात्रिस्वः स्युस्तृतीयादिवच्चयानेप्राच्यादिदोफलंतत्रवक्ष्ये २० सौख्यंक्लेशोभीतिरर्थागमश्च शून्यंनैःस्वंनिःस्वतामिश्रताच।
द्रव्यक्लेशोदुःखमिष्टाप्तिरर्थो लाभःसौख्यंमंगलंवित्तलाभः २१ लाभोद्रव्याप्तिर्धनंसौख्यमुक्तं भीतिर्लाभोमृत्युरर्थागमश्च
द्रव्यक्लेशोलाभोसुखंचकष्टंसौख्यंक्लेशलाभोसुखंच २२ सौख्यंलाभःकार्यसिद्धिश्चकष्टंक्लेशःकष्टात्सिद्धिरर्थोधनं।
च मृत्युर्लाभोद्रव्यलाभश्चशून्यंशून्यंसौख्यंमृत्युरत्यंतकष्टं २३ तिथ्यृक्षवारयुतिरद्रिगजाग्नितष्टास्थानत्रयेत्रवियति।
प्रथमेतिदुःखी मध्येधनक्षतिरथोचरमेमृतिःस्यात्स्थानत्रयेंकयुजिसौख्यजयौनिरुक्तौ २४ रवेर्भतोब्जभोन्मितिर्नगाव
शेषिताद्युगाः महाडलेनशस्यतेत्रिषण्मिताभ्रमोभवेत् २५ ॥

ख्यजयोभवेतां २४ अथाडलभ्रमणेप्रमाणिकयाह र
वेर्भतइति सूर्यनक्षत्रात् अब्जभस्यचंद्रस्योन्मितिर्गणनाकार्यासानगैःसप्तभिरवशेषितासतीद्युगाः द्विशेषमितासप्तशेषमितावाभवेत् तदामहा
डलेदोषःस्यात् नशस्यते प्रागुक्तप्रकारेणयदित्रिषण्मितात्रिशेषमिताषट्शेषमितावास्यात्तदाभ्रमोभ्रमणाख्योदोषःस्यात् सोपिनशस्यते ए
तन्निर्मूलं तत्रभ्रमणेयात्रामेवत्यजेति आडलेबहूनिकार्याणित्यजेति उक्तंच यात्रायंत्रहलप्रवाहसमरेचोमेचसंधौतथाकूपारामतडागबंध
नविधौपापर्द्धिदुर्गग्रहे अश्वेभोष्ट्ररथाधिरोहणविधौत्याज्यंसदैवाडलं यत्नान्नान्नशुभेषुमंगलविधौदोषानतस्यक्वचिदिति २५ ॥ छ ॥

स्पष्टार्थः प्रसंगात् घवाडमपि सूर्यभाद्गणये चांद्रं त्रिगुणं तिथिसंयुतं सप्तभिस्तु हरेद्भागं त्रिशे

अथ हिंबरास्थ्ययोगमुपजातिकयाह शशांकभमिति स्पष्टार्थः प्रसंगात् ग्रन्थान्तरस्थ संग्रहः सूर्यभाद्गणये चांद्रं तिथिवार समिश्रितं
शेषं स्याद् घवाडकं एतच्च हिंबराख्यं भवेत् एतत्सर्वं दासिणात्या विचारयंतीति अत्र प्रसंगात् ग्रन्थान्तरस्थ संग्रहः सूर्यभाद्गणये चांद्रं तिथिवार समिश्रितं
सप्तभिस्तु हरेद्भागं पंचशेषं तु टेलकं सूर्यभाद्गणये चांद्रं तिथिवारं च मिश्रितं अर्कसंख्यैर्हरेद्भागं नवशेषं तु गोरवं प्रवेशे निर्गमे हिंबरं तथा
तस्करे टेलकं स्यात् घवाडं सर्वकर्मसु इति ज्योतिर्निबंधे २६ अथ घातचंद्रं शालिन्या तत्परिहारं चानुष्टुप्द्वयेनाह भूपंचेति आग्नेयेति रूपद्व्यग्नीति मे
षादिराशीनां भूपंचांकेत्यादिको घाताख्यचंद्रो ज्ञेयः यथा मेषस्य प्रथमो वृषस्य पंचमः कन्यास्थः मिथुनस्य नवमः कर्के द्वितीयः सिंहे षष्ठः कन्या

शशांकभं सूर्यभतोत्र गण्यं पक्षादितिथ्या दिनवासरेण युतं तु वातं नगशेषकं चेत् स्याद्धिंबरं तद्गमने तिशस्तं २६ भूपंचांकद्व्यं
ग दिग्वन्हिसप्तवेदाष्टेशार्काश्च घाताख्यचंद्रः मेषादीनां राजसेवा विवादे वर्ज्यो युद्धाद्ये च नान्यत्र वर्ज्यः २७ आग्नेयत्वाष्ट्र
जलपपित्र्यवासवरौद्रभे मूलब्राह्माजपादर्क्षपित्र्यमूलाजभे क्रमात् २८ रूपद्व्यग्न्यग्निभूरामद्व्यग्न्यब्ध्यब्धियुगाग्न
यः घातचंद्रे धिष्ण्यपादा मेषाद्यज्यानि नीषिभिः २९ गौस्त्रीझषे घाततिथिस्तु पूर्णा भद्रा नृयुक्कर्कटके च नंदा ॥ ॥

यादशमः तुलायास्तृतीयः वृश्चिकस्य सप्तमः धनुषश्चतुर्थः मकरस्याष्टमः कुंभस्यैकादशः मीनस्य द्वादशः घातचंद्रो राजसेवायां विवादे प्रति
वादिना सह कलहे युद्धाद्ये आदिशब्दान्मृगयादिषु वर्ज्यः अन्यत्र विवाहान्नप्राशनादि मंगलकृत्ये न वर्ज्यः उक्तं च युद्धे चैव विवादे च कुमारीपूज
नेतथा राजसेवाविवाहनादौ घातचंद्रं विवर्जयेत् तीर्थयात्राविवाहान्नप्राशनोपनयादिषु मांगल्यसर्वकार्येषु घातचंद्रं न चिंतयेत् अत्र लाघवार्थं भ्रात्वपु
त्रेण मे विरचयाम् मेषकन्याघटद्वंद्वरिनक्रयुग्मधनुर्वृषाः मीनसिंहधनुः कुंभा घातचंद्रा अजादितः इति घातचंद्रे मेषादिराशिषु रुक्तिकादिभानां चरण
एते कन्याद्विके विदुरिति २७। २८। २९ घाततिथिरुपजातिकयाह गौस्त्रीति गौः स्त्री कन्या झषो मीनः एतद्राशिस्थिते नरे पूर्णाः पंचमी दशमी पंचदशी

घाततिथिः कौर्पीवृश्चिकः अजोमेषः एतयोर्नंदाप्रतिपत्षष्ठ्येकादशीच तिथिः नक्रधटेमकरतुलयोः रिक्ताचतुर्थीनवमीचतुर्दशीच घाततिथिः। धनुःकुंभसिंहानांजयातृतीयाष्टमीत्रयोदशीच घाततिथयः भद्राद्वितीयासप्तमीद्वादशी मिथुनेकर्केचघाततिथयोऽस्त्रोऽरोनशस्ताः ३० घातवारान्शालि न्याह नक्रेभौमइति मकरराशिमतिपुरुषे भौमोघातवारः वृषसिंहकन्यासुमंदः शनिर्घातवारः द्वंद्वेमिथुनेचंद्रः अजेमेषेऽर्कः कर्केबुधः धनुर्मीनवृश्चि केषुशुक्रवारः जूकस्तुला कुंभतुलयोर्जीवोगुरुर्घातवार इत्यर्थः घातवाराअपियात्रादौनशस्ताः ३१ अथघातनक्षत्राण्यनुष्टुभाह मघेति स्पष्टार्थम् एता रपियात्रादौनशस्ता ३२ अथघातलग्नान्याह भूह्यब्धीति स्पष्टार्थं तत्रपियात्रायांवर्ज्यम् ३३ अथयोगिनीजीर्णास्तास्तिथयनीदोषमाह नवभूम्यइति

कौर्प्यांजेयोर्नक्रघटेचरिक्ताजयाधनुःकुंभहरौनशस्ता। ३० नक्रेभौमोगोहरिस्त्रीषुमंदः चंद्रोद्वंद्वेऽर्कोऽजभेज्ञश्चकर्केशुक्रः। क्रःकोदंडालिमीनेषुकुंभजूकेजीवोघातवारानशस्ताः ३१ मघाकरस्वातिमैत्रमूलश्रुत्यंबुपात्यभम् याम्यब्राह्मेशसार्पंचमेषा देर्घातभंनसत् ३२ भूमिद्व्यब्ध्यद्रिदिक्सूर्यागाष्टांकेशाग्निसायका ःः १।२।४।७।१०।१२।६।८।९।११।३।५।मेषादिघा तलग्नानियात्रायांवर्जयेत्सुधीः ३३ नवभूम्यःशिववह्नयोऽक्षविश्वेऽर्ककृताःशक्ररसास्तुरंगतिथ्यः द्विदिशोमाव सवश्चपूर्वतःस्युस्तिथयःसमुखवामगानशस्ताः ९।११।५।१२।१४।७।२।३०॥ ३४ ॥ ३४ ॥ ६ ॥

१।३।१३।४।६।१५।१०।८।

एतास्तिथयःपूर्वतःपूर्वदिशमारभ्य अष्टदिक्षुज्ञेयाः यथा पूर्वस्यांनवभूम्यःनवमीप्रतिपच्च आग्नेय्यांशिववह्नयःएकादशीतृतीयाच एवमग्रे ऽपि एतास्तिथयोयोगिन्यइतिजीर्णाः तास्तिथयःसमुखवामगानशस्ताः यथा प्राच्यांगंतुःप्रतिपत्संमुखीदक्षिणेगंतुर्वामगाप्रतीच्यांगंतुःपृष्ठगा उदीच्यांगंतुर्दक्षिणा एवंसर्वासुदिक्षुसर्वास्तिथयोविचार्यास्तत्रसमुखवामगाश्चेतिथयोनशुभाः अर्थाद्दक्षिणापृष्ठगाश्चशुभाः उक्तंच पृष्ठतोद क्षिणेवापियोगिनीगमनेहिता वामसंमुखयोर्नेष्टावायुमेवंविचिंतयेदिति ३४ ॥ ३४ ॥ ६ ॥ ६ ॥ २ ॥ २ ॥

अथकालपाशावेशालिन्याह कौवेरीतइति कौबेरीउत्तरा दिक् तस्याः विपरीतदिक्षु अर्काद्येवारेकालःस्यात् तद्यथा रवावुत्तरदिशिकालः दक्षिणेपाश
इत्यर्थः चंद्रे वायव्यांकालः आग्नेय्यांपाशः एवंभौमादिष्वपि रात्रौकालदिशि पाशइतिवैपरीत्यंज्ञेयं एतौयात्रायुद्धादिषुसंमुखे [illegible] उक्तंचस्वरोदये वारोदयः
वेदिग्भागेततः सव्येनमदगः यत्रस्थस्तत्रकालःस्यात्पाशस्तस्य तुसंमुखः दक्षिणस्थःशुभःकालः पाशोवामदिगाश्रयः यात्रायांसमरेश्रेष्ठस्ततोयत्रनशोभ
नइति प्रसंगादर्थयामाराद्धुरपिस्वरोदयस्थोलिख्यते इंद्रवायुयमरुद्रतोयानिशशिमारुते यामार्द्धमुदितोराहुर्भ्रमत्येवंदिगष्टकेइति ३५ अथपरिघदंडा
नइति प्रसंगादर्थयामाराद्धुरपि ... रव्यंदोषमनुष्टुभाह पूर्वादिष्विति अनलर्क्षतः कृत्तिकातःसप्तभानिपूर्वस्यां मघातः सप्तयाम्यायाम् अनुराधातः सप्तपश्चिमायां धनिष्ठातः सप्तभान्युत्तर

कौवेरीतोवैपरीत्येनकालोवारेऽर्कादिकेसंमुखेतस्यपाशः रात्रौवैतौवैपरीत्येन गण्योरात्रायुद्धेसंमुखेवर्जनीयौ ३५ पूर्वादि
ष्वचतुर्दिक्षु सप्तसप्तानलर्क्षितः वायव्याग्नेयदिक्संस्थपरिघंनैवलंघयेत् ३६ अग्नेर्दिशिंनृपइत्यासुरुहूतदिग्भैरवत्र
दक्षिणगताद्विदिशोथकृत्ये॥ ((स्यादिलेरव्याइतिसर्वत्रवाक्यशेषः तत्रवायव्याग्नेयदिगुपलिवद्धरेखापारिघोदंडःस्यात् ससर्वथानोल्लंघये
त् तत्रयवनेश्वरः प्राचीमुदग्द्वारिभिरत्रयायात्स्वाकद्वारिकैश्चोडुभिरप्युदीचीं तथैवयाम्यामपराश्रितैर्भैर्याम्याश्रयैश्चाप्यपरांप्रयायादिति ३६ अथवि
दिग्गमेनस्त्रातिदेशं आवश्यकृत्येनिघदंडापवादंचेवसंततिलकयाह अग्नेर्दिशामिति नृपःपुरुहूतदिक् प्राचीतत्स्थैः कृत्तिकादिसप्तनक्षत्रैः अग्नेर्दि
शमाग्नेयीमियात्नगच्छेत् एवमनेनप्रकारेणप्रदक्षिणागताः सप्तिमार्गेण [illegible] विदिशांनैर्ऋत्यादींगच्छेत् यथा मघादिसप्तभिःनैर्ऋत्याम् अनुराधादि
सप्तभिर्वायव्यां धनिष्ठादिसप्तभिरैशानींगच्छेदित्यर्थः अथेति आवश्यकेकृत्येसतिअपिपरिघदंडमपिलंघयित्वानृपोगच्छेत्परंतुशूलनक्षत्रमूलंविहायेत्य
र्था यद्दिक्तनुशुद्धिरस्ति पूर्वादिदिक्षुमेषादयस्त्रिरावृत्त्यादिग्याशायस्त्वपयुः क्रमशोमेषाद्यएवतस्यांदिशिदिक्॥ ॥ ७ ॥ १ ॥ ७ ॥

भग्नशब्देनव्यवह्रियंतेतेषांशुद्धिःशुभफलदातृग्रहानुकूलसाहित्यंस्यात् दिग्भ्रशीनाह नारदः द्विपाशयःस्वःक्रमशेमेषाद्यिश्चतुनपुनरिति ३७ अन्यद्भौ
वज्रयाह मैत्रार्केति अनुराधाहस्तपुष्याश्विनीनक्षत्रैः सर्वास्तु दिशास्वतुरिद्धैः तद्धैः ज्योतिषीके यात्राशुभानि गदिता पञ्चुर्वाल विवेकियागादिभागादिषु
श्रवणाश्विपुष्यहस्तानांत्यागउक्तः सतिमूलत्वाद्युपेक्ष्यक चिदृष्टे सर्वदिग्द्वारिकाण्युक्तानि गुरुःपुष्याश्विहस्तमैत्राणि पौष्णवैष्णवसौम्यभं वासवंसर्व
दिग्वाशुभयात्रायांशोभनानिहीति वराहः सर्वद्वारिकसंज्ञितानिगुरुभंहस्तास्विमैत्राणि श्रेष्ठान्येंद्रवपौष्ण विष्णुवसुभान्यादैः सहाष्टेसदेति वक्रीग्रहइतिव
क्रीग्रहोयदिकेंद्रगःस्यात्तंगमेयात्रायांनिषिद्धः अथवास्ववक्रीग्रह स्वस्यलग्नेवर्गः षड्वर्गश्चेत्स्यात्सोपिगमनेनिषिद्धः वास्ववक्रीग्रहस्यदिनंवारोपिग

आवश्यकेपिपरिघंप्रविलंघ्यगच्छेच्छूलंविहाययदिदिक्स्वनुशुद्धिरेति ३७ मैत्रार्कपुष्याश्विनभैर्निरुक्तायात्राशुभास
र्वदिशास्तज्ज्ञैः वक्रीग्रहःकेंद्रगतोस्ववर्गोलग्नेदिनंचास्यगतोनिषिद्धः ३८ सौम्यायनेसूर्यविधूतदोत्तरांप्राचींव्रजेतौय
दिदक्षिणायने प्रत्यग्यमाशांचतयोर्दिवानिशंभिन्नायनत्वेथवधोन्यथाभवेत् ३९ ॥

॥ मनेनिषिद्धम् ३८ सौम्यायनस्थ
लमिंद्रवज्रयाह सौम्यायनेति यदिसूर्यचंद्रौसौम्यायनेउत्तरायणेगतौस्यातांतदाउत्तरांप्राचींवाव्रजेत् नहिक्षुस्वाषात्रांशुभेस्थः यदितुरविचंद्रौदक्षि
णायनेगतौस्यातांतदाप्रतीचींदक्षिणांवाव्रजेत् अथतयोर्भिन्नायनत्वेअयनभेदेसतिदिवानिशंव्रजेत् यथासूर्योयस्मिन्नयनेतांदिशंदिवाव्रजेत् चंद्रोय
स्मिन्नयनेतांदिशंरात्रौयायात् अत्रोत्तरस्यांपूर्वस्या अंतर्भावः दक्षिणस्यांपश्चिमायाइति रत्नकोशे दिनकरकुजांतगतामकरादावुत्तरेपूर्वा
वधायावककर्कटाद्यौयाम्यामाशांप्रतीचींचेति अतोन्यथाचेत्कुर्यात् तदावधोमरणंभवेत् भिन्नायनत्वेसतिसूर्योयस्मिन्नयनेतांदिशंयदिरात्रौगच्छे ॥ ॥ ॥
त् चंद्रोयस्मिन्नयनेतांदिवागच्छेत्तदापातुर्वधोभवेदित्यर्थः ३९ ॥ ३९ ॥ ३९

अथ संमुखशुक्रदोषमुपजातमाह उदेतीति शुक्रो यस्यां दिशि प्राच्यां प्रतीच्यां वा कालपरिमाणे नोदयं करोति तत्र गंतुः पुंसः शुक्रः संमुखः अयमे
कः प्रकारः अथ गोलभ्रमवशेन यत्र यस्यां दिशि भिरुत्तरस्यां दक्षिणस्यां वाय दिग च्छेत् तत्र गंतुः पुंसः संमुखशुक्रः स्यात् अथ द्वितीयः प्रकारः अथ य
अकुप्‌ भसंघे प्राच्यादि दिशि कृत्तिकादिन्यासवशेन पदिङ् नक्षत्रे चरति तत्र दिशि गंतुः संमुखः शुक्रः स्यादित्ययं तृतीयः प्रकारः स्यात् अत्रिः अदिग्म
तः समुद्रये द्विचरेद्यत्र गोलके यद्वारभेषु विचरेत्त्रिविधं प्रतिभार्गवमिति यत्रोदित इति यस्यां दिश्युदितः शुक्रो दृश्यते तां दिशमेव न गच्छेत् अन्य दिश्य
पियथासंभवं नेयात् मुढे शुक्रे कार्यहानिः प्रतिशुक्रे पराजय इति नारदोक्तेः अवश्यकर्त्तव्ये गमने शांतिमाह वसिष्ठः भृगुलेख्ये भृगोर्वारे भृगुवर्गे भृगूदये
उपोष्य भृगुवारेपि यावच्छुक्रोदयं प्रति रजतेनैव शुक्रेन न कारयेत्प्रतिमां भृगोः लिखेदष्टदलं पद्मं कांस्यपात्रे च तंडुलैः शुक्रस्तूष्मां वै वैश्यमतिमां तत्र पूज
उदेतीति यस्यां दिशि यत्र याति गोलभ्रमाद्वाथ ककुंभसंघे त्रि...मते संमुखस्व शुक्रो यत्रोदितस्तां तु दिशं न यायात् ४० ॥
येत् शुक्लपुष्पैश्च गंधैर्मुक्ताहारैर्विचित्रितैः उपचाराणि कार्याणि शुक्रे ते अन्यदिशश्चा तन्मंत्रेण जपं कुर्यात्सम्यगष्टोत्तरं १ कर्मांते तेन मंत्रेण भ
तया चार्घ्यं प्रदापयेत् श्वेतगंधाक्षतैः पुष्पैः क्षीरमिश्रेण वारिणा दैत्यमंत्री दिवादर्शी चोशना भार्गवः कविः श्वेतो थमंडलीकाव्यो विधिस्यो भृगवे नमः
रत्वेत्यर्घ्यं प्रयत्नेन प्रार्थयेद्देवभक्तितः अनेनैव तु मंत्रेण प्रांजलिः प्रणतः स्थितः ... संपूजयानपापशुक्र संमुखत्वसमुद्भवं दोषविनाशयक्षिप्रं रक्ष मां ते
जसं निधे इति प्रार्थ्य प्रयत्नेन प्रतिमा भूषणान्विता दैवज्ञायैव दातव्या श्वेतवस्त्रसवितवसा शिष्टेभ्यो दक्षिणां दद्याद्यथा वित्तानुसारतः ब्राह्मणान्‌ भोज
यित्वा पश्चात्स्वयं भुंजीत बंधुभिः इतरेषां ग्रहाणां च पूजां कुर्यात्प्रयत्नतः तत्तत्संभूजो दोषस्तत्क्षणादेव नश्यति दीपिकोयां तु स्नानमेवोक्तम् सितमश्वं सितव
स्त्रं हेममौक्तिकसंयुतं ततो द्विजायेत दद्यात्सतिशुक्र प्रशांतय इति ४० ॥ ४० ॥ ४० ॥ ४० ॥

अथवक्रास्तादिदोषंसापवादमुपजात्याह वक्रास्तेति भृगोः स्फुटेशुक्रे वक्रोपगते अस्तोपगते नीचोपगते च उपलक्षणमेतत् ग्रहयुद्धे पराजिते वर्णरहिते वा सति राजापरराष्ट्रंनव्रजन्तस्मान्हि निश्चये विद्विषां शत्रूणांवशंयाति वृद्धो भवतीत्यर्थः भरद्वाजः विवर्णे विजिते नीचे विपक्षे केतवासितेस्तगे शत्रुक्षेत्रग एवापितदंशेतन्नि रीक्षिते भौमांशे भौमसंयुक्ते मंदांशे मंदसंयुते यात्रां नैव प्रकुर्वीत तत्रस्यायुर्बलहानिरेवेति बुधश्चेति तत्रशुक्रास्तेयदिबुधोनुकूलोऽ एवदिक्तत्स्थोभवेत्तदासंचलनात्सन्राजारिपून्शत्रून्जयेत् नैवेति प्रतीहुःतेबुधेसंमुखेसतिगंतूराज्ञोनैवजयः किंतुपराजयः अयंतुप्रतिशुक्रविचारोन्नृणांप्रथमगमनेराज्ञांतुसमरयात्रायामाहुःरेभ्यःप्रतिशुक्रादिदोषोऽधिनृतनेगमनेनृणां राज्ञां विजययात्रायांनान्यथादोषमर्हतीति ५१ अथविशेषंशालिन्याह यावच्चंद्रइति चंद्रोयदापूषभाद्रेवतीनक्षत्रादारभ्यकृत्तिकाद्येपादेरेवत्यश्विनीभरणीकृत्तिकाप्रथम [illegible] वत्तिष्ठतितावच्छुक्रोंधोज्ञेयः द

वक्रास्तनीचोपगतेभृगोःस्फुटेराजाव्रजन्यातिवशंहिविद्विषां बुधोनुकूलोयदितत्रसंचलन्रिपून्जयेन्नैवजयःप्रतीहुजे॥ ५१ यावच्चंद्रःपूषभात्कृत्तिकाद्येपादेशुक्रोंधोनदुष्टोऽग्रदक्षे मध्येमार्गेभार्गवास्तेपिराजातावत्तिष्ठेत्संमुखत्वेपितस्य ५२ कुंभकुंभांशकौत्याज्यौसर्वथायत्नतोबुधैः तत्रप्रयातुर्नृपतेरर्थनाशःपदेपदे ५३॥ [illegible]पिशुक्रोदर्शनंकार्यंनकरोतीत्यर्थः यः तदेवाह नदुष्टइति अंधोयदाअग्रेसंमुखेदक्षिणभागेचदुष्टोनस्यात मध्येमार्गमिति स्फुमुहूर्त्तप्रस्थितोपि [illegible] मध्यमार्गेमार्गमध्येयदिशुक्रास्तंभवेत्तावत्कालंतस्मिन्नेवप्रयाणेतिष्ठेत् यावच्छुक्रोदयोभवेत् यदिगच्छतो राज्ञोदैवात्संमुखःशुक्रश्चेत्तावद् [illegible] संमुखत्वेपितस्मिन्नेवप्रयाणेति ष्ठेत् उपलक्षणत्वाद्दुरावप्येवंविधेद्रष्टव्यं पराशरः जीवःशशांकःशुक्रोवामार्गमध्येस्तगोयदि तत्रैवनिवसेद्राजायावदभ्युदितोभवेदितिमार्गमध्येबुधास्ते दोषःस्यात्तुमार्गमध्येबुधोदयोभवेत्सचपुनःसंमुखोभवेत्तदातुपुनर्दोषएव वसिष्ठः संमुखंचंद्रजंयत्रमार्गमध्योदितोयदि यावदस्तंगतेतस्मिन्स्ताबत्तत्रैवसंवसेदिति ॥ अथनिषिद्धलग्नमनुष्टुभाह कुंभकुंभांशकेतिस्पष्टार्थः ५३ ॥ ५३ ॥ ५३ ॥ ५३ ॥ ॥

ऽथान्यन्मंजुभाषिण्याह अथमीनलग्नइति मीनलग्नलग्नांतरे वामीनांशके चलितराज्ञो वर्त्म वक्रं स्यात् जन।। तज्जनिर्जन्मकालीनं लग्नं जन्मभं
जन्मराशिः तयोर्जन्मलग्नराश्योः पती स्वामिनौ शुभग्रहौ सौम्यग्रहौ चेदुदयलग्ने भवतस्तदा गमागमनं शुभं स्यात् जनिलग्नं जन्मराशिश्च यात्रालग्न
गं शुभमिति योगवाभिहितं जननराशितनूपरि लग्नग इति अर्थाज्जन्मलग्नजन्मराशिस्वामिनौ पापग्रहौ यदि यात्रालग्ने स्थितौ तदा तादृशे लग्ने गमनं न शुभम
शुभफलमित्यर्थः वसिष्ठः जन्मराशौ लग्नगते तदीशे वा विलग्नगे अभीष्टफलदा यात्रा राशीशश्च शुभग्रहः वृद्धनारदेन जन्मतारासु शुभमेनेवं जन्मलग्नो
दयः शुभः तयोरुपचयस्थानं यदि लग्नगतं शुभं इति जन्मराशौ यात्रालग्ने निषिद्ध उक्तः स जन्मराशेः पापग्रहस्वामित्वे ज्ञेयः शुभस्वामित्वे तु गुरुक्ते वसिष्ठवा

अथमीनलग्नउत वा तदंशके चलितस्य चक्रमिह वर्त्म जायते जनिलग्नजन्मभपती शुभग्रहौ भवतस्तदा तु उदये शुभो
गमः ४४ जन्मराशितनुतोऽष्टमेऽथवा स्वारिभाच्च रिपुभे तनुस्थिते लग्नगास्तदधिपा यदाथवा स्युर्गतं हि नृपतेर्मृतिप्रदम्
४५ लग्ने चंद्रे वापि वर्गोत्तमस्थे यात्रा प्रोक्ता वांछितार्थैकदात्री अंभोराशौ वा तदंशे प्रशस्तो नौकायानं सर्वसिद्धिप्रदायी ॥४६

क्यस्वरस्यात् एवं जन्मलग्नोदयः शुभ इत्यत्रापि जन्मलग्नस्य शुभस्वामित्वे शुभफलता न पापस्वामित्वे इति व्याख्येयम् ४४ अथान्यद्रथोद्धत
याह जन्मराशितनुत इति स्वजन्मराशेर्जन्मलग्नाच्च वाऽष्टमे राशौ लग्ने स्थिते सति तथा अरिभात् जिगमिषतिशत्रोर्जन्मराशेर्लग्नात् रिपुभे षष्ठराशौ लग्नस्थि
ते सति अथवा तेषां स्वराशिलग्नाभ्यां अष्टमभवने स्वशत्रुराशेर्जन्मराशिलग्नाभ्यां षष्ठभवने एषां स्वामिनो यात्रालग्नगताः स्युर्यदा तदा राज्ञो मृतिप्रदाः ४५ अ
थान्यच्छुभलग्नं शालिन्याह लग्ने चंद्र इति मीनकुंभवर्जिते यस्मिंश्चिल्लग्ने वर्गोत्तमनवांशस्थे अथवा चंद्रे वर्गोत्तमस्थे [illegible] यात्रा वांछितार्थस्य मनोऽभीष्ट
र्थस्यैका अद्वितीया दात्री अंभोराशाविति जलराशौ लग्नगते सति ।। अथवा लग्नांतरे तदंशे जलराश्यंशे सति नौकायाने सर्वसिद्धिप्रदा [illegible] ॥४६

अथान्यदिंद्रवज्रयाह दिग्द्वारिभे इति पूर्वादिदिक्षु मेषाद्याः क्रमाद्दिग्द्वारराशयः इति दिग्राशिषु गतव्यदिगवस्थितेषु समुत्थापात्रात्र शस्ता प्रशस्तलग्नमाह।
अर्थदात्रीजयकारिणी चेति यथा मेषः पूर्वस्याम् वृषो दक्षिणस्यां मिथुनः पश्चिमायां कर्क उत्तरस्यां एवं सिंहादयो धनुर्मीनान्तः पश्च पूर्वादिषु ज्ञेयाः हानिमिति
दिक्प्रतिलोमलग्ने विपरीतदिगवस्थिते लग्ने यथा पश्चिमायां मेषः उत्तरस्यां वृषः पूर्वस्यां मिथुनः दक्षिणस्यां कर्कः एवं पुनः पश्चिमादिषु सिंहाद
योधनुराद्यश्च ज्ञेयाः तादृशे लग्ने गंतुः यात्रा हानिं द्रव्यादिनाशं शत्रुतो भयं च कुर्यात् दिग्द्वारभे लग्नगते यात्रार्थविजयप्रदा लग्ने दिक्प्रतिलोमे सा
हानिदा शत्रुभीतिदेति वराहोक्तेः ४७ अथ शुभलग्नानि वसंततिलकयाह राशिरिति गंतुः पुंसः स्वजन्मसमये यो राशिः शुभग्रहैश्चन्द्रबुधगुरुशुक्रैः

दिग्द्वारभे लग्नगते प्रशस्ता यात्रार्थदात्री जयकारिणी च हानिं विनाशं रिपुतो भयं च कुर्यात्तथा दिक्प्रतिलोमलग्ने ४७॥
राशिः स्वजन्मसमये शुभसंयुतो यो यः स्वारिभान्निधनगोऽपि स वेशिसंज्ञः लग्नोपगः स गमने जयदोऽथ भूपयोगे गमो वि
जयदो मुनिभिः प्रदिष्टः ४८ सूर्यः सितो भूमिसुतोऽथ राहुः शनिः शशी ज्ञश्च बृहस्पतिश्च प्राच्यादितो दिक्षु विदिक्षु चापि दिशा
मधीशाः क्रमतः प्रदिष्टाः ४९ केंद्रे दिगधीशे गच्छेदवनीशः लालाटिनि तस्मिन्नेयादरिसेनाम् ५० ॥ ॥ संयुतोऽस्ति स राशिर्यात्राल

ग्नोपगः शुभः अथवा स्वारिभात् स्वशत्रुजन्मराशिजन्मलग्नादष्टमो यो राशिः स चेद्यात्रालग्नोपगतः शुभः स्यात् अथ यो राशिर्वेशिसंज्ञः जन्मसम
ये सूर्याक्रांतराशेर्द्वितीयो राशिर्वेशिसंज्ञः स चेद्यात्रालग्नोपगः स्यात् तदा गमने जयदः स्यात् अथवा भूपयोगैर्जातके कथितयोगैर्यात्रालग्नस्थितैर्गमो मुनि
भिर्विजयदः प्रोक्तः जातके राजयोगा द्रष्टव्याः ४८ अथ दिक्स्वामिन उपजातिकयाह सूर्यः सित इति स्पष्टार्थः ४९ अथ दिगीशप्रयोजनं मध्याछंदसाह केंद्र इ
ति तस्मिन् दिगीशे ललाटिनि सति अरिसेनां नेयात् न गच्छेत् ५० ॥ ५० ॥ ५० ॥ ॥ ॥ ॥ ॥

अथ ललाटियोगानुशार्दूलविक्रीडितेनाह प्राच्यादीदिति प्राच्याद्यष्टदिक्क्रमेण विलग्नसदनात् एतच्चमावश्यकं ग्रहाः स्थिताः तमोनवाष्टमगृहे सैनी
राक्यार्थः यथा तनौलग्नस्थः तरणिः सूर्यः प्राच्यांगं तु ललाटिकः एवं भृगुस्सुतो लाभव्यये आग्नेय्यां कर्मस्थो भूसुतो दक्षिणस्यां तमोनवाष्टमगृहे
कैत्याम सौरिः सप्तमे पश्चिमायां चंद्रः शत्रुगृहात्मजे वायव्यां बुधः पाताले गउत्तरस्यां गीष्पतिर्वित्तभ्रातृगृहे ईशान्यां गते ललाटिक इत्यर्थः कश्यपेनतु स
कैत्याम सौरिः सप्तमे पश्चिमायां चंद्रः प्राच्यां दिशि सूर्ये ललाटगः सूर्यस्य राशितस्तस्मात् द्वादशेल
येराशिवशेन ललाटिका उक्तास्ते यथा दिनेशाधिष्ठितो राशिर्यदा लग्नगतस्तदा यातुर्मृत्युप्रदः प्राच्यां दिशि सूर्ये ललाटगः सौहिके
ग्नेगृहे एकादशे वा आग्नेय्यां दिशि शुक्रो ललाटगः ललाटगः कुजो याम्ये दशमे लग्नगे गृहे लग्नगे नवमे राशौ वश्मेवापि नैर्ऋते ललाटगः
मीयातुर्द्रीक्तनिधनप्रदः लग्नगे सप्तमे राशौ शनिः प्रत्यक्ललाटगः षष्ठराशौ लग्नगते पंचमे वापि चांद्रमाः ललाटगो वायुदिशि यातुर्मृत्युप्रदस्तदा चतु

चंद्रः शत्रुगृहात्मजेपि च

प्राच्यादौ तरणिस्तनौ भृगुसुतो लाभव्यये भूसुतः कर्मस्थो गुतमो नवाष्टमगृहे सौरिस्तथा सप्तमे

बुधः पातालगो गीष्पतिर्वित्तभ्रातृगृहे विलग्नसदनाल्लालाटिकाः कीर्तिताः ५१ मृगे गत्वा शिवे स्थित्वा दितौ गच्छन् जयी

पून् मैत्रे प्रस्थाय शाक्रे हि स्थित्वा मूले व्रजंस्तथा ५२ प्रस्थाय हस्ते निलतक्षधिष्ण्ये स्थित्वा जयार्थी प्रवसेद्द्विदैवे ॥

र्थराशौ लग्नस्थे बुधः सौम्ये ललाटमः राशौ ततीये लग्नस्थे द्वितीये चंद्रपूजितः ललाटगश्चंद्रमौले दिशि यातुर्विनाशदइति अत्र ललाटव्यतिरिक्तेकं टक
स्थाने यदि दिग्धीशस्तिष्ठति तदा यात्रा शुभा ऽन्यथा शोभनेति त्वम ५१ अथ पर्युषितयात्रायोगचतुष्टयमनुष्टुभेंद्रवज्रयाचाह मृगेति प्रस्थायेति ग
हस्थ परिहायातव्या दिगभिमुखं कस्यचिद्दिष्टस्य गृहे गत्वा प्रस्थाय आर्द्रायां तस्मिन्नेव गृहे स्थित्वेषित्वा दितौ पुनर्वसौ गच्छन् तद्गृहं त्यक्त्वा ग्रामाद्बहिरेव गच्छ
न् रिपून्व्रजन् जयेत् अयमेको योगः एवमेवानुराधायां प्रस्थाय शाक्रे ज्येष्ठायां स्थित्वा मूले व्रजन् तथा जयेदित्यर्थः अयं द्वितीयो योगः ५२ तथा हस्ते प्रस्था
यानिलतक्षधिष्ण्ये स्वातीचित्रे स्थित्वा द्विदैवे विशाखायां जयार्थी भूपादिः प्रवसेद्देशांतरं गच्छेत् अयं तृतीयः ॥ ॥ ॥ ॥

वसंतपुष्येषु निजसीम्नि स्वनगरप्रांते वा स्थितः सन्नपि एकरात्रोषितः स्यात्तदाऽवनीशो राजा क्ष्मां भूमिं शत्रोरिति शेषः लभते जयेन प्राप्नोतीत्यर्थः अयं चतु
र्थो योगः ५३ अथ समयबलमनुष्टुभाह उषःकाल इति सन्शब्दश्चरणचतुष्टयेपि संबध्यते उषःकालः पूर्वां विना याने यात्रायां सन् एवं सर्वत्र वरा
हेणतु दिग्विशेषसमयविशेषप्रशस्तोभिहितः यथा पूर्वाह्णे तूत्तरां गच्छेन्मध्यान्हे पूर्वतो व्रजेत् अपराह्णे व्रजेद्याम्यामर्धरात्रे तु पश्चिमामिति ५४ अ
थ लग्नादि भावानां संज्ञा अनुष्टुभाह लग्नात्भावा इति हृन्मनः स्वांतं हृन्मानसं मन इत्यभिधानात् आगमः प्राप्तिः अन्यत्स्पष्टं एवंविधसंज्ञाकथनप्रयो
जनं तु क्रूरसाहित्ये तत्तद्भावानां पीडा शुभग्रहसाहित्ये तत्तद्भावानां शुभमित्यर्थः ५५ शालिन्या विशेषफलमाह केंद्रे कोण इति शुभग्रहाः यदि केंद्रे को

वसंतपुष्ये निजसीम्नि चैकरात्रोषितः स्यां लभतेवनीशः ५३ उषःकालो विना पूर्वां गोधूलिः पश्चिमां विना विनोत्तरां नि
शीथः सन् याने याम्यां विनाभिजित् ५४ लग्नाद्भावाः क्रमाद्देह १ कोश २ धानुष्क ३ वाहनं ४ मंत्रो ५ रि ६ मार्ग ७ आयुश्च ८
हृत् ९ व्यापारा १० गम ११ व्यया १२ ५५ केंद्रे कोणे सौम्यखेटाः शुभाः स्युर्याने पापास्त्र्यायषट्खेषु चंद्रः नेष्टो लग्नांत्यारिरं
ध्रे शनिः खे ऽस्तेशुक्रः कोलस्नेट् नगांत्यारिरंध्रे ५६ योगात्सिद्धिर्धरणिपतीनामृक्षगुणैरपि भूदेवानाम् ॥ ९६ ॥ २ ॥

णे १।४।७।१०।९।५ स्युस्तदा याने शुभफलदाः स्युः पापास्त्र्यायषट्खेषु ३।११।६।१० शुभफलदाः स्युः चंद्रो लग्नांत्यारिरंध्रे १।१२।६।८ नेष्टः अशुभ
फलदः शनिः खे दशमे नेष्टः शुक्रोस्ते सप्तमे नेष्टः लग्नेड् इति लग्नेट् याने लग्नस्वामी नगांत्यारिरंध्रे सप्तमद्वादशषष्ठाष्टमेषु चेत्तदा नेष्टः अशुभफ
लद इत्यर्थः गुरुः लग्नपो मृत्युदो याने रंध्रास्तारिव्ययोपगः केप्याहुर्भयदो धर्मेशोपस्थाने शुभावह इति ५६ अथ योगयात्राख्यामाख्याति तदारंभप्रयोजनमपा
राकुलकेनाह योगादिति धरणिपतीनां राज्ञां योगाद्वक्ष्यमाणयोगयात्रालग्नवशादिष्टसिद्धिर्वांछितकार्यनिष्पत्तिः स्यात् भूदेवानां ब्राह्मणानां
ऋक्षगुणैर्नक्षत्रगुणैश्चंद्रबलताराबलविहितनक्षत्रादिभिः सिद्धिर्भवति अपिशब्दात्संचागशकुनाद्याहिधनावश्यकता चौराणां वक्ष्यमाणैः शुभस्वकशकुनैः

सिद्धिर्भवति एतद्भिन्नानांमनुजानांमुहूर्त्तात् गिरिशभुजगमित्रादितिविहितनक्षत्रस्वामिकमुहूर्त्तात्सिद्धिर्भवति ५७ अथयोगयात्रालग्नंमंजुभाषिण्याह स
हजेरविरिति रविःसहजेतृतीयःस्यात् शशीचंद्रोदशमभेदशमस्थाने शनिमंगलौरिपुगृहेषष्ठस्थानेस्यातां सितःशुक्रःपंचमे बुधोहिबुकेचतुर्थे गुरुरपि
लग्नगंचेत्स्यात् एवंविधेयोगेराजाप्रचलितः अचिरात्स्वल्पकालेनैवारीन्जयतिवशीकरोतीत्यर्थः ५८ अथयोगांतरंगाथयाह भ्रातरिसौरिरिति॥
भ्रातरितृतीयेशनिः वैरिणिषष्ठेभूमिसुतोमंगलः अर्के आयगतेएकादशे एवंविधेयोगेराजाशत्रुजयोभवेत् चेदीड्यगुरुःशुक्रोऽनुकूलःयातव्यदिक्स्थ

चौराणामपिशकुनैरुक्ताभवतिमुहूर्त्तादपिमनुजानां ५७ सहजेरविर्दशमभेशशीतथाशनिमंगलौरिपुगेहिसितःसुतेहि
बुकेबुधोगुरुरपीहलग्नगःसजयस्यरीन्प्रचलितोऽचिरान्नृपः ५८ भ्रातरिसौरिर्भूमिसुतोवैरिणिलग्नेदेवगुरुःआय
गतेर्केशत्रुजयःस्यादनुकूलोदीड्यगुरुः ५९ तनौजीवइन्दुर्मृतौवैरिगोऽर्कःप्रयातोमहीद्रोजयत्येवशत्रून् ६० लग्नतःस्या
द्देवपुरोधाःलाभधनस्थैःशेषनभोगैः ६१ द्यूनचंद्रेसमुदयगेर्केजीवशुक्रेविदिधनसंस्थे ईदृग्योगेचलतिनरेशोजेता
शत्रून्गरुडइवाहीन् ६२ वित्तगतःशशिपुत्रोतरिवासरनाथः॥ ॥ र्वर्तीभवति ५९ अन्ययोगांतरंगाथयाह तनौजीवइति स्पष्ट

र्थः तथाचनारदः जीवार्कचंद्रालग्नारिरंध्रगायदिगच्छतः तस्यापिसबलमैत्रीचनस्थिरारिपुवाहिनीति ६ अथान्ययोगंपंक्त्याह लग्नगतइति लग्ने
गुरुःस्यात् अन्येग्रहालाभधनस्थाःएकादशद्वितीयस्थाश्चेदेवंविधेयोगेराज्ञोविजयः ६१ अन्ययोगंमत्तमाह द्यूनेइति चंद्रेसप्तमस्थेसति अ
र्केसमुदयगेलग्नगेसति जीवशुक्रे विदिबुधेएतेषुत्रिषुधनसंस्थेषुसत्सुएवंविधेयोगेनरेशश्चेत् चलतितदाशत्रून्जेताजेष्यति कःकानिवगरुडो
हीन्सर्पान् यथाजयति ६२ अथान्ययोगंचित्रपदयाह वित्तगतइति बुधोद्वितीये वासरनाथःसूर्यस्तृतीये शुक्रेलग्नेएवंविधेयोगेचेद्राजाचलतितदा

शलभाइवस्युः यथा शलभा अग्नौ स्वयमेव गत्वा पतंति तथा शत्रवोऽपि गंत्वराजभक्ता पानले प्रतिष्यंतीत्यर्थः ९३ अथान्यं योगं माथयाह उदयेरविरिति
उदयेरविः शनिः षष्ठः चन्द्रो दशमः स्यात् एवंविधे योगे वसुधापतीराजायदि याति तदारिपुवाहिनी शत्रुसेनावशामिति ९४ अथान्य योगद्वयं जलोद्धतगत्या
ह तनौ शनिकुजाविति इति आरभ्य वसुधापतिर्यदि याति रिपुवाहिनी वशमे नीत्युत्तरार्द्धं सहजे कुजे इत्येतत्पर्यन्तमनुवर्त्तते तेन यत्र निर्देशो नास्ति तत्र जि
गमिषो राज्ञो विजयः स्यादितिवाक्यार्थो ज्ञेयः तनौ लग्नस्थौ शनिमंगलौ स्यातां रविर्दशमे बुधो लाभे दशमे स्यात् भृगुसुतो वा लाभे दशमे वा स्यात् एवंविधे
नग च चलितस्य राज्ञोऽयमेको योगः अथ द्वितीयः त्रिलाभरिपुभेषु ३।११।६ एष्वन्यतमस्थानस्थितौ भूसुत शनी स्यातां यस्मिन्कस्मिंश्चित्स्थाने गुरुश्च

लग्नगते भृगुपुत्रे स्युः शलभा इवसर्वे ९३ उदयेरविर्यदि सौरिररिगः शशी दशमेऽपि वसुधापतिर्यदि याति रिपुवाहिनी चश
मेति ९४ तनौ शनिकुजौ रविर्दशमभे बुधो भृगुसुतोऽपि लाभे दशमे त्रिलाभरिपुभेषु सुतशनी गुरुज्ञ भृगुजास्तथा बलयु
ताः ९५ समुदयगे विबुधगुरौ मदनगते हिमकिरणे हिबुकगतौ बुधभृगुजौ सहजगताः खलखचराः ९६ त्रिदशगुरुस्तनुगो
मदने हिमकरणो रविरायगतः सितशशिजावपि कर्मगतौ रविसुत भूमिसुतौ सहजे ९७॥ ॥ भृगुजा बलयुताः स्युस्तदा ए

वंविधे योगे तथा राज्ञो विजय इत्यर्थः ९५ अथान्यं योगं त्वरितगतिश्चनजनमौ रित्यनेन छंदसाह समुदयगे इति समुदयगे लग्नस्थे बृहस
तौ सति हिमकरणे चंद्रे मदनगते सप्तमस्थे सति चतुर्थस्थौ बुधशुक्रौ स्यातां खलखचराः पापग्रहाः सहजगताः तृतीयगाः स्युः एवं विधे योगे वसु
धापतिर्यदि याति रिपुवाहिनी वशमेति ९६ अथान्यं योगं समुख्यानजलजगैर्गर्हिंतास्फुरवातिलक्षणलसितयाह त्रिदशगुरुरिति बृहस्पतिर्लग्ने
चंद्रः सप्तमे शुक्रबुधौ दशमे सूर्य एकादशे शनिमंगलौ सहजगताः तृतीये एवंविधे योगे गंतू राज्ञो विजय एव ९७ ॥ ९७ ॥ ९७ ॥

अथान्यंयोगंस्यादनुकूलाभतनगगश्चेतिलक्षणलक्षितयानुकूलयाह देवगुराविति गुरौचंद्रेवालग्नेराति सूर्येषष्ठेबुधःपंचमस्थानेशानिर्दशमशक्रश्च
तुर्थेस्यात् एवंविधेयोगेजिगमिषोराज्ञोविजयएव ६८ अथान्ययोगंननररघटितानुमंदाकिनीतिलक्षणलक्षितयामंदाकिन्याहहिमकिरणइति बु
धोवलीचिंत्रनोलग्नेस्यात् हीतिनिश्चयेनबृहस्पतिश्चकेंद्रगतः यदिनिर्बलोनीचाद्यशुभाधिकारप्राप्तोबलरहितःसन्द्वादशतृतीयषष्ठनवमाना
मन्यतमस्थानस्थश्चंद्रस्तथैवंविधयोगेगंतुराज्ञोविजयएव ६९ अथान्ययोगंअभिनवतामरसनजजायत्विलक्षणलक्षितनाभिनवतामरसवृंदसा
ह अशुभखगैरिति अशुभग्रहैःअनवाष्टमदनस्थैःनवमाष्टमसप्तमस्थानव्यतिरिक्तस्थानस्थैःकविःशुक्रःचतुर्थतृतीयैकादशस्थानस्थःकेंद्रगे

देवगुरौवाशशिनितनुस्थेवासरनाथेरिपुभवनस्थे पंचमगेहेहिमकरपुत्रःकर्मणिसौरिःस्फुटदिसितश्च ६८ हिमकिरणसु
तोबलीवतनौत्रिदशपतिगुरुर्हिकेंद्रस्थितः व्ययगृहजारिधर्मस्थितोपरिभवतिनिर्बलश्चंद्रमाः ६९ अशुभखगैरनवा
ष्टमदस्थैर्हिबुकसहोदरलाभगृहस्थःकविरिहकेंद्रगगीष्पतिदृष्टोवसुचयलाभकरःखलुयोगः ७० रिपुलग्नकर्म
हिबुकेशशिजेपरिवीक्षितेशुभनभोगमनैः व्ययलग्नमन्मथगृहेषुजयःपरिवर्जितेषशुभनामधरैः ७१ लग्नेयदि
जीवःपापायेदिलाभेकर्मण्यपिचेद्राज्याधिगमःस्यात्॥ ॥ तोगीष्पतिर्गुरुस्तेनदृष्टः एवंविधेयोगेवसुचयोद्रव्यसमूहस्तस्यला
भकरःस्यात् ७० अथान्ययोगंपात्रालग्नंप्रमितासरासजसमैरुदितेतिलक्षणलक्षितयाप्रमिताक्षराछंदसाह रिपुलग्नेति षष्ठलग्नदशमचतुर्था
नामन्यतमस्थानस्थेबुधेशुभनभोगमनैःशुभग्रहैःपरिवीक्षितेदृष्टेसतिव्ययद्वादशलग्नसप्तमस्थानव्यतिरिक्तस्थानस्थितैरशुभनामधरैःपापग्रहैरु
पलक्षितेसतिएवंविधयोगेजिगमिषोराज्ञोविजयएव ७१ अथान्ययोगद्वयंस्यौस्यौमणिमालाछिन्नागुहवक्त्रैरितिलक्षणलक्षितयाह लग्नेइति।
लग्नेगुरुःपापग्रहायेदिलाभेएकादशेकर्मण्यपिदशमेपिचेत्स्युःएवंविधयोगेप्रचलितस्यराज्ञोराज्याधिगमःराज्यप्राप्तिःस्यात् अथवाद्यूनेसप्तमे

बुधशुक्रौस्यातांचंद्रोहि ॥ चतुर्थेस्या॰एवंविधयोगेसर्वैर्मुनिवर्यैस्तद्दृस्फलमुक्तंराज्याधिगमःस्यात् ७२ अथान्ययोगत्रयंननननगुरुभिश्चंद्रिकाश्चतु
भिरितिलक्षणलक्षितेनचंद्रिकाछंदसाह रिपुरिति अत्रस्थानांग्रहाणांचसाम्यायथासंख्यमन्वयः यथा रिपौषष्ठेशुक्रः लग्नेजीवः अष्टमेचंद्रः एवंवि
धेयोगेगंतृराज्ञोविजयएव अयमेकोयोगः अथद्वितीयः बुधभृगुजौतुर्यगेहस्थितौचतुर्थस्थानस्थौस्यातां चंद्रमामदनभवनगः सप्तमस्थानस्थः एवंवि
विधेयोगेगंतृराज्ञोविजयएव अथतृतीयोयोगः वाचंद्रमा अंबुगः चतुर्थगः शशिस्रुतभृगुजयोरंतर्गतत्वंएकराशावेवज्ञेयं अन्यथाचतुर्थस्थानस्थचंद्रस्य
बुधशुक्रकृतदुरधरायोगमेघावस्तत् ७३ अथान्ययोगद्वयंसज्जससगोवकथितः कलहंसइतिलक्षणलक्षितेनकलहंसछंदसाह सितेति लग्नेशुक्रः

घूनिबुधशुक्रोचंद्रोहिबुकेवातद्दृस्फलमुक्तंसर्वैर्मुनिवर्यैः ७२ रिपुतनुनिधनेशुक्रजीवेंदवोत्यथबुधभृगुजौतुर्यगेहस्थितौ
मदनभवनगश्चंद्रमावांबुगःशशिस्रुतभृगुजांतर्गतश्चंद्रमाः ७३ सितजीवभौमबुधभानुतनूजास्तनुमन्मथारिहिबुकत्रि
गृहेचेत् क्रमतोरिसोदररवशात्रवहाराहिबुकायगैर्गुरुदिनेखलंदे: ७४ सहजेकुजोनिधनगश्चभार्गवामदनेबुधोर
विरौतनौगुरुः अथचेत्पुरीज्यसितभानवोजलत्रिगताहिसौरिरुधिरौरिपुस्थितौ ७५ ॥ ९सप्तमेजीवः षष्ठेभौमः चतुर्थेबुधः तृ

तीयेशनिः एवंविधेयोगेगंतृराज्ञोविजयएव एकोयोगः अथान्यः गुरुदिनेबृहस्पतिवारे अखिलखेटैः समस्तैर्ग्रहैः सूर्यादिभिः क्रमतोरिसोदरेत्यादि
स्थानस्थितैर्यथा षष्ठेर्कः तृतीयेचंद्रः दशमेभौमः षष्ठेबुधः लग्नेगुरुः चतुर्थेशुक्रः एकादशेशनिः एवंविधेयोगेपिगंतृराज्ञोविजयएव ७४ अथान्ययो
गद्वयंसज्जससनगौवकथितमत्तबोधितेतिलक्षणलक्षितमत्तबोधिकाछंदसाह सहजेइति तृतीयेभौमः अष्टमेशुक्रः सप्तमेबुधः षष्ठेसूर्यः लग्नेगुरुः एवंवि
धेयोगेगंतृराज्ञोविजयएव अयमेकोयोगः अथान्यः अथेति ईज्यसितभानवोगुरुशुक्रसूर्याः जलत्रिगताः चतुर्थतृतीयस्थानस्थाः सौरिरुधिरौशनिमंग
लौषष्ठस्थितौ एवंविधेयोगेहिनिश्चितंराज्ञोजयःस्यात् ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥ ७५ ॥

अथनाम विशेषपुरस्कारेणयोगत्रयंसफलंशार्दूलविक्री।डितेनाह एकइति ज्ञेज्यसितेषुबुधगुरुशुक्रेषुएकोपिबुधोवागुरुर्वाशुक्रोवाचेत्पंचमतयः केंद्रेषुतदायो
गाख्योयोगः तथातेषुज्ञेज्यसितेषुद्वौचेत् बुधगुरू बुधशुक्रौगुरुशुक्रौवाचेत्पंचमतयः केंद्राणामन्यतमस्थानेस्थानभेदेनस्थानेक्येनवास्थितौस्यातांतदाधि
योगाख्योयोगः सकलाः ज्ञेज्यसिताः एषुपंचमतयः केंद्राणामन्यतमस्थानेषुस्थानभेदेनस्थानैक्येनवास्थितास्तदायोगाधियोगाख्योयोगः फलमाह योगइ
ति योगेव्रजन्राजाक्षेमंकुशलंलभतिकुशलेनगतागतंकरोतीत्यर्थः अथाधियोगेव्रजन्राजाक्षेमंतथारिपूणांवधंचलभते अथयोगाधियोगेव्रजन्राजा
क्षेमंयशोवनीश्वकाराच्चतुष्टयंचलभते अत्रवसिष्ठादिभिर्बहूनियात्रालग्नानिअभिहितानितानितन्मतेस्मयेवावधार्याणि ७६ अथान्यपिया
त्रायोगालिख्यंतेकश्यपः पंचमेज्ञोरविः षष्ठेवत्तेतनवमेगुरुः माम्ययोगाभिधेयोगेनिहंतावैरिणांसदा १ गुरुःकेंद्रेत्रिकोणेवारविर्लाभेचकर्मणिकल्याण

एकोज्ञेज्यसितेषुपंचमतयः केंद्रेषुयोगस्तथाद्वौचेतधियोगएषुसकलायोगाधियोगःस्मृतः योगेक्षेममथाधियोगगमने
क्षेमंरिपूणांवधंचाथोक्षेमयशोवनीश्वलभतेयोगाधियोगेव्रजन् ७६ ॥

॥योगोनृपस्ययातुःकल्याणकृद्भवेत् २ दिगीशोदिग्व
लीचेत्स्याल्लग्नेस्यास्यसेत्स्य २ विजयोनामयोगोयंयाताराजाजयीभवेत् ३ अत्रिःसहजस्थानगोभौमोभाग्यस्थश्चबृहस्पतिः चिंतामणिसमाख्यो
यंयातुःसर्वार्थपूरकः ४ लग्नेशुक्रःशशीवंधौकर्मस्थानेगुरुर्यदा मृगेंद्रयोगोविख्यातोयातुःसर्वार्थसाधकः ५ लग्नेभौमोगुरुश्छिद्रेषष्ठस्थानेशुक्र
रः मत्तुंजयसमाख्योयंसर्वशत्रुनिबर्हणः ६ आपोक्लिमगतेचंद्रेकेंद्रस्थेसम्पूजिते योगःकेंद्रइतिख्यातोयातुरिष्टार्थसिद्धिदः ७ चंद्रोदयेगुरुर्भाले
लग्नेवास्करपूजिते सिद्धःपाराषतोयातुःशुक्रेवालग्नकेंद्रगे प्रबलोयदियोगोसौगमनेसर्वसिद्धिदः ७ रविःषष्ठेसितश्छिद्रेतृतीयेभूमिनंदनः पिमाकियोगो
[illegible]र्विजयकारकः १० अन्योन्यक्षेत्रगावेकक्षेत्रेवाकविभास्करौ मृत्युयोग[illegible]कः ११ ॥ [illegible] ॥ ११ ॥ ८

उच्चस्थेत्रगतश्चंद्रोत्यसौम्यश्च र विर्गुरुः संजीवनसमाख्योयंमृत्युयोगापहारकः १२ एकर्क्षगौजीवशुक्रौस्यातामन्योन्यसप्तगौ भयंकराख्ययोगोयंयातु
र्भीतिप्रदःस्मृतः १३ उच्चमूलत्रिकोणेषुवर्त्ततेगुरुभार्गवौ अभयाभिधयोगोस्ति भयंकरविनाशनः१४ भार्येशोव्ययगोनीचःपुत्रस्थानेशनैश्चरः
विदारिकसमाख्योयंयातुःपत्नीनिहंत्यसौ १५ मार्गेशःशनिसंयुक्तःसप्तमस्तेगतोग्रहः विदारिकमिमंमन्यायातुःपत्नीविनाशकं १६ सप्तमेभूसुत
स्तस्मात्सप्तमेनष्टखेचरः कुटुंबहारकोयोगोयातुःत्रिपतमोहरेत् १७ दुर्बलोयदिमार्गेशोनिवसेत्पापमध्यगः पापकुंजरयोगोयंयातुःपत्नीनिहंत्यसौ १८ कु
मार्गेशात्सप्तमेभानुःपञ्चमेक्रूरखेचरः विदारिकाख्यएवासौभार्यामरिवशंनयेत् १९ स्वोच्चमूलत्रिकोणस्थःसौम्यःपापविवर्जितः आनंदार्णवयोगोयंभे
र्मणिवज्रयावहः २० रत्नावल्यांउदयारिनभस्तलगेदिनकृधमशीतकरैः नभवंत्यस्योभिमुखाहरिणाइवकेसरिणः २१ दैवज्ञवल्लभेज्ञेसितनसहितेस्त
गेविधौबंधुगेप्रवसतामहीभुजा संगरेरिपुगणोविकीर्यतेमूलमाशिखिमातरिश्वना २२ मूर्त्तिवित्तसहजेषुसंस्थिताःशुक्रचंद्रसुततिग्मरश्मयः यस्य
यानसमयेरणांगणेतस्ययातिशलभाइवारयः २३ यात्राशिरोमणौ यायातिजीवतनुमेमहीशःक्रूरस्थितैर्व्ययलग्नयवायसंस्थैः तस्याग्रतःसंयतिवैरि
सेनांश्रीतिर्भूपाणामिवनास्थिरास्यात् २४ राजमार्त्तण्डः लाभारिदुश्चिक्यगतौयमारौबलान्वितभार्गवसौम्यौ यस्यप्रयाणेविलयंप्रयातितस्यद्वि
षःसर्वरसंयथाम्भः २५ फलप्रदीपे लाभविक्रमसुतस्थितेकवौकंटकस्यगुरुणानिरीक्षिते चूनरंध्रभवचार्जितैःखलैःस्याद्धताभिमुखमिद्विभा
कृन्नृपः २६ सौम्यग्रहैःकेन्द्रतपःसुतस्थैःक्रूरैस्त्रिलाभारिगतैर्गतायेकोपानलःशांतिमुपैतितेषांविरोधिनारीनयनांबुपातैः २७ वराहः एकोपि
जीवार्ककुजार्कजानांस्वोच्चेविलग्नेस्वगृहेयदीन्दुःयातस्ययात्यत्रपराश्रणाशंमहाकुलानीवकुटुंबभेदैः २८ चंद्रेस्तगेदेवगुरौविलग्नेज्ञशुक्रयोः
कर्मणिलाभगेर्के सौरारयोर्भ्रातृगयोश्चयातोनृपःस्वमृत्यानिवशास्तिशत्रून् २९ नारदः स्वोच्चस्थेलग्नगेजीवेकेंद्रेप्याप्यगतेयदि गताराजारिपून्हंतिपि
नाकीत्रिपुरंयथा ३० शुक्रेत्रिकोणकेंद्रस्थेलग्नेचंद्रेयवारवौ शत्रून्हंतिगतोराजाब्रह्मद्वेषःकुलंयथा ३१ पापास्त्वरीयेहिबुकेसितज्ञौगौराविलग्ने
मृगलांछनोसौ यस्यास्तगस्यबलंरिपूणांकृतघ्नेष्विवयातिनाशम् ३३ यस्योदयास्तारिचतुस्त्रिसंस्थाःशुक्रोगिरांगारकसौम्यसौराः द्विषद्बलंस्त्रीवदना

नितस्यक्क्रांतानिकांतानविलोकयंति ३३ पूर्वोक्तयोगेधनगोवुधश्चेच्छशांकस्सूर्यौचदशायसंस्थो अस्मिनातस्यालिकुलोपगीतानानावनस्थाद्विरदा
भवंति ३४ वर्गहः त्रिषण्णवांसेषवलःशशांकोवुधोवलीयस्यगुरुश्चकेंद्रेतस्यारियोषाभरणैः प्रियाणि प्रियाप्रियाणांजनयंतिसैन्ये ३५ चंद्रोपवलःवु
धोवलीउभौचत्रिषण्णवांसेषुएवभवतस्तदायोगः केंद्रोपगतेनवीक्षितेगुरुणास्वायतुर्यगसितेपापैरनवाप्तसंश्रयेवक्तिंनयदाभुपः नृपः ३६ षष्ठ
स्थगोशुक्रवुधौभयाणेक्रूरेशापूज्योभगनेयदिस्यात् रिपुःप्रणाशंविषयेषुसौख्यंचाप्नोतिकीर्त्तिंविपुलंचभोगं ३७ वलाभारिगते ऽ केपुत्रेचतुर्थगेहे
स्वगुरौपयाति यदापुमान्सहिरिंद्रयानंकीर्त्तियशःसिद्धिसहस्रमेति ३८ केंद्रस्थानेक्रूरपतिगुरौकंटकस्थक्रुजे सौम्येचसप्तिचपष्टावरिमंदु यदि
स्यात् येषांक्रूरारिपुसहजगाराहुकेतवप्रभूतावायुःकीर्त्तिद्रविणमतुलंतेलभंतेयशश्च ३९ मूर्तौशुक्रेक्रूरपतिगुरौ त्रिकोणेकेंद्रस्थानेशान्वि
कुजालाभगावायदिस्युः येभूपायांतिशत्रुविपुलधनमथोसैन्यनाशंरिपूणांकीर्त्तिं मृथितरिपवस्तेक्रूरवादाव्रजंति ४० होरासंस्थक्रूरपति
गुरौभार्गवेकंटकस्थेषष्ठे चंद्रेव्रजतियदिवाकार्ययोगात्सितीशः प्राप्नोत्यग्रंकनककुरंगस्यरत्नादिकोशमायुःकीर्त्तिंजयतिचतदामत्तमातंगयूथम्
४१ लग्नारिकर्महिबुकेषुशुभेक्षितेषुपूर्नान्यलग्नरहितेषुशुभग्रहेषु यातुर्भयंनभवतिप्रतरेत्समुद्रंयद्यस्मनापिकिमुनारिसमागमेषु ४२ एकांतरस्थे
भृगुजाद्यासौम्येस्थिते सूर्यसुताद्गुरोर्वा प्रयाणकालेऽरिनिविराकृतस्तेभवेषाधिकोभृत्यइवेश्वरस्य ४३ शुक्राद्भौमाद्गुरोराज्जीवाद्वाबुधः एकांतरेत्तृतीयस्थानेयत्र
कुत्रस्थानयोगः निरंतरंयत्रिभवनेषुपवक्रग्रहाः स्थितोदिवसंकरेणवर्जिता यियासितोयदिचभवंतिएष्ठतस्तदापराबलभिर्द्विवाचकृतंति ४४ प्राक्कपा
लस्थैर्गतं अपरकपालस्थैःप्राच्यांसमध्यस्थैरुत्तरदिशि अर्द्धरात्रस्थैर्दक्षिणादिशि बुधभार्गवमध्यगतेहिमगौहिबुकोपगते
वनं पवसेत् स्वांतकृतःपुरुहूतयमंप्रति ४५ सितेदुजौचतुर्थगौनिशाकरश्चसप्तमे यदानरागतोनृपःप्रशास्त्यरीन्वितारणात् ४६
शुक्रेवाक्पतिबुधे लग्नसंस्थैः सप्तमेराशिनिलग्नगतेऽर्के निर्गतोनृपतिरेतिकेलार्थी वर्षतियदरीन्विनिहत्य ४७ सर्येन्दुबलवर्जितौबलयुतौलग्नेशजौ
रोपानाले दशमेपिवोपाशिक्रतोलग्नस्थितोवाक्पतिः षट्सप्ताष्टमवर्जितेषुभृगुजःस्थानेषुयस्यास्थितो यातुस्तस्यन विद्विषोरणमुखेनिष्ठंतियोपाद्वे

मु० रा०
१०७

सौरे सौमे लग्नगेर्के खमध्येमर्मण्याये भार्गवे चन्द्रजे वा यायाद्भूपः शत्रुगेहं निहंतुं हंतुं शत्रुं कालवत्क्रूरवेष्टः ४९ गुरौ विलग्ने यदि वा शशांके षष्ठे रवौ के
मगते र्कपुत्रे सितकु र्यार्बन्धुस्कतश्च पेश्चयात्राजनित्री वहिता निधत्ते ५० त्रिनिधेनतनुसप्तमारिस्थैः कुजसितजीवबुधारविश्चयस्य स्वलग्नज
निते र्ललीकापायालभवतितस्य चिरायशत्रुसेना ५१ कुजरविजसुते रिभंगतेनांजलस्थसहजायगतेः सितार्कजीवैः परबलमुपयाति नाशमष्टैर्गुरु
तमधर्मस्थकुटुंबगितयेवा ५२ भृगुपुत्र महेन्द्रगुरुगमनेसहितौ यदि भंयुगपृत्यजतः ज्ञगुरुयदि वांशकमेतकगतौ सामरेमराडिवमातितरां शु
स्मितिलनयपुतानवांशजयदि शत्रुमे भृगुजोथवा गुरुः शत्रुगणमपि हंत्सरे बलं विषमिव कायमसत्कृपथापगम् ५४ स्वोच्चापगेजीवकुजार्के
रेभिस्त्रिभिर्वाकथितैरकलग्ने राज्ञः प्रणाशं समुपैति शत्रुः सौख्यं हि भार्यस्य यथाऽऽधनस्य ५५ शत्रांशकादूर्ध्वमवस्थितेबुधेयमारयोस्तत्रगतस्य
भूभृतः प्रयाति नाशं समरे द्विषद्बलं यथार्थिभावोपगतस्य गौरवम् ५६ भौमाधिष्ठितनवांशगाद्यदि बुधो नवांशकशतादूर्ध्वंस्तिष्ठति एवं शनेरपि
सिंहाजतौलिमिथुनामृगककर्कटौ च स्वस्वशान्विताः भवन्ति यस्य शनिश्च लग्ने तवैत्रिकाः परबलंक्षपयंतु यातुर्मेर्खस्य वित्तमिव वारणवद्दृमंस्थाः ५७
वक्राधूर्त्ताःमत्ताअर्गकवादिनः अथसमरयात्रा गुरौ वीर्यकेन्द्रयुते बुधे वा भृगुनंदने विजयोनामयोगेयं यातुर्विजयदः सदा ५८ स्वराशिगे बुधे
लग्ने सिते वास्फुरवंदिने नद्यावर्त्ताह्वयोयोगोयातुरिष्टार्थसिद्धिदः ५९ स्वांशासंस्थे बुधे लग्ने शुक्रे वा देवपूजिते शरवसंज्ञाह्वयोयोगो ...
दःसदा ६० स्वराशौ स्वांशगे सौम्ये लग्नस्थे वा भृगोः सुते जीवे वा वज्रयोगोयं यातुःशत्रुविनाशकृत् ६१ अधिमित्रांशगे सौम्ये मित्रे वाथ सुराचिते लग्न
गेमात्स्योमायं शत्रूणां संधिकृत्सदा ६२ यत्रैकादशगश्चंद्रो भानुर्वा प्रबलःशुभः अभयो नाम योगोयं अरिभूतिविनाशकृत् ६३ त्रिकोणगे शुभेखेटे
सबले वा द्वितीयगे कल्याणसंज्ञो योगोयं यायिनां मंगलप्रदः ६४ यत्र स्वोच्चगतश्चंद्रो लग्नादेकादशेस्थितः जयंतो नाम योगोयं शत्रुपक्षविनाशकृत् ६५ व
र्गोत्तमस्थितेलग्ने शुभे वाथ बलान्विते शुभग्रहयुतैः केन्द्रैर्योगोयं सिद्धिदायकः ६६ षष्ठे वायगते सूर्ये नामगेहरसंज्ञकः योगो महारणे शत्रुपक्षक्षयकरः सदा
६७ १

उच्चस्थेऽलाभगे शुक्रे त्रिषष्ठे देवपूजिते सुदर्शनो महायोगः शत्रुध्वंसकरो रणे ६८ लग्नान्यकेंद्रगे चंद्रे लग्नस्थे देवपूजिते महाशंखाह्वयो योगः नृतिपक्षाव
मानवः ६९ भूसुते स्वोच्चगे लाभे मृगकुंभगते यमम् नयाक्ताह्वयो योगो रणे शत्रुवणानलः ७० मेषगे भास्करे षष्ठे लाभगे स्वोच्चगे यमे नक्षत्रपदयोगोयंश
त्रुमेघानिलो रणे ७१ भौमे स्वराशिगे लग्ने सौम्ये केंद्रत्रिकोणगे पुष्पयोगो रिपुविपिनकुठारः संगरांगणे ७२ एकांतरग्रहेते लग्नाच्छुभखेटे स्थले [illegible] भे
वापीयोगस्त्वरिव्राततिमिरौघदिवाकर आवश्यके नृयाने सौम्योस्ते निधनेपि वा व्रजेदर्कोदये स्तेषाम [illegible] शंकित ७४ प्रश्न [illegible] तितारकास्त
टतटी प्राची भवेन्निर्मलात्वीषद्रक्ता किलो हितानधवलाद्देवैः सदा वांछिता नो वारं न तिथिं न चापि करणं लग्नं च नापेक्ष्य हत्वा दोषसहस्रकं च रमसंगुरु [illegible] तं करोत्यु
न्नतिं ७५ मध्यं व्योम प्रतिस्फुरदनलनिभे केसरेरार्कबिंबे छायासाध्वी च कान्ता प्रवलतिपुरस्मे यत्र तत्याद्दलग्नातावत्सोपरि र्नविष्टिः कुजाक्ष्म [illegible]

इषमासिसितादशमी विजया शुभकर्मसु सिद्धकरी कथिता श्रवणर्क्षयुता सुतरां शुभदा नृपतेस्तु गमे जयसंधिकरी ७७ चे
तो निमित्तशकुनैरतिसुप्रशस्तैर्ज्ञात्वा विलग्नबलमुर्व्यधिपः प्रयाति॥ छ॥ ॥ लग्नयोगः सन्मानारोग्यसंपत् क्षितिमथ युवतिं तत्र गं

ताल भेत ७६ पार्वति सिंदूरवर्ण गगनतलगतं भानुबिंबं जनास्तं यावन्नोदिक्शांतिं व्रजति सुरपुटे रुद्रतो रेणुसंगः तावन्नैवास्ति दोषः प्रभवति नवसाक्रूरदृष्टिर्गृहश
णंपाचासावा विवादे सत्कृत्शुभकरी सर्वकार्येषु सिद्धिः ७८ इत्यलं ग्रंथविस्तरेण इति यात्रालग्ने राजयोगाः अथ विजयादशमीसंज्ञकं सिद्धमुहूर्तं तोटके
नसगणचतुष्टयेनाह इषमासीति स्पष्टार्थः कश्यपः मासीषे शुक्लदशमी सर्वदा विजयाभिधा विजयस्तत्र यातॄणां संधिर्वानपराजय इति ७७ अथान्यदप्युत
तिलकेनाह चेतोनिमित्तेति चित्तोत्साहः करणम् निमित्तमंगस्फुरणादि शकुनानि वक्ष्यमाणानि एतैः सुप्रशस्तैः सद्भिः खलु निश्चयेन लग्नबलं ज्ञात्वा [illegible] धिपो
राजा प्रयाति तदा सर्वसिद्धिर्वाञ्छितसिद्धिर्भवति यदा तु लग्नाद्विबले सत्यपि निंद्यानि शकुनानि स्युः तदा यात्रा निषिद्धैव वसिष्ठः अशुभानि निमित्तानि उत्सात
शकुनानि च यात्राकाले नृणां तेषां निधनायाधनाय चेति यदा तु दैवज्ञात्॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ राम

शकुनलग्नादीन्यनिंद्यानि चेतो विशुद्धिश्च नास्त्येवात्र कस्य प्राबल्यमित्याह अथेति शकुनादितोपि सकाशात् चेतोविशुद्धिरधिका तां चेतोविशुद्धिं विनाने
यात् न गच्छेत् कश्यपः निमित्तशकुनादिभ्यः प्रधानं हि मनोजयः तस्माद्धियान्सुतान्नृणां प्रधानं हि मनोजय इति ७८ अथ यात्रायामवश्यनिषिद्धनिमित्तानि व
संतमालिका छंदसाह तल्लक्षणं विषमे ससजगौ समे चेत् सभरयश्च वसंतमालिका सा विषमसमचरणे व्रतबंधनेति व्रतबन्धनं यज्ञोपवीतम् देव[illegible]
सिद्धाकरपीडा विवाहः उत्सवो होलिकादि सूतकान्ते मरणसूतकं च एषां समाप्तिं यावद्दिनसमाप्त्यानामसमाप्तौ समाप्तिं विना कदापि नैव चलेत् न गच्छेत्
नारदः उद्वाहव्रतचौलेषु प्रतिष्ठाशौचसूतके आसमाप्तेर्न कुर्वीत यात्रां तत्र जिजीविषुरिति अकालेति विद्युत्प्रसिद्धा घनो मेघवर्जितं वर्षो वृष्टिः तुहिनं नीहारः

सिद्धिर्भवेदथ पुनः शकुनादितोपि चेतोविशुद्धिरधिका न च तां विनेयात् ७८ व्रतबन्धनदेवतप्रतिष्ठाकरपीडोत्सवसूतकास
माप्तौ न कदापि चलेदकालविद्युतघनवर्षतुहिनेपि सप्तरात्रम् ७९ महीपतेरेकदिने पुरात्पुरे यदा भवेतां गमनप्रवेशकौ
भवारशूलप्रतिशुक्रयोगिनी विचारयेन्नैव कदापि पंडितः ८० यद्येकस्मिन् दिवसे महीपतेर्निर्गमप्रवेशौ स्तः तर्हि विचार्यः
क्षुधियाप्रवेशकालो नयात्रिकस्तत्र ८१ प्रवेशान्निर्गमं तस्मात्प्रवेशं नवमे तिथौ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥ [illegible] ॥

एषु प्रदर्शितेष्वेव कालेषु सप्त सप्तरात्रं दिनसप्तकं न चलेत् नारदः अकालजेषु नृपतिर्विद्युद्गर्जितवृष्टिषु उत्पातेषु त्रिविधेषु सप्तरात्रं न तु व्रजेदित्यलम् ७९ अ
थैकदिनसाध्ये गमनप्रवेशविशेषं वंशस्थविरेणाह महीपतेरितिस्पष्टार्थः यथा वाराणसीस्थानाच्चरणादिनगरे प्रवेशः तत्रैतान्दोषान्पंडितेनैव विचारयित
८० अथैकदिनमध्ये निर्गमप्रवेशाख्यरूपे कार्ये विचिकीर्षिते किं विचार्यमित्यार्ययाह यद्येकस्मिन्निति स्पष्टार्थमेव ८१ अथ प्रयाणे नवमीदोषमनुष्टु
भाह प्रवेशादिति गृहप्रवेशतिथितो नवमे तिथौ निर्गमनं कुर्यात् पुनश्च गमनदिवसात् नवमे तिथौ गृहप्रवेशनं कुर्यात् एवं नक्षत्रे च गमनन्नक्षत्रान्नवमे
नक्षत्रे गृहप्रवेशम् तथा गृहप्रवेशनक्षत्रात्।

नवमनक्षत्रेगमनंचनकुर्यात् वारेच गमनवारान्नवमवारेगृहप्रवेशम् गृहप्रवेशवासरान्नवमवारेगमनंनैवकुर्यात् गर्गः प्रवेशान्निर्गमश्चैवनि
र्गमाच्चप्रवेशनम् नवमेयातुर्नोकुर्याद्धिष्ण्येवारेतिथावपीति ८२ अथयात्रादिनीयंविधिंशालिन्याह अग्निंहुत्वेतिस्पष्टार्थम् ८३ अथनक्षत्रदोहदानशा
र्दूलविक्रीडितेनाह कुल्माषानिति अत्रचतुर्थचरणेप्रियंगवपूपेत्यत्रछंदोभंगोस्ति सगणप्रक्षेपाकरणात् स्त्रद्ध्येहेवेति पिंगलसूत्रेणहकाररेफसं
योगेपराग्वर्णस्यलघुत्वाभिधानात् सगणप्रक्षेपएव तथाचकालिदासः गृहीतप्रत्युद्गमनीयवस्त्रेतिहयाहंसेअश्विन्यादिसप्तविंशतिभेषुकुल्माषा
दिकंनक्षत्रदोहदम् इदंभक्ष्याभक्ष्यवर्णभेदेनदेशभेदेनविचार्यम् भक्ष्यसंभवेभक्षयेत् अभक्ष्यसंभवे अवलोकयेत् पश्येत्स्पृशेद्देतिध्येयम् यथा अश्वि

नक्षत्रेचतथावारेनैवकुर्यात्कदाचन ८२ अग्निंहुत्वादेवतंपूजयित्वानत्वाविप्रानर्चयित्वादिगीशम् दत्वादानंब्राह्मणेभ्यो
दिगीशंध्यात्वाचित्तेभूमिपालोधिगच्छेत् ८३ कुल्माषांस्तिलतंडुलानपितथामाषांश्चगव्यंदधित्वाज्यंदुग्धमथैणमांसमप
रंतस्यैवरक्तंतथा तद्वत्पायसमेवचाषपललंमार्गंचशाशंतथाषाष्टिक्यंचप्रियंगवपूपमथवाचित्रांडजान्सत्फलं ८४ कौर्मं
सारिकगोधिकंचसल्लकंशाल्यंहविष्यंहयेभ्यःस्यात्कृसरान्नमुद्गमपिवापिष्टंयवानांतथा॥ ६ ॥ ६ ॥ २

न्यांकुल्माषानस्तान्सिद्धमाषान् भरण्यांतिलमिश्रतंडुलान् कृत्तिकायांमाषान् रोहिण्यांगव्यंगोरसंचविदेधिमृगेगव्यमाज्यंघृतं आर्द्रायांदुग्धंगव्यमे
वपुनर्वसौश्रवणमांसंहरिणमांसं पुष्येमृगस्यरक्तं आश्लेषायांपायसं मघायाम् चाषस्यपललंमांसं पूर्वफल्गुन्यांमृगस्येदंमार्गंमांसम् उत्तराफल्गुन्यांशश
स्येदंशशमांसम् हस्तेषाष्टिक्यंषाष्टिकान्नं चित्रायांप्रियंगुःफलिनीएके स्वात्यामपूपं विशाखायांचित्रान् नानावर्णानंडजानीक्षणं अनुराधायांसत्फलम्।
उत्तमफलमाम्रादिकम् ८४ ज्येष्ठादिदोहदंशार्दूलविक्रीडितेनाह कौर्ममिति ज्येष्ठायांकूर्मस्यकच्छपस्येदंकौर्मंमांसम् मूलेसारिकायाःपक्षिण्याःइदंसारि
कंमांसंपूर्वाषाढायांगोधायाःइदंगोधिकंमांसम्॥ ६ ॥ ६ ॥ ६ ॥ २ ॥ ६ ॥ २ ॥

उत्तराषाढायांशल्यंप्रसिद्धं शाल्यंमांसम् श्वाविन्तुशल्यंइत्यमरः अभिजितिहविष्यंमुद्गादि श्रवणेकृसरान्नंखिचडिका धनिष्ठायांमुद्गान्नंमुद्गोद
नं शततारकायांयवपिष्टम् पूर्वाभाद्रपदायांमत्स्यान्नंमत्स्यमिश्रितमोदनम् उत्तराभाद्रपदायां चित्रान्नंवर्णमोदनम् रेवत्यांदध्यन्नंदधिभक्तमिति मारदः
कुल्माषांश्चतिलांश्च माषान्दधिमध्यंघृतंपयः मृगमांसंवत्सारंपायसंचार्षिकंमृगं शशमांसंचषाष्टिकंच प्रियंगुकमपूपकम् चित्रांडजान्फलंकूर्मसारींगोधां
चशल्यकम् हविष्यंकृसरान्नंचमुद्गान्नंयवपिष्टकं मत्स्यान्नंमिश्रितान्नंचदध्यन्नंदस्रभात्क्रमादितिगुरुः अलभ्यालभ्यभक्ष्या वास्पृष्ट्वास्पृश्याथतान्व्रजे
त् इत्थंसिद्धिवमाप्नोतिइष्टमादिषुभूपतिः दोहदेषुग्रंथांतरोक्तदस्तत्रविकल्पोज्ञेयः ८५ अथदिग्दोहदमनुष्टुभाह आज्यमिति आज्यंघृतपूर्वस्याम्

मत्स्यान्नंखलुचित्रितान्नमथवादध्यान्नमेवंक्रमाद्भक्ष्याभक्ष्यमिदंविचार्यमतिमान्भक्ष्येतथालोकयेत् ८५ आज्यं
तिलोदनंमत्स्यंपयश्चापिपथाक्रमम् भक्षयेद्दोहदंदिश्यमाशांपूर्वादिकांव्रजेत् ८६ रसालंपायसंकांजीशृतंदुग्धंत
थादधि पयोश्वितंतिलान्नंचभक्षयेद्वारदोहदम् ८७ पक्षादितोर्कदलतंडुलवारिसर्पिः श्राणाहविष्यमपिहेमजलंत्व

तिलमिश्रमोदनंदाक्षिणस्यामत्स्यंपश्चिमायां पयोदुग्धमुत्तरस्यांदिशिभवंदिश्यंएतद्दोहदंभक्षयेत् ततःपूर्वाद्यामाशांव्रजेत् ८६ अपूपम्
वारदोहदमनुष्टुभाह रसालमिति रसालाशर्करादधिमरीचकर्पूरैलासंस्पृष्टालोके शिखरिणीतिप्रसिद्धातांरविवारेपायसंसोमेकांजीकं मङ्गलेतांभौ
मेश्रितपक्वंदुग्धंबुधेदधिगुरौ अश्रितअपक्वंदुग्धंशुक्रे तिलमिश्रमोदनंशनिवारे एतद्वारदोहदंरविवारादिक्रमेणभक्षयेत् स्याद्रसालानुमा
जितेत्यमरः ८७ अथतिथिदोहदंवसंततिलकेनाह पक्षादितइति पक्षादितः प्रतिपदमारभ्यपंचदशतिथिषुक्रमेणतिथिदोहदंभुक्त्वाव्रजेत् यथा
प्रतिपदि अर्कस्यप्रसिद्धस्यदलानिपर्णानि द्वितीयायांतंडुलवारित्रक्षालितंतंडुलजलम् तृतीयायांसर्पिर्घृतम् चतुर्थ्यांश्राणायवागूपंचम्यांहविष्यंमु

बहुस्त्रीत्वसंभवे मुख्यकलत्रग्रहं पट्टराज्ञीतद्गृहाद्वा हविष्यं प्राश्य भक्षयित्वा विप्रैर्ब्राह्मणैरनुमतः मंगलद्रव्यं मनोभीष्टं पश्यन्शृण्वन् सन् एव यातु गच्छेत्
९१ अथ प्रस्थानवस्तूनि निर्दिशन् मातृविप्याह कार्याद्यैरिति किंचिदावश्यं कार्यं नाभूदिति चेद्गमनस्य विलंबः स्यात्तदा विधारितयात्रालग्नेन ब्राह्मणादि
भिरेतानि वस्तूनि आशु चालनीयानि यथा अब्राह्मणेनोपवीतं यज्ञोपवीतं क्षत्रियेणायुधं वैश्येन मधु शूद्रेणामलफलं नारिकेलादि राजमार्तण्डः प्रस्थाने
ब्राह्मणादीनां यज्ञसूत्रमथायुधं मध्वामलफलं चैव प्रशस्तं वह्निकारणं ... इति वाऽथवा सर्वेषां वर्णानां यदेव वल्लभं प्रियं मनोभीष्टं तदेव प्रस्थापनीयं वसिष्ठः श्वेता
तपत्रध्वजचामरांश्च ... भूषणोष्णीषगजाम्बराणि आंदोलिकां ... रथाश्च वाजान् शय्यासनाद्यं मनसस्त्वभीष्टमिति ९२ अथ त्राच्यमतेन प्रस्थानपरिमाण

प्राश्य हविष्यं विप्रानुमतः पश्यन्शृण्वन्मंगलमियात् ९१ कार्याद्यैरिह गमनस्य चेद्विलंबो भूदेवादिभिरुपवीतमायुधं च क्षौद्रं
चामलफलम्भुशु चालनीयं सर्वेषां भवति यदेव हृत्प्रियं वा ९२ गेहाद्गेहांतरमपि गमस्तर्हि यात्रेति गर्गः सीम्नः सीमांतरम
पि भृगुर्बाणक्षेपमात्रम् प्रस्थानं स्यादिति कथयते सोभरद्वाज एवं यात्राकार्यो बहिरिह पुरात्स्यादसिष्ठोब्रवीति ९३॥
प्रस्थानमत्र धनुषां हि शतानि पंच के चि च्छतद्वयमुशंति दशैव चान्ये॥ ॥ मंदाक्रांतयाह गेहादिति स्वगृहात् परगृहं मतिसमीवर्ति

नि ... पि चेद्गमं स्यान्तर्हि यात्रा जातेति गर्गः कथयते अथवा स्वसीमामुल्लंघ्य सीमांतरं सीमां प्राप्य वसेदिति भृगुः कथयते अथवा महता ... स्वबले
न ... मार्गे शरो यावद्दूरं गच्छति तावन्मात्रं प्रस्थानं स्यादिति भरद्वाजः कथयते अथवा पुरतनगरात् बहिः यात्राकार्यो इति वसिष्ठः कथयते ९३ अथ तु
निमितेन प्रस्थानपरिमाणं वसंततिलकयाह प्रस्थानमत्रेति धनुः प्रमाणं चतुः करः तादृशानां धनुषां पंचशतानि हस्तसहस्रद्वयमिति यावत् स्वगृहात्
बहुस्तावद्दूरं प्रस्थानं स्यादिति केचिद्वदंतु अन्ये तु तादृशानां धनुषां शतद्वयं अष्टशतानि हस्तास्तावत्स्थानमिसाहुः अपरे तु इह यात्राकाले मंदिरेत स्वगृ
हाद्दशैव धनूंषि चत्वारिंशत् हस्तास्तावत् दूरे प्रस्थितः प्रयातः एवं ज्ञेयमित्याहुः॥ छ ॥ ९ ॥ छ ॥ ९ ॥ ॥

प्रस्थानंधनुंपंचशतान्यत्रशतद्वयं स्वदेवसदनाद्वापिदशभिप्रस्थितोदतद्गतिवसिष्ठोक्तेः गंतव्यदिक्त्विनितदपिप्रस्थानंप्रयतेनसावधानेनराज्ञांगत
व्यदिक्प्रस्थानदिशिगमनंचिकीर्षितंतद्दिगभिमुखंकार्यम् गंतव्यदेशाभिमुखंयत्र देशेप्रस्थानमाहुः शुभंदनरत्नाणामितिराजमार्तंडोक्तेः १४ अथान्यद
प्रस्थानेभूमिपालइति भूमिपालोराजाप्रस्थानेदशदिवसमभिव्याप्य दशाहोरात्राणिनवसेत् सामंतोमांडलिकाश्चतुर्दशिकः एकत्रप्रस्थानि
सप्तरात्रंनवसेत् तदितरमनुजोब्राह्मणादिस्तथैवएकत्रप्रस्थानेपंचरात्रंनवसेत् यदिदैवाद्वसेत् तदाकिंकुर्यादित्यतआह ऊर्ध्वमिति अवधिदिवसानि
क्रमानंतरंपुनर्गृहमागत्यशुभेदिवसेगच्छेत् कचिद्दिग्विशेषेणप्रस्थानेदिवसनियमोभिहितः राजमार्तंडः प्राच्यां
महामुनयः प्रवदंतिसप्तयाम्यांसप्तवशुभदानिदिनानिपंच त्रीण्येवपश्चिमदिशिक्षितिनायकानांप्रस्थानकेषुदिवसद्वयमुत्तरस्यामिति अथप्र

संप्रस्थितोयदिगृहमंदिरतःप्रयातोगंतव्यदिक्तदपिप्रयतेनकार्य्यम् १४ प्रस्थानेभूमिपालोदशदिवसमभिव्याप्यनै
कत्रतिष्ठेत्सामंतःसप्तरात्रंतदितरमनुजःपंचरात्रंतथैव ऊर्ध्वंगच्छेच्छुभाहेप्यथगमनदिनात्सप्तरात्राणिपूर्वंचाशक्तो
तद्दिनेसोरिपुजयमना मैथुनंनैवकुर्यात् १५॥ प्रस्थानकर्तुर्नियममाह अथेति असौराजादिः रिपुविजयमनाः शत्रुजयेकृतांतःक
रणोयात्रादिनात्पूर्वंसप्तरात्राणिमैथुनंसंभोगंनैवकुर्यात् च्यवनः त्रिरात्रंवर्जयेत्क्षीरंपंचाहंक्षुरकर्मच तदहश्चावशेषाणि सप्ताहं मैथुनंत्यजेत् वाअ
थवाअशक्तोसप्ताहमतिक्रामितयास्यातुमशक्तोतद्दिनेयात्रादिवसेमैथुनंनैवकुर्यात् गर्गः यात्राकालेतुसंप्राप्तेमैथुनंयोनिषेवते रोगार्तःक्षीणके
शश्चसनिवर्त्ततेवातुवेवियदातुप्रथमदिनेस्त्रीऋतुस्नाताभवतिगमनेचावश्यकतातत्रनिर्णयमाह च्यवनः आत्ययिककार्यपतितपुष्पस्नातासमा
गमंगत्वा मुदितोगच्छेल्लभतेमनोरथानचिरकालेनेति यदापुनर्गमनार्थंकालांतरमस्तितद्दिनेमैथुनंकृत्वाकालांतरेसुलग्नेयायादित्यर्थसिद्ध
मू १५॥

अन्यदपिशालिन्याह दुग्धमिति अस्मिन्वासरेयात्रादिनेक्षौद्रंमधुभक्षणेननैलंतैललापनंत्याज्यं चमिश्रवदेवोक्तंताशरीरशोधनार्थंबलात्कारकृतं वायात्रादिनेनिषिद्धं ९६ अन्यदपिगीत्याह भुक्तेति यदितैलपक्वानिवटकादीन्यन्नानि गुडमिश्रविकारं क्षारंसलवणं पक्वमांसानियोभुक्त्वागच्छ तिसराजातिरुग्णोरोगसहितोविनिवर्त्तते गर्गः कटुतैलगुडक्षारंपक्वमांसाशनंतथा भक्षयित्वायात्यसौमोहात् व्याधितःसन्निवर्त्ततइतिमासदुग्धादिनि षिद्धेदाहद्व्यतिरिक्तविषयः स्त्रीद्विजमिति स्त्रीचद्विजश्चतयोःसमाहारः स्त्रीद्विजंअवमान्यधिक्शब्दताडनादिनामानभंगंकृत्वागच्छतःपुंसोमरणं स्यात् गर्गः यस्तुसंप्रस्थितोयात्रांभार्यांनैवाभिनंदति भार्यावाताभिनंदतिमनुसततिनिवर्त्तते परकीयायांवास्त्रियंपुरुषमेवचताडयित्वातुयोमोहात्तदंतं तस्यजीवितं याभार्यांप्रस्थितोयस्तुब्राह्मणानवमानयेत् नार्थाप्रतिनिवर्त्तेततदंततस्यजीवितं केचित्तुभाशुभशब्दान्यात्राकालेशुभाशुभसूचका

दुग्धंत्याज्यंपूर्वमेवत्रिरात्रंक्षौरंत्याज्यंपंचरात्रंचपूर्वम् क्षौद्रंतैलंवासरेस्मिन्वमिश्चत्याज्यंयत्नाद्भूमिपालेननूनं ९६ ॥
भुक्त्वागच्छतियदिचेत्तैलगुडक्षीरपक्वमांसानि विनिवर्त्ततेसरुग्णः स्त्रीद्विजमवमान्यगच्छतोमरणं ९७ यदिमासु
चतुर्षुपौषमासादिषुवृष्टिर्हि भवेदकालवृष्टिः॥

९८ः लल्लःमापयगच्छविर्जयसनिर्गच्छव्रजमुवसंसर्यसिद्धिकराः खल्वेतेत्रमे दत्रपजीवशब्दाश्चमार्गास्तिष्ठनिवर्तकगम्यतेमूढइर्मतेमोहात् यात्रानेच्छतिबुधाःस्कंतकामितमीनशब्दश्चेति कामिस्तरोमार्त्तध्व ह्रीहिक्काहदि ९९ अथाकालवृष्ट्यारव्यदोषंवसंततिलकयाह यदीति पौषमाघफाल्गुनचैत्रेषुचतुर्षुमासेषुयदिवृष्टिर्भवेत्साऽकालवृष्टिः पौषादिचतुरोमासाः त्रा ताःवृष्टिरकालजेतिवचनात् तत्राकालवृष्ट्यांजातायांयदिवसुधापृथ्वीयावत् पशवोगवादयः मर्त्यामनुष्यादयस्तेषांपदेश्चरणैरंकिताचिन्हितानभव तितावदकालवृष्टेर्दोषोनास्तियदिपशुचरणांकितास्यात्तदादोषोस्त्येव अत्रग्राह्या अल्पवृष्टौकर्दमादिबाहुल्यात् असल्पावृष्टिर्दोषायनेमहत्नीतिवदं ति तत्रबहुवृष्ट्याकर्दमायाकारणात् तत्रासितार्दामार्गशीर्षस्यप्रतिपदिवसेतथा पूर्वाषाढामतेचंद्रेगर्भाणांधारणंभवेदितिकश्यपोक्तेः॥ ७ ॥ ४

मार्गादिमासगर्भग्रहणकालस्तत्रवृष्टिरावश्यकी यदाह वराहः पवनसलिलविद्युत् गर्जिताभ्रान्वितोयः सम्भवतिबहुतोयः पंचरूपस्तुमेघइति ततश्चग
र्भग्रहणयोग्यो अल्पावृष्टिनेदोषस्स महतीवृष्टिस्तु गर्भगलनं यतोवाराहेणोक्तं गर्भसमयेऽतिवृष्टिर्गर्भाभावायनिमित्तमुक्तेति निमित्तशकुनास्ताश्विकं स्रावि
कृतिः विद्युतिरुपधीयमानादोषमुपधिनुयात् एतामहावृष्टेरेवदोषवत्वं अतएव मृगशिरसरंतोजलदानशस्ताइतिबृहद्यात्रायामुक्तं तस्मादल्पल्पायामकाल
वृष्टौदोषाभावः अल्पायांत्वल्पदोषः महत्यांतुमहान्दोषइति सप्तभानरात्रिकाइत्युक्तम् प्राकृएकेनैकमहः प्रोक्तं द्वितीयेनत्रिरात्रकं तृतीयेनतुपंचाहं दश
रात्रमतःपरम् पौषेतुत्रिदिनंवर्ज्यंमाघमासेदिनद्वयम् फाल्गुनेदिनमेकंतुचैत्रेतुघटिकाद्वयमितितु आवश्यककार्यविषयम् १८ पूर्वोक्तमेवार्थंस्पष्टीकु
र्वन्नावश्यकयात्रायांतच्छांतिकंदुष्टशकुनशांतिकंचातिशक्कर्यागाथाछंदसाह अल्पायामितिस्पष्टार्थः प्रथमचरणम् अतोयपत्राच्याः पठंति तावत्त्रयाणां

पशुमर्त्यपदांकितानयावद्बहुरूधास्यान्नहिताबदेवदोषः १८ अल्पायांवृष्टौदोषोल्पोभूयस्यांदोषोभूयान्जीमूतानांनिर्घोषेवृ
ष्टौवाजातायांभूयः सूर्येन्दुबिंबेसौवर्णेकृत्वाविप्रेभ्योदद्यात्दुःशाकुन्येसाज्यंस्वर्णंदत्वागच्छेत्स्वेच्छाभिः १९ विप्रा
श्वेभफलान्नदुग्धदधिगोसिद्धार्थपद्मांबरवेश्यावाद्यमयूरचाषनकुलावध्वैकपश्वामिषम्॥ ७ ॥ ऽ ॥

दिषुभूपतीनामकालवृष्टिः प्रकरोतिदोषम् यावद्भुवंसंचरतांजनानांतथापशूनांचरणाङ्किताभूरितितन्निर्मूलत्वादुपेक्ष्यम् स्वयंप्रस्थानेसति
मार्गमध्येनास्त्ययंदोषः आवश्यकयात्रायांदानमाह जीमूतानामिति जीमूतानांमेघानांनिर्घोषेशब्दे अकालवृष्टौवाजातायांसूर्येन्दुरूपयथाशक्त्या
सौवर्णनिर्मितेबिंबेकृत्वाब्राह्मणेभ्योदद्यात्ततःस्वेच्छयागच्छेत् प्रसंगाद्दुष्टशकुनानांदानमाह दुःशाकुन्येइति शकुनस्यभावःशाकुन्यंदुष्टंचतच्छा
कुन्यंचदुःशाकुन्यंतस्मिन्दुष्टशकुनप्रस्थानकालेसंभूतेसतिसाज्यंसघृतंस्वर्णंविप्रेभ्योदत्वास्वेच्छाभिर्गच्छेत् १९ अथशुभसूचकशकुनान्शार्दूल
विक्रीडितेनाह विप्राश्वेति विप्रावहवोद्वौवानत्वेकः अश्वःप्रसिद्धः॥ ऽ ॥ ऽ ॥ ऽ ॥ ऽ ॥ ऽ ॥

इभोहस्ती अनुन्मनः फलान्नदुग्धदधीनिप्रसिद्धानि गौः धेनुः सिद्धार्थः सर्षपः पद्मंकमलं अंबरंवस्त्रंस्व च्छंवेश्यागणिकावाद्यमर्दलादि मयूरश्चाषो पक्षिणौ नकुलःप्रसिद्धः बद्धैकपशुः रज्वादिनाबद्धोवृषादिः आमिषंमांसं सद्वाक्यंकार्यसिद्धिरस्त्वित्यादिकं कुसुमानिचंपकादीनि इक्षुः प्रसिद्धः सकलःनतुखंडितः जलपूर्णकलशःसंमुखः छत्रंप्रसिद्धम् मृत्तिकाकन्याकुमारी रत्नंमाणिक्यादि उष्णीषंशिरोवेष्टनं सितोक्षः श्वेतवृषः अयमबद्धोपि मद्यंप्रसिद्धम् सस्कृतस्त्रीसपुत्रास्त्री दीप्तोजाज्वल्यमानोग्निरिति १०० अन्यच्छार्दूलविक्रीडितेनाह आदर्शाजनेति आदर्शोदर्पणम् अंजनंकज्जलम् धौतवस्त्रउज्ज्वलीकृतवस्त्रोरजकः वस्त्रनिर्णेक्ता मीनोमत्स्यः आज्यंघृतम् सिंहासनंदेवादेः शवंमेवशावंमृतकंपृष्ठगामिलोकरोदनरहितम् ध्वजःपताका मधुक्षौद्रम् छागोमेषः अस्त्रंधनुरादि गोरोचनंप्रसिद्धम् भारद्वाजःपक्षी नृपानसुखासनादि वेदनिनादोवेदध्वनिः मांगल्यंप्रसिद्धम् गी

सद्वाक्यंकुसुमेक्षुपूर्णकलशाश्छत्राणिमृत्कन्यकारत्नोष्णीषसितोक्षमद्यसस्कृतस्त्रीदीप्तवैश्वानरम् १०० आदर्शाजन
धौतवस्त्ररजकोमीनाज्यसिंहासनंशावंरोदनवर्जितंध्वजमधुच्छागास्त्रगोरोचनम्॥ छ ॥ १ ॥ छ ॥

तंगानम् अंकुशोहस्तिनिवारणार्थमस्त्रम् एतेपदार्थागंतुर्भूपतेः प्रयाणसमयेसंमुखंदृश्यमानाः सत्फलदाशुभफलदाः तथारिक्तोजलरहितोघटः कुंभः स्वानुगः स्वस्यपश्चाद्गागगामीसोपिशुभफलदः कश्यपः कार्यसिद्धिर्भवेद्दृष्टे शवेरोदनवर्जिते प्रवेशेरोदनयुतः शवः स्यात्तुशिवप्रदः वसंतराजःआमर्शिक्तंकलशंजयार्थीयदिव्रजेत्कोपिसहाध्वगेतं पूर्णंसमादायनिवर्त्ततेसोयशारुतार्थःपथिकस्तथैवेति अथकेचिल्लग्नवशेनशकुनाउक्ताः लग्नेवाक्पतिशुक्रभार्गवाब्राह्मणः संमुखःस्त्रियः बुधशुक्रौचवंकेंद्रस्थौसवत्सागौः प्रदृश्यते चंद्रः सूर्यश्चभवतिदशमस्थौयदाथवा दीपारशौसमनसौः रजकोधौतवाससाकृतस्यात्रैयदासौम्यैरेषोबद्धस्तुसंमुखः चंद्रोगुरुश्चसहजेश्वानोवामांगभागतः सर्वेकर्मायनवमेभारद्वाजोथनाकुलः चाषस्यदर्शनंवास्याद्वामेगिरः तदुर्लभम् आदित्योराहुसौरीचसहजस्थाकुमारिकाम्॥

पीठानां स्तभगानां वादर्शनं सर्वकामदम् षष्ठे तृतीये कर्माये भौमश्चेत् फलं भवेत् दास्यो वेश्याः स्त्रामांसं लाभश्चैव स्तु निश्चितः सप्ताष्टपंचमे यस्य जीवो
ज्ञोवात्र वर्त्तते आदर्शश्च लाभदः राहुर्भौमेश्च मंदश्च लग्नाद्यदि तृतीयगः उद्धृतंगोमयं पश्येच्छीघ्रं लाभं धनं दिशेत् इत्यादयः शकुनाः शकुनग्रंथेभ्यो ज्ञेया
विस्तरभयादिह नोक्ताः २०१ अथापशकुनान् शार्दूलविक्रीडितेनाह वंध्येति वंध्या प्रसिद्धा चर्म प्रसिद्धं तुषं धान्यादितुषं अस्थि सर्पलवणानि प्रसिद्धानि अं
गारो निर्धूमोग्निपिंडः इंधनं पाकयोग्यं क्लीबः षण्ढः विट् उद्धृता विष्ठा अस्त्री विष्ठा विर्वा समा वित्यमरः तैलं प्रसिद्धम् उन्मत्तो मद्यभूताद्यावेशवान् वसा
शरीरांतर्धातुविशेषः औषधं प्रसिद्धम् अरिः शत्रुः जटिलो जटावान् प्रव्राट् सन्यासी तृणं प्रसिद्धं व्याधितो चिकित्स्यव्याधिमान् नग्नः अपरिहितवस्त्रः कु

भारद्वाजनृपानवेदनिनदा मांगल्यगीतं कुशा दृष्टाः सत्फलदाः प्रयाणसमयेपि क्रोघटः स्वानुगः २०१ वंध्याचर्मतुषास्थि
सर्पलवणांगारेंधनक्लीबविट् तैलोन्मत्तवसौषधारिजटिलप्रव्राट् तृणव्याधिताः नग्नाभ्यक्तविमुक्तकेशपतिताव्यंग
क्षुधार्त्तासृक्स्त्रीपुष्पसरट् स्वगेहदहनं मार्जारयुद्धं क्षुतम् २०२ कषायीगुडतक्रपंकविधवाकुब्जाः कुटुंबे कलि
र्वस्त्रादेः स्खलनं लुलायसमरं कृष्णानि धान्यानि च॥ ॥मार्व्यतिरिक्तः अभ्यक्तः कृततैलाभ्यंगोस्नातः विमुक्तकेशः असंयतकेशः प
तितो मद्यपानाद्यभिशापवान् व्यंगः छिन्ननासिकादिः क्षुधार्त्तः क्षुत्पीडितः असृक् रुधिरं स्त्रीणामृतुः सरठः कृकलासः स्वगेहदहनं स्वगेहेग्निदा
हः मार्जारयुद्धं प्रसिद्धं क्षुतं छिक्का २०२ अन्यदपि शार्दूलविक्रीडितेनाह कषायीति कषायो रागविशेषः तेन रक्तं वस्त्रं काषायं तद्वान् गुडतक्रे प्रसिद्धे
पंकः कर्दमः विधवाकुब्जौ प्रसिद्धौ कुटुंबे कलिः पुत्रादिभिः कलहः वस्त्रादेः आदिशब्देन कमंडलुछत्रादेः स्खलनं निर्मितस्य हस्तात्पतनम् लुलाया
महिषास्तेषां समरं युद्धम् कृष्णवर्णानि धान्यानि माषादीनि कार्पासं तुलं वमनं वांतम् रसे दक्षिणभागे गर्दभः शब्दः अतिरुत क्रोधाधिक्यम् गर्भि
णी गर्भवती मुंडो मुंडितशिरस्कः आर्द्रांबर आर्द्रवस्त्रः दुर्वचः स्वमुखोत्थं परमुखोत्थं वा दुष्टवाक्यम्॥ छ॥ ५॥ छ॥

अंधवधिरौ प्रसिद्धौ उदक्या रजस्वला स्त्री एते पदार्था गन्तुः पुंसः यानसमये दृष्टाः संतो न शुभाः किंतु अशुभफलाः नारदः सर्वदिक्षु क्षुतं नेष्टं मोक्षतं मर
णप्रदम् अफलं तच्छुतं वा कंपवह्दयौ नसकेतवेरिति ओपधेयान मारोहे विवादे शयनेऽशने विचारंभे वीजवापे क्षुतं सप्तसु शोभनमिति १०३ अथा
न्यच्छकुनं शार्दूलविक्रीडितेनाह गोधाजाहकेति गोधा प्राणिविशेषस्ततः गोह इति भाषया जाहका गात्रसंकोची प्राणिविशेषः सूकरः प्रसिद्धः अहिः स
र्पः शशकः प्रसिद्धः यानसमये एषां गोधादीनां कीर्तनं स्वमुखेनान्यमुखेन वो च्चारणं शुभमन्यच्च पुनरेतेषां गोधादीनां शब्दो रुतं अथवा विलोकनं दर्शनं नि
षिद्धं कपिऋक्षाणां कपीनां वानराणां ऋक्षाणां भल्लूकादीनामतो गोधादिभ्यो व्यत्ययो ज्ञेयः यथा वानराणां भल्लुकानां कीर्तनं निषिद्धं तेषामेव दर्शनं शब्दि

कार्पासं वमनं च गर्दभरवो दक्षे तिरुद्गर्भिणी मुण्डार्द्राम्बरदुर्वचोंऽधबधिरोदक्या न दृष्टाः शुभाः १०३ गोधाजाहकसूक
राहिशशकानां कीर्तनं शोभनं नो शब्दो न विलोकनं च कपिऋक्षाणामतो व्यत्ययः नद्युत्तारभयप्रवेशसमरे नष्टार्थसंवी
क्षणे व्यस्ताः शकुनान्नृपेक्षणविधौ यात्रोदिताः शोभनाः १०४ वामांगे कोकिलापल्लीपोतकीसूकरीरला पिंगलच्छु
च्छुका श्रेष्ठा शिवा पुरुषसंज्ञिता १०५ ॥ ॥तं वाननिषिद्धं शुभमित्यर्थः नद्युत्तार इति नद्यां गंगादेरुत्तारणे भये भयसंबंधिनी कार्ये पलाय
नादिके प्रवेशे गृहप्रवेशे समरे संग्रामे नष्टार्थस्य नष्टद्रव्यस्य संवीक्षणे गवेषणे प्रागुक्ताः शकुनाः व्यस्ता विपरीता ज्ञेयाः शुभशकुना विप्राश्वेत्यादयो
ऽशुभा ज्ञेयाः बंध्या चर्मेत्याद्यशुभशकुनाः शुभफलदा ज्ञेयाः नृपेति नृपदर्शनार्थं गमने यात्रायामुदिता विप्राश्वेत्यादयः शुभा ज्ञेयाः नृपावलोकने शकुनः
प्रयाणवदित्युक्तो राजदर्शनस्य भयस्थानत्वादपवादोऽयम् १०४ अथान्यदप्यनुष्टुभाह वामांगे इति कोकिला पल्ली प्रसिद्धौ पोतकी दुर्गेति सूकरी जात्य
वटिका रला पक्षिविशेषः पिंगला भैरवी छुच्छुका छुछुन्दरी शिवा सृगाली पुरुषसंज्ञिता पुंनाम्नः कपोतखंजनतित्तिरीहंसादयः एते गच्छतां राजादीनां
वामांगे वामभागे शस्ताः स्युः १०५॥ १०५ ॥ १०५ ॥ १०५ ॥ ॐ ॥ ॥ ॥ ॥

अन्यदप्यनुष्टुभाह छिक्कर इति छिक्करो मृगजातिः पिक्ककः पक्षिविशेषः भासः श्रीकण्ठः वानराः एते प्रसिद्धाः रुरुर्मृगविशेषः स्त्रीसंज्ञकाः स्त्री
नाम्नां मृगपक्षिणः दक्षिणभागगाः शुभाः शेषाः प्रसिद्धाः १०६ अथोक्तव्यतिरिक्तानां मृगपक्षिणां सामान्यतः प्रादक्षिण्येन शाकुनमनुष्टुभाह प्रदक्षिणग
ता इति स्तव्यतिरिक्ता मृगाः पक्षिणश्च यात्रायां प्रादक्षिण्येन गताश्चलिताः श्रेष्ठाः शुभफलदाः स्युः परंतु ओजा मृगा विषमसंख्यास्त्रिपंचसप्तादयश्चेद्व्र
जंतो दृष्टास्तदातिधन्याः स्युः वामे इति स्ववामभागे खरस्वनो गर्दभशब्दोतिधन्यः अथ शकुनानां किंपतां कालविशेषैर्नैर्बल्यमाह वराहः न ग्राम्यारण्यगो
ग्राह्यो नारण्ये ग्रामसंस्थितः दिवाचरो न शर्वर्यां न च नक्तंचरो दिवा द्वंद्वरोगार्दितस्त्रस्तकलहामिषकांक्षिणः आपगांतरिता मत्ता न ग्राह्याः शकुनाः क्वचिद्वै
हिताश्वाजवालेयकुरंगोष्ट्रमृगाः शशाः निष्फलाः शिशिरे ज्ञेया वसंते काककोकिलौ न तु भाद्रपदे ग्राह्याः शूकराः श्ववृकादयः शरद्यासाद गोक्रौंचाः श्रावणे

छिक्करः पिक्ककोभारुः श्रीकंठो वानरो रुरुः स्त्रीसंज्ञकाः काककंकाश्वानः स्युर्दक्षिणाः शुभाः १०६ प्रदक्षिणगताः
श्रेष्ठा यात्रायां मृगपक्षिणः ओजा मृगा व्रजंतोतिधन्या वामे खरस्वनः १०७ आद्येऽपि शकुने स्थित्वा प्राणानेकादश व्रजे
त् द्वितीये षोडश प्राणांस्तृतीये न क्वचिद्व्रजेत् ॥

१ हस्तिवातको व्याघ्रसर्ववानरद्वीपिमहिषाः सबिलेशयाः हेमंते निःफलाः ज्ञेया बालाः सर्वे
विमानुषा इति प्रभग्नशुष्कद्रुमकंटकीक्षुद्रश्मशानभस्मास्थितुषाकुलेषु प्राकारशून्यालयजर्जरीषु सौम्योऽपि पापः शकुनः प्रकल्प्यः देवद्रुमनोहरे वरं श्र
ये द्दुर्जनकालसर्पो वरं क्षिपेद्वाग्रमुखे स्वभंगं वरं नरेंद्राग्निनिधिर्भुजाभ्यां नोल्लंघयेद्दुःशकुनं कदापि १०७ अथावश्यककार्ये विरुद्धशकुने जाते परिहारमनु
ष्टुभाह आद्य इति आवश्यककार्ये विरुद्धशकुने जाते एकादश प्राणान् स्थित्वा एकादशप्राणपरिच्छेद्यं कालं स्थित्वेत्यर्थः ततः समीचीने शकुने व्रजेत् त
त्रापि विरुद्धे शकुने संवृत्ते षोडशसंख्याकान् प्राणान् स्थित्वा शुभशकुने व्रजेत् तत्रापि पुनस्तृतीये विरुद्धशकुने संवृत्ते क्वचिदपि न व्रजेत् किंतु स्वगृहमा
गच्छेत् दशगुर्वक्षरैः प्राण इति कश्यपेन तु प्राणायामत्रयमेव प्रतीक्ष्यमित्युक्तम् यायी विरुद्धं शकुनमादौ दृष्ट्वा प्रयत्नतः प्राणायामत्रयं कुर्यात् द्वितीये द्विगु

अथयात्रानिवृत्तौगृहप्रवेशमुपजात्याह यात्रानिवृत्ताविति मृदूनि चित्रानुराधामृगरेवत्यः ध्रुवाणि रोहिण्युत्तरा श्च एभिर्नक्षत्रैः राज्ञोयात्रानिवृत्तौ
प्रवेशनंशुभंस्यात् क्षिप्रचरैर्नक्षत्रैः अश्विनीपुष्यहस्ताभिजिद्भिः श्रवणधनिष्ठाशततारापुनर्वसुस्वातीभिश्चप्रवेशनेपुनर्निर्गमोयात्रास्यात् नक्षत्रादेता
निमध्यमानि द्वीशादिनक्षत्रेषुप्रवेशेक्रमात्स्त्र्यादीनांनाशः यथा विशाखायांप्रवेशेस्त्रियाराज्ञोनाशः कृत्तिकायांप्रवेशेगृहदाहोगृहदग्धंस्यात् दारुणभेमू
लज्येष्ठार्द्राश्लेषासुप्रवेशेपुत्रस्यनाशः उग्रभेपूर्वात्रयभरणीमघासुप्रवेशेआत्मनःस्वस्यैवराज्ञोनाशःस्यादित्यर्थः लग्नादिविचारोगृहप्रवेशप्रकरणा
त्ज्ञेयः अत्रेदंविचार्यम् यत्रमासेयात्राकृतातन्मासान्नवमेमासियात्रादिनान्नवमेदिनेचप्रवेशोनविधेयः गुरुः निर्गमान्नवमेमासिप्रवेशोनवशोभनः
नवमेदिवसेचैवप्रवेशोनैवकारयेदिति ॥ ९ ॥ अथविवाहप्रकरणोक्तदोषातिदेशंयात्रागुक्तदोषाश्चशिष्याणामविस्मरणार्थंमञ्जुभाषिण्याह अयनर्क्षेति

यात्रानिवृत्तौशुभदंप्रवेशनंमृदुध्रुवैःक्षिप्रचरैःपुनर्गमः द्वीशेऽनलेदारुणभेतथोग्रभेस्त्रीगेहपुत्रात्मविनाशनंक्रमात् १०॥
अयनर्क्षमासतिथिकालवासरोद्भवशूलसंमुखसितज्ञदिक्कुपाः भृगुवक्रतादिपरिघार्गलादिडकस्वऋतुजाघशौचमपिचो(ऽ)त्सवादिकं ११॥

एतेअयनशूलादयोदोषाविवाहप्रकरणोक्तदोषाश्चयात्रायांनेष्टाः तत्रायनशूलःसौम्यायनेसूर्यविधूतदोमनसमिति मासोद्भवःशूलो
द्विविधःग्रंथान्तरोक्तः वृषादित्रित्रिराशिषुअर्केप्राच्यादिदिक्षुनगंतव्यमित्येकः कपाटकंटकादिश्चद्वितीयः स्वरोदये यत्रयस्मायोरवषाघश्चपूर्वाशादिबुधैः
क्रमात्राशयोद्वादशैवंतुमेषाताःसृष्टिमार्गतः यत्रपूर्वादिकाष्ठायांवृषराश्यादिगोरविःसादिशास्तमितायाप्तिसंज्ञःशेषाःसतोहिताइति कपाटकंटकादि
पेया कपाटपूर्वनाज्ञेयंकार्तिकादित्रिकंतथा नभस्यतोवास्तुमधोस्केनकंटकइतिज्योतिषार्कवचनात् नक्षत्रशूलः नपूर्वदिशिशाक्रभेनविधुसौरिषा
रेतथेतितिथिशूलःयोगिनी नवभूम्यइति संमुखसितज्ञदिक्कुपाः संमुखःशुक्रःसंमुखोबुधः संमुखोदिक्स्वामीललाटीभृगुवक्रतादि आदिशब्दात्क्षी
णास्तमितत्वबाल्यादिकं वक्रास्तनीचेत्युक्तं परिघाख्यांदण्डःपूर्वोदिक्षुचतुर्दिक्ष्वित्युक्तःस्वऋतुजाघशौचं स्वस्त्रीऋतुजंआर्त्तवस्नानकालपर्यंतं अशौचंज

अन्यदपिमंजुभाषिणीछंदसाह मृतपक्षेति मृतःपक्षः तमोभुक्ततारा स्मृता विश्वसंख्यादृत्याद्युक्तः रिक्तरवितर्कसंख्यकाः चतुर्थीनवमीचतुर्दशीद्वाद
शीषष्ठ्यस्तिथयः उपलक्षणत्वादष्टमीपूर्णिमामावास्याशुक्लप्रतिपदः सौरिभौमरविवाराः वामपृष्ठगविधुः अजवृषभमिथुनकुलीरादृत्यादिजातकोक्त्या
वामपृष्ठराशिगतः आडलोरवेर्भतोज्वमोन्मितिनिरिति क्रमणमपिज्ञेयं वसुपंचकं धनिष्ठोत्तरार्द्धात्पंचनक्षत्राणि अभि जिन्मुहूर्त्तश्च दक्षिणेवर्ज्यं एतेपंचांग
दोषाः ११ अथलग्नदोषान्स्रग्धरयाह लग्नेइतिजन्मराशेर्जन्मलग्नाद्वाऽष्टमगृहे अहितर्क्षाच्छत्रुजन्मराशेर्लग्नाद्वाषष्ठम् जन्मलग्नंयात्रालग्नेंतर्द
शाः तेषांजन्मराशिजन्मलग्नाभ्या मष्टमभवनयोःस्वामिनः रिपुजन्मराशिजन्मलग्नाभ्यांषष्ठभवनयोःस्वामिनोवायात्रालग्ने कुंभमीनयोर्नवलवोनवांशोल

मृतपक्षरिक्तरवितर्कसंख्यकास्तिथयश्चसौरिरविभौमवासराः अपिवामपृष्ठगविधुस्तथाऽडलोवसुपंचकाभिजिदथा
पिदक्षिणे ११ लग्नेजन्मर्क्षतन्वोर्मृतिगृहमहितर्क्षाच्चषष्ठंतदीशावालग्नेकुंभमीनर्क्षनवलतनूवापिपृष्ठोदयंच पृष्ठाशा
मक्षसंस्थंदशमशनिरथोसप्तमेचापिकाव्यः केंद्रेवक्राश्चवक्री ग्रहदिवसविवाहोक्तदोषाश्चनेष्टाः ११२ ॥इतिमुहूर्त
चिंतामणौयात्राप्रकरणंसमाप्तम् ११ ॥

ग्नंच पृष्ठोदयागोजाश्विककिंमिथुनाः समृगातिशास्त्याः पृष्ठोदयाविमिथुनाइत्याद्युक्ताः पृष्ठा
शासंस्थमक्षंगतव्यदिग्विलोमलग्नं दशमेशनिः सप्तमेकाव्यःशुक्रःकेंद्रे वक्राःवक्रिणाग्रहाः वक्रिग्रहवाराश्चएतेदोषाः विवाहोक्तदोषाः उत्पातान्म
हपातदग्धतिथिभिरित्याद्युक्ताः तेसर्वेयात्रायांवर्ज्याः तत्रसप्तमशुक्रव्यतिरिक्तोजामित्रदोषोनास्तीतिज्ञेयम् ११२ ॥इतिप्रमिताक्षरायांयात्राप्रकर
णंसमाप्तम् ११ अथवास्तुप्रकरणंव्याख्यायते गृहनिर्माणप्रयोजनंभविष्यपुराणे गृहस्थस्यक्रियाःसर्वानसिद्ध्यंतिगृहंविनाएतत्तस्माद्गृहारंभप्रवेश
समयौब्रुवेगृहस्वसत्ताकम् नसिध्यंतिनिफलाभवंतीत्यर्थः॥ ॥ ॥ ॥ ॥ ॥ ॥

इत्याद्यर्थमनस्यासो ब्रुग्रामादिषुस्वस्यशुभाशुभंलाभालाभादिविचारं शार्दूलविक्रीडितेनाह यद्भमिति नामभात्व्यावहारिकनामभात् व्यावहारि
कनामराशेर्वृश्चिकाख्यो यस्यग्रामादेर्भं यथा चरणाद्रिसंज्ञकोग्रामस्तस्यः मीनाख्यः सचद्वितीयोनवमःपंचमःएकादशोसंख्यादशमश्चस्या तदासो ग्रामः
स्वस्यशुभः स्यात् अन्यथानशुभइत्यर्थः यथानीलकंठराशेर्वृश्चिकाख्यातसंचमोमीनराशिश्चरणाद्रेस्तश्चरणाद्रीनीलकंठस्यवासयोग्यः नामर्क्षं उक्तं
च अत्रनामराशेरेवग्राह्यः काकिण्यांवर्गशुद्धौनवादे द्यूतेस्वरोदये मंत्रेपुनर्भूवरणे नामराशेःप्रधानतइति अथग्रामात्मनोरुत्तमर्णाधमर्णत्वंचाह स्ववर्ग
इति वर्गास्तुअकचटतपयशवर्गाः स्वगेशमार्जारसिंहशुनां सर्पाखुमृगमावीनांनिजपंचमवैरिणामष्टौइत्युक्ता तत्रयस्यपुंसोयत्संख्याकोवर्गोगरुडादिस्त
द्वर्गसंख्यांद्विगुणंविधायपरस्यग्रामादेर्वर्गसंख्ययाढ्यांचकृत्वातेरष्टभिःशेषितमवशिष्टताःपुंसःकाकिण्यान्नयाः एवंग्रामादेरपिवर्गसंख्याद्विगुणीकृत्वा

यद्भंद्यंकरुतेशदिङ्मितमसौग्रामःशुभोनामभात्स्ववर्गंद्विगुणंविधायपरवर्गाढ्यंगजैःशेषितं काकिण्यस्त्वजयोश्चतद्वि-
वरतोयस्याधिकाःसोर्थदोथद्वारंद्विजवैश्यशूद्रनृपराशीनांहितंपूर्वतः १ ॥

पुरुषस्यपुंसोवर्गसंख्ययाढ्यांकृत्वागजैर्भजेदवशिष्टाः ग्रा
मस्यकाकिण्योभवति एवंअनयोःपुरुषग्रामयोःकाकिणीनांविवराद्यस्याधिका अवशिष्यंतेसोर्थदःपरस्यलाभदः यथा नीलकंठस्यवर्गःसर्पःतत्सं
ख्या ५ द्विगुणः १० चरणाद्रिवर्गःसिंहः ३ तत्संख्ययायुक्ता १३ गजभक्तावशेषं ५ नीलकंठस्यकाकिण्यःएवंग्रामवर्गसंख्या ३ द्विगुणा ६ नीलकंठवर्ग ५
संख्ययायुक्ताः ११ अष्टभक्ताशेषं ३ ग्रामस्यकाकिण्यः द्वयोरंतरशेषं २ नीलकंठस्याधिकत्वेनदातृत्वाद्द्रव्यहानिरित्यर्थः उक्तंच स्ववर्गंद्विगुणीकृत्यपरव
र्गेनयोजयेत् अष्टभिस्तुहरेद्भागंयोधिकःसऋणीभवेदिति अथद्वारवेशनमाह अथेति द्विजादिराशीनांपुंसांक्रमेणपूर्वतःप्राच्यादिदिक्चतुष्टयेद्वारं
हितंयथा द्विजराशीनांकर्कवृश्चिकमीनानांपूर्वदिशि वैश्यराशीनांवृषकन्यामकराणांदक्षिणदिशि शूद्रराशीनांमिथुनतुलाकुंभानांपश्चिमदिशि नृपराशी

अथराशिपरत्वेन ग्रामनिवासे निषिद्धस्थाना निवसंततिलकयाह गोसिंहेति वक्ष्यमाणस्य ग्रामस्य वस्त्रविभागवन्नवधा विभागं कृत्वा मध्ये विभागे
गोसिंहनक्रमिथुनं न निवसेत् वृषसिंहमकरमिथुनराशिगतः पुरुषान वसेयुः अथ पूर्वककुभः पूर्वदिशा नोऽष्टदिग्गतोऽष्टदिक्षु अलिर्वृश्चिकः वदादि
राशिमतः पुरुषान वसेयुः यथा पूर्वस्यां वृश्चिकः आग्नेय्यां झषो मीनः दक्षिणस्यां कन्या नैर्ऋत्यां कर्कः पश्चिमायां धनुः वायव्यां तुला उत्तरस्यां मेषः ऐ
शान्यां कुंभः नवसेदित्यर्थः यथा अवर्गः पूर्वस्यां कवर्ग आग्नेय्यां चवर्गो दक्षिणस्यां टवर्गो नैर्ऋत्यां तवर्गः पश्चिमायां पवर्गो वायव्यां यवर्ग उत्तरस्यां शव
र्ग ईशान्यां बलीइत्यर्थः कीदृशः वर्गाः स्वपंचमपराः स्वस्मात्पंचमः परः शत्रुर्येषां ते यथा अवर्गः पूर्वस्यां बली अनेन पश्चिमायां द्वारं निवासो न
विधेयः एवं कवर्गादीनामपि वायव्यादौ द्वारं निवासो वा न विधेयः २ अथेष्टनक्षत्रायाम्यां इष्टभूम्या विस्तारायाममपीन्द्रवज्रेन्द्रवंशापूर्वार्धेनाह ए

गोसिंहनक्रमिथुनं निवसेन्नि मध्ये ग्रामस्य पूर्वककुभो लिझषांगनाश्वककर्कोधनुस्तुलमेषघटाश्वतद्वर्गाः स्वपं
चमपरावलिनः स्युरैन्द्र्याः २ एकोनितेष्टर्क्षहताद्वितिथ्यो रूपोनितेष्टायहतेन्दुनागैः ॥ एकोनितेति स्वेष्टायेति च तत्र सुधि

कारादिदंपत्योर विचिंतयेदिति वसिष्ठोक्तेः यद्देवनक्षत्रं व्यवहारनाम्ना विवाहोक्तमेलापकविधिना शुभदं स्यात् नदेवस्वेष्टभं कल्प्यं यश्च ध्वजा
द्यष्टायेषु विषम आयइष्टितः स्यात्स एवेष्टायः कल्प्यः ताभ्यां विस्तारायामज्ञानं यथा नीलकंठस्यानुराधानक्षत्रं तस्य रोहिण्या सह मेलापकः संभवती
ति इष्टभं रोहिणी कल्पितं तत्संख्या ४ एकोनितेष्टर्क्षं ३ अनेन द्वितिथ्यो १५२ हताः ४५६ इष्टायः सिंहः कल्पितः तृतीयः रूपोनितेष्टायः २ अनेनेन्दुनागाः
८१ गुणिताः १६२ युताः ६१८ यनेभ्यः १७ युताः ६३५ भूपाश्विभिः २७ ६ विभक्ताः शेषं २०३ इदं भीमे वक्ष्यमाणफलम् गृहस्य इष्टापनेसन्नभवं अथ कल्पित
दैर्घ्यं २९ अनेन भक्ते लब्धो विस्तारः ७ अथ कल्पितविस्तृतिः ७ मुक्ते लब्धं दैर्घ्यं २९ अत्र गोपीराजावाप्येकृतं सूत्रम् विष्णुव्यंकायगोभूः २९ हति
भयुग्जिफलं गोपिराजो भं शेषात् सायं वेष्टा षिद्गघ्या २१६ युतमहि ८ हतादर्क १२ भक्तसा २१ रव्यविश्वे १३ ॥ बाणाः ५ सिद्धा २४ षि १६ नागो ८ द्व २७ तिधृतिः २९

गिरिशा११त्र्या ३ कृतीं २२ द्व १४ तुई तत्वा २५ त्यष्ट्यं १७ क १ क्ष्मा १ नृखे २० ना १ ष्पूर्व ४ विकृति २३ दिना १५ द्या ७ कृती २६ भेंदु १८ काष्ठा १० गोपीराजः कथय
तिमो भूहृति भयुजिसति विष्णु अहिहताद्दकृ त्रकुत्याख्य विश्वादेयः फले आह विगतः एकोयस्मात्सव्येकः सवासौ आयश्चव्येकायः ध्वजादिरिष्टायः
सत्र्वगोभुवश्चएषांपरस्परगुणनाव्येकायगो भूहृति श्च भव्येकायगो भूहृति भैर्योर्युक् व्येकायगो भूहृतिमयुक्त स्मिन्सति भशेषात् भे २७ भक्ते सतिय
च्छेषंतस्माद्धिमुनामानं शिष्यं अहिहता अष्टगुणित्वाद्दकृ है। त्रकुत्याख्या एकविंशतिः विश्वेत्रयोदशैतादृयोगृह क्षेत्रफलं सम्पुटइष्टायसहितां आहवदन्ति
अत्रोदाहरणं इष्टायः ३ व्येकः २ गोभू १९ हृतिः ३८ इष्टर्क्षंरोहिणी तत्संख्या ४ युतं ४२ अस्मात् भैः २७ शेषं १५ एतत्संख्यया फलं २५ अहि ८ हतं २०० सा
यं २०३ इदंस्वेष्टायनक्षत्र भवंक्षेत्रफलंपूर्वमेव महद्दृहत्प्रमाणमाह वेति वा २ थवाततइष्टायसहितंजातंयत्क्षेत्रफलंअष्टिहगृह्येषुयुतं अष्टिश्चद

युक्ताघनै १७ र्ध्या पियुवाथविभक्ताभूयांश्विभिः शेषमितो हि पिंडम् ३ स्वेष्टायनक्षत्रभवोथदैर्घ्यहृत्साद्धितिविस्तृतिह्वदीर्पतो
आयाध्वजोधूमहरिश्वगोखरेभध्वांक्षकाः पिंडइहाष्टशेषिते ४ ध्वजादिकाः सर्वदिक्षिध्वजेसुखकार्यहरोपूर्वयमोत्तरेत
॥१॥

शश्च अष्टिदशाः अष्टिश्चिभिः षोडशाधिकं द्विशत्या २१६ हतोगुणितो यइष्टः एकद्वित्र्याद्येकः तेनयुक्तो कार्यमित्यर्थः अत्रैवाचार्यप्रपौत्रेगो
पिराजस्यापिपद्यं इष्टर्क्षांढ्यमुनींदवो द्विरहि ८ हृच्छेषात्त्यजेत्त्वायतोनोविद्युध्यतिशोध्यमष्टसहिताच्छेषंत्रिहित्साग्रकं चेत्स्यादिष्टयुतंषथातुतद
शेषंस्याद्ध्योरामहृत्सागमाद्धिकरान्विताः फलमभीष्टायर्क्षजजायते सिद्धे भक्तः स्यात्करादिष्टदीर्घमानार्थचैकादितिभ्रान्भभोगान्तावद्यावत्स्थि
पेदिष्ट भानविस्तारस्यादिष्टदैर्घ्येण भक्ते ३ अथोत्तरार्धेनध्वजाद्यायानाह आयेर्वर्णपरत्वेनचद्वारनिवेशनमुपजात्याह आयाइति ध्वजादिकाइति॥
पिंडेक्षेत्रफले अष्टशेषितेयदवशिष्टंतत्सरिमिताध्वजादिका आयाः स्युः ध्वजधूमौप्रसिद्धौहरिः सिंहः श्वाकुक्कुरः गोर्वृषः स्वरोनर्दभः इभोहस्ती ध्वांक्षः
काकः स्वार्थेकः ४ सर्वदिशीति ध्वजाख्ये आयेसर्वदिशिदिक्चतुष्टयेपिगृहद्वारंकार्यंहरौसिंहायेपूर्वदक्षिणोत्तरदिक्षुद्वारंकार्यम्॥ छ्री ॥ २ ॥

नपश्चिमादिशि तथा वृषाख्ये प्राच्यां दिश्येव द्वारं नान्यदिक्षु मजाख्ये आये ग्राम्यमयोः पूर्वदक्षिणदिशोः गृहद्वारं कार्यम् आयानां प्रयोजनमाह विश्वकर्मा
वृषं सिंहं गजं चैव खेटे कर्पटकाटयोः द्विपः पुनः प्रयोक्तव्यो वापीकूपसरस्सु च मृगेंद्रमासने दद्याच्छयनेषु गजं पुनः वृषं भोजनपात्रेषु छत्रादिषु पुनर्ध्वजम्
अग्निवेश्मसु सर्वेषु गृहेष्वग्न्युपजीविनां धूमं नियोजयेत्के चित्स्थानं म्लेच्छादि जातिषु खरं वेश्यागृहे शस्तो ध्वांक्षः संन्यापिकुटीषु च वृषसिंहध्वजं श्वापि
प्रासादपुरवेश्मनि गजायैवाध्वजायेवा गजानां सदनं शुभं अश्वालयं ध्वजाये वस्त्वरायेवृषभेपिवा अमंत्रं छत्रवस्त्राणां वृषायेवा ध्वजेपिवा पादुकोपा
नहौ कार्यं सिंहाख्येप्यथवा ध्वजे उक्तानामप्यमुक्तानां सर्वेषां च ध्वजः शुभ इति अथ ब्राह्मणादि वर्णपरत्वेन द्वारनिवेशनमाह अथवेति द्विजादितो ब्रा
ह्मणादिवर्णविभागेन पश्चादुदक्पूर्वयमे यथा ब्राह्मणस्य पश्चान्मुखं क्षत्रियस्योदङ्मुखं वैश्यस्य पूर्वमुखं शूद्रस्य दक्षिणामुखमित्यर्थः श्रीपतिः ध्व
जे प्रतीचीमुखमग्रजानामुदङ्मुखं भूमिभृतां च सिंहे विशो वृषे प्राग्वदनं गजे तु शूद्रस्य याम्याननमामनंतीति ५ अथ गृहारंभे विशिष्य कालं निषेधमु

प्राच्यां वृषे प्राग्यमयोर्गजे थ पश्चादुदक्पूर्वयमे द्विजादितः ५ गृहेशतत्स्त्रीसुखवित्तनाशोऽर्केंदुईज्यशुक्रे विबलेऽस्त नीचे॥

पजात्याह गृहेशेति अर्केन्दुईज्यशुक्रे विबले निर्बले अस्ते अस्तंगते नीचे नीचराशिगते सति क्रमात् गृहेशतत्स्त्रीसुखवित्तनाशो भवति
यथा सूर्ये निर्बले नीचस्थिते गृहेशस्य नाशः इंदौ निर्बले अस्तमिते नीचगते वा गृहेशस्य स्त्रीनाशः गुरौ ईज्ये निर्बलेऽस्तगे नीचगते वा गृहेशस्य सु
खनाशः शुक्रे निर्बलेस्तगे नीचगे वा वित्तनाशः वशिष्ठस्तु नीचे शत्रुगते नीचे शुक्रे चंद्रेऽथवार्के निर्मितसदनं शश्वद्द्विज्ञो निस्वत्वमाप्नुयादिति अ
स्तु दोषो त्र न ग्राह्यः ग्रामादिं ग्रसिकाबुधैः नास्ति दोषः सदा चंद्रेन मैत्रे च स्वस्य सौ चतइति कर्त्तुरिति पुनः क्षेत्रे दिनचंद्रस्तद्विधुभे सति गृहस्य विस्तारायामव
शादुत्पन्नभं तद्गृहभं तस्मिन् पुरःस्थिते सम्मुखस्थिते सति कर्तुर्गृहनिर्माणकर्तुस्तद्गृहे स्थितिर्निवासो न स्यात् पृष्ठगते वा विधुवास्तुनो भे सति खनिः
खननं चौरकृता यद्वारं तद्वशात्सर्वस्वहानिः स्यादित्यर्थः पुरः पृष्ठस्थितेत्वं च दिग्द्वारभक्रमेण यथा ॥ ७ ॥ ६ ॥ ७ ॥

गृहेद्वारंयस्यांदिशिविधित्सितंतद्दिङ्नक्षत्रेषुतस्यष्ठदिङ्नक्षत्रेषुचगृहस्तंभोनकार्यः वामदक्षिणनक्षत्रेषुगृहारंभःसुखेनकार्यःयदुक्तंब्रह्मशंभु
ना गृहस्पलब्धकक्षेचक्षनक्षत्रेचचंद्रमाःशलाकासप्तकेदेयंकृत्तिकादिक्रमेणच वामदक्षिणभागेतत्रशस्तशांतिकारकं अग्रपृष्ठेनदातव्यंयदि
च्छेच्छ्रेयआत्मनः ऋक्षचंद्रस्यवास्तोश्चअग्रपृष्ठेनशस्यतइति अयमाशयः कृत्तिकादिसप्तनक्षत्रेषुअनुराधादिसप्तस्ववागृहनक्षत्रेचंद्रनक्षत्रेच
सतिपूर्वद्वारंपश्चिमद्वारंवानकार्यं तत्रचंद्रःपृष्ठस्थितोग्रस्थितोवाभवति एवंमघादिसप्तसुधनिष्ठादिसप्तसुवागृहनक्षत्रेचंद्रनक्षत्रेवासतिदक्षि
णद्वारमुत्तरद्वारंवानकार्यमित्यर्थः ६ इदानींव्ययर्क्षांशनपुरःसरसफलमंशकज्ञानंउपजात्याह भमिति प्रागुक्तदिशाकल्पितंयद्गृहभंतत्रनागैरष्टभि
स्तष्टंअवशिष्टंव्ययईरितः यथा रोहिण्यां ४ अयमेवव्ययःअसौव्ययः ध्रुवादिनमाक्षरयुक् ध्रुवादिनामान्यधुनैववक्ष्यतियत् यानिदिक्षुनामानि

कर्त्तुःस्थितिर्नोविधुवास्तुनोर्भं पुरःस्थितेपृष्ठगतेखनिःस्यात् ६ भंनागतष्टंव्ययईरितासौध्रुवादिनामाक्षरयुक्सपिंडः
तष्टोगुणेरिंद्रकृतांतभूपाख्यंशाभवेयुर्नेशफभोंतकोत्र ७ दिक्षुपूर्वादितःशालाध्रुवाभूर्द्वेकृताष्टगाः शालाध्रुवांकसंयो
गःसैकोवेश्मध्रुवादिकम् ८ ॥ दिक्षुद्वाराणिचिकीर्षितानितदनुरोधेनयद्द्वारगतंध्रुवादिनामाक्षरसंख्ययायुक्तः ततःसपिंडः प्रागानी
तपिंडाप्युक्तःगुणैस्त्रिभिस्तष्टोभक्तावशिष्टः एकद्वित्रिशेषेणइंद्रयमराजसंज्ञकास्त्रयोंशाःस्युः अत्रगृहारंभे नकोयमाख्योंशःकोनफभः अ
र्थादिंद्रराजांशौशुभफलदौ ७ अथशालाध्रुवाद्यानयनानुष्टुभाह दिक्ष्विति प्राच्यांद्वारंचिकीर्षितेशालाध्रुवांकएकःदक्षिणस्यांद्वौ पश्चिमायांकृता
श्चत्वारःउत्तरस्यांगजाअष्टौ अथदिक्पर्यत्वेनयावंतिद्वाराणिएकद्वेत्रीणिचत्वारिवाचिकीर्षितानितावतांशालाध्रुवकानांसंयोगःसैकएकयुतःसन्
ध्रुवादिकंवेश्मगृहंस्यात् यथा पूर्वस्यांपश्चिमायांद्वारेअभीष्टेशालाध्रुवौ१।४ अनयोर्योगः५सैकः६ एहजातंकांताख्यं एवंपूर्वदक्षिणोत्तरदिक्षु
शालाध्रुवाणाम्१।२।८ संयोगः११सैकः१२ धनदाख्यंगृहंदिक्चतुष्टयेविजयाख्यंगृहंषोडशमिति॥ ८ ॥ ८ ॥ ८ ॥ ८

अथध्रुवादीनांनामाक्षरसंख्यायथावक्रंछंदसाह तिथ्यर्केति दिक्पूर्वादितइत्यादिनायत् ध्रुवादिवेश्मसमाप्तंशालाध्रुवांकसंयोगः सैकोवेश्मेत्युक्त
दिशासंख्यामवधारयेत् साचेत्संख्यापंचदशीद्वादशीअष्टमीषोडशीनवमीएकादशीचतुर्दशीवास्यात्तदागृहनामाक्षरत्रयात्मकंस्यात् १५।१२।८।१६।९
।११।१४ अत्रत्रीण्येवाक्षराणिसैवसंख्या प्रथमाद्वितीयाचतुर्थीपंचमीषष्ठीदशमीतृतीयात्रयोदशीवास्यात् तदागृहनामद्वौअक्षरद्वयात्मकंस्यात्
सासंख्यासप्तमीस्यात् तदाध्यपश्चतुरक्षरंगृहनाम १ अथपद्यपिध्रुवादिनामाक्षरसंख्याज्ञानंप्राक्पद्येनैवजाततथापितन्मध्येकानिशुभानिका
न्यशुभानिइत्यसदृशफलसूचनार्थंषोडशगृहाणांनामानिअयोगीतछंदसाह ध्रुवधान्येइति अत्रार्यागीतिलक्षणंवाआर्यापूर्वार्धेयदिगुरुणैके

तिथ्यर्काष्टाष्टिगोरुद्रशक्रेनामाक्षरंत्रयं भूद्व्यब्धीषंगदिक्वह्निविश्वेषद्वौनगेब्धयः ९ ध्रुवधान्येजयनंदौखरकां
तमनोरमंसुमुखंदुर्मुखोग्रं रिपुदंवित्तदनाशौवाक्रंदंविपुलंविजयाख्यस्यात् १० पिंडेनवांकागगजाग्निनागना
गाब्धिबाणैर्गुणितेःक्रमेण विभाजितेनागवर्गाकसूर्यनामर्क्षतिथ्यृक्षकभानुभिश्च ११॥ ११ ॥ ९ ॥

नाधिकेननिधनेस्तुकंटतरन्तद्व्रिखिलंयदीसमुदितेयमार्यागीतिरिति अत्रार्यासपूर्वार्द्धे॥ऽ·ऽ॥ऽऽ॥ऽ ॥·ऽ·ऽ॥उत्तरार्द्धे॥ऽ·ऽ॥ऽऽ॥ऽऽऽ
·।·।ऽ।ऽ·ऽऽ मान्यलक्षणमप्यनुसंधेयं विशेषलक्षणस्यसामान्यलक्षणाधीनत्वात् निधनेप्रांतेध्रुवमूर्ध्वमुखंप्रथमंगृहं धान्यपूर्वद्वारंद्वितीयंज
यंदक्षिणद्वारंतृतीयं नंदंप्राग्दक्षिणद्वारं चतुर्थं खरंपश्चिमद्वारंपंचमं कांतंप्राक्पश्चिमद्वारंषष्ठं मनोरमंदक्षिणपश्चिमद्वारंसप्तमं सुवक्त्रंप्राग्दक्षि
णपश्चिमद्वारमष्टमं दुर्मुखमुत्तरद्वारंनवमंक्रूरंपूर्वोत्तरद्वारंदशमं रिपुदंदक्षिणोत्तरद्वारमेकादशम् वित्तदंपूर्वदक्षिणोत्तरद्वारंद्वादशंनाशाख्यंपश्चि
मोत्तरद्वारंत्रयोदशं आक्रंदंप्राक्पश्चिमोत्तरद्वारंचतुर्दशम् विपुलाख्यंदक्षिणपश्चिमोत्तरद्वारंपंचदशं विजयंचतुर्द्विक्द्वारंषोडशंइति १० अथके
षांचिन्मतेनगृहस्यायादिनवकमप्युजातिकापद्याचक्राख्याभ्यामाह पिंडइति ॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥

आयइति पिंडेक्षेत्रफलेनवधास्थापितेक्रमेणनवादिरंकैर्गुणितेक्रमेणनागादिभि ⁛ ⁛ ⁛ ⁛ ⁛ ⁛ रंकैर्भक्तेचसतियद्वशिष्टंतदायादिकंस्यात् यथा क्षेत्रफलंनवभिर्गुणितं अष्टभिर्भक्तंशिष्टआयःस्यात् तद्यथापिण्डः २९२ नवगुणितः १० २७ अष्टभक्तेशेषं ३ सिंहायोजातः एवंसर्वेप्यानीताः इमेवारः ७ अंशकः ५ द्रव्यं ४ ऋणं १ नक्षत्रं ४ रोहिणीतिथिश्चतुर्थी ४ योगः २ प्रीतिः आयुः ६४ उक्तंच गो ९ क ९ तं ६ अ ८ ८ गुणा ३ ८ ८ नाग ८। जलधि ४ व्याले ८ र्हतंभूफलनागा ८ द्यं ७ क ९ दिवाकरा १२ ष्ट ८ भं २७ तिथी १५ योगैः २७ खसूर्यै १२० र्भजेद् अयंवारमंशांशकं धनमृणंतारांतिथिंचितयेद्योगंचायुरिति अंशकपदेभागेहृतेः तान्त्रिकाइति अथैषांप्रयोजनम् विषमायश्शुभायेवसमायःशोकदुःखदः वाराणांसूर्यारवारराश्यंशाःसदावह्निभयप्रदाः यश्च गुणितगतोभौमवारःसनिंद्यः तद्राशिःमेषवृश्चिकौतौनिंद्यौ तदंशायस्मिनकस्मिंश्चिल्लग्नेमेषवृश्चिकनवांशानिषिद्धः एवंसूर्येरोपि अन्येषांवारराश्यंशाःशुभाः अंशनाच गृहस्यागतनक्षत्रंतद्द्विराश्यात्मकंयदितन्नवांशवशात्तत्रज्ञातव्यंसर्वदागृह इति कृत्तिकाद्विराश्यात्मिकावशेषेमेषः द्यादिशेषेवृषः मृगेसार्धद्विशेषेमिथुनं अन्यथावृषःपुनर्वसावप्यशकत्रयंयावन्मिथुनं अन्यथाकर्कः एवमुत्तरफाल्गुन्यादिषुद्विराश्यात्मकेषूहनीयंनतुनिःसंदग्धेषुअश्विन्यादिषुधनर्णयोश्चधनादिकंगृहं वृद्धौनिर्धनंयदृणाधिकमितिचक्षत्रस्य विपत्संदोषंविपत्ताराप्रत्यराप्रतिकूलदानिधनाख्यातारकातुसर्वदानिधनप्रदा अस्यार्थः गृहकर्तुर्नक्षत्राद्गृहभसंख्यांनवभक्तावशिष्टंयदिविपत्तारादिकंस्यात् तदातद्गृहमनिष्टंस्यात् अन्यथाशुभानिकश्यपःदत्तेदुःखंतृतीयर्क्षंपंचमर्क्षंयशःक्षयम् आयुःक्षयंसप्तमर्क्षंकर्तृभाद्यादिसद्मभंमितियदातुगृहकर्तुर्गृहस्यचैकमेवनक्षत्रंतत्रस्वयमेवनिर्णयमाह गृहेति गृहेशर्क्षंस्वामिनक्षत्रंप्रागुक्तप्रकारेणानीतंगृहभंचतयोरैक्यंएकमेवचेद्भवेत्स्यात्तद्गृहकर्तुर्मरणप्रदंस्यात् गृहस्यतत्संतेस्त्वकंधिस्म्यचेन्निधनप्रदमितिवसिष्ठोक्तेः वास्तुशास्त्रेद्विराश्यात्मकेषुराश्यादिनिर्णयोन्यथाभिहितःअश्विन्यादित्रयंमेषेसिंहेप्रोक्तंमघात्रयम् मूलादित्रितयंचापेशेषेषुनवराशयइति अयंपक्षेवास्तुशास्त्रोनवांशानुक्तेरुक्ताः गृहस्यनक्षत्रराशिज्ञानेवर्णोवश्यमित्याद्युक्तप्रकारेणगृहस्वामिनक्षत्रराशिवशात् घटितादिविचारोविधेयः तत्रनाडीवेधप्राशस्त्यमुक्तंचिंतामणौ सेव्यसेवकयोश्चैवगृहतत्स्वामिनोरपि॥ ॥ ॥

परस्परंमित्रयोश्चेदेकनाडीप्रशस्यतइति तिथिप्रयोजनंदर्शरिक्तांचवर्जयेदिति योगानामपिदुष्टयोगाश्चवर्ज्याः आयुःप्रयोजनं तावत्कालंगृहावस्थि
तिरिति अत्राभीष्टांशादिसिध्यर्थंअंगुलादिकंप्रक्षिप्यविशोध्यवाप्तेन्नफलसाध्यं १२ अथगृहारंभेवृषवास्तुचक्रंशालिनीच्छयामाह गेहाद्यारंभइति
लाभोरामैरिति गेहंगृहंआदिशब्देनप्रासादग्रामादितदारंभेसतिअर्कभात् सूर्याक्रांतनक्षत्रात् रामैस्त्रिभिर्भैः वृषस्यवत्सस्यशीर्षस्थितैःसद्भिःदाहः
फलंस्यात् ततोवेदभैः अग्रपादेपुरस्थितपादद्वयस्थितैः शून्यगृहंजनवासरहितंस्यात् ततश्चतुर्भैः पृष्ठपादद्वय स्थैःस्थिरत्वंगृहकर्तुः ततोरामैः पृष्ठ
स्थैः श्रीस्यात् ततोयुगैःचतुर्भैः दक्षिणकुक्षिस्थितैःलाभः ततस्त्रिभिःपुच्छगैःस्वामिनोगृहकर्तुर्नाशः ततोवेदैः वामकुक्षौनैस्व्यंदारिद्र्यं ततस्त्रिभिर्मुख

आयोवारांशकोद्रव्यमृणमृक्षंतिथिर्युतिः आयुश्चाथगृहेशर्क्षगृहभैक्यंमृतिप्रदम् १२ गुणकाः ९।९।६।८।३।८।८।४।८।
भाजकाः ८।७।९।१२।८।२७।१५।२७।१२० गेहाद्यारंभेऽर्कभाद्वत्सशीर्षेरामैर्दाहोवेदभैरग्रपादे शून्यंवेदैःपृष्ठपादेस्थि
रत्वंरामैःपृष्ठेश्रीर्युगैर्दक्षकुक्षौ १३ लाभोरामैःपुच्छगैःस्वामिनाशोवेदैर्नैःस्व्यंवामकुक्षौमुखस्थैः रामैःपीडासंततंचार्कधि
ष्ण्याद्भैरुद्रैर्दिग्भिरुक्तंत्वसत्सत् १४ कुंभेर्केफाल्गुनेप्रागपरमुखगृहंश्रावणेसिंहकर्कौःपौषेनक्रेचयाम्योत्तरमुखं
सदनंगोजकेर्केचराधे॥ २ ॥

स्थैः गृहकर्तुःपीडासंततंअनवरतंस्यात् उक्तंचभ्रात्चरणैः त्रिवेदवेदाग्नियुगाग्निवेदत्रिकेषुभानोःशशिभंमृदेषु दाहोविनाशःस्थिरताधनंश्रीःशू
न्यंचदारिद्र्यमृतिक्रमेणेति अथैतस्यनिष्कृष्टार्थमाह वेति अर्कधिष्ण्यात्सूर्यनक्षत्राद्भैःसप्तभैरसत्फलं ततोरुद्रैरेकादशधिष्ण्यैःसत्फलम् ततोदिग्भिर्दशनक्षत्रै
रसत्फलमुक्तंस्यादितिनिष्कृष्टोऽर्थः उक्तंच रविभात्सप्तनेष्टानिशक्रभान्यैकादशाष्टमात् दशशेषाण्यनिष्टानिसाभिजिद्वृषवास्तुनीति १३।१४ अथसूर्य
चंद्रमासेकोणप्रागादिदिक्षुद्वाराणिगृहनिर्माणमक्षत्राणिस्रग्धरयाह कुंभेऽर्कइति कुंभस्थेसूर्येफाल्गुनेचमासि॥ ॥ ॥

प्रागपरमुखं गेहं प्राङ्मुखं पश्चिममुखं वा गृहं सत् शुभफलं स्यात् श्रावणे मासि सिंहकर्कसंक्रांतौ सौम्य प्राङ्मुखं पश्चिममुखं वा गृहं स्यात् पौषमासे मकरे म
करसंक्रांतौ च प्रागपरमुखं गृहं स्यात् अथ गोजगेर्के वृषमेषगे सूर्ये राधे वैशाखे मासि याम्योत्तरमुखसदनं शुभं स्यात् मार्गे मार्गशीर्षे अलिजूकालिगे तुलावृ
श्चिकगते सूर्ये सति याम्योत्तरमुखसदनं दक्षिणमुखमुत्तरमुखं वा सदनं गृहं स्यात् नारदः गृहसंस्थापनं सूर्ये मेषगे शुभदं भवेत् वृषस्थे धनवृद्धिः स्या
न्मिथुने मरणं ध्रुवं कर्कटे शुभदं प्रोक्तं सिंहे भृत्यविवर्द्धनं कन्यारोगं तुलासौख्यं वृश्चिके धनवर्धनं कार्मुके च महाहानिर्मकरे स्याद्धनागमः कुंभे तु रत्नला
भः स्यान्मीने सद्म भयावहम् इति चांद्रमासानाह श्रीपतिः शोको धान्यं मृतिपशुहृतं द्रव्यवृद्धिर्विनाशो युद्धं भृत्यक्षतिरथ धनं श्रीश्च वह्नेर्भयं च लक्ष्मीप्रा
प्तिर्भवति भवनारंभकर्तुः क्रमेण चैत्रादू चे मुनिभिरिति फलं वास्तुशास्त्रोपदिष्टं इति अत्र सौरचांद्रमासानां महान् शुभाशुभफलविरोधः अत्र चिकी
र्षितगृहद्वारानुकूलरविसंक्रमसमीचीने विहितमासेष्वेव वैशाखादिषु गृहारंभः कार्य इति विरोधाभाव इति तथैवोपनिबद्धं नियममाह श्रीपतिः।
कर्कनक्रहरिकुंभगतेर्के पूर्वपश्चिममुखानि गृहाणि तौलिमेषवृषवृश्चिकयोगे दक्षिणोत्तरमुखानि च कुर्यात् अन्यथा यदि करोति दुर्मतिर्व्याधिशो
कभयनाशमश्नुते मीनचापमिथुनोगनागते कारयेन्न गृहमेव भास्करे इति तत्र कुंभार्कसहिते फाल्गुने प्रागपरमुखं गृहं कार्यं उभयोर्विहितयोरेकवाक्यं
ताश्रयणात् एवमग्रेपि सर्वत्र जगन्मोहने पाषाणेष्टकादिगेहानि सिंहमासे न कारयेत् तृणदारुगृहारंभे मासदोषो न विद्यत इति अथ नक्षत्राण्याह ध्रुवे।
ति ध्रुवाणि रोहिण्युत्तरात्रयं मृदूनि मृगरेवतीचित्रानुराधाः वरुणः शततारका स्वाती वसुः धनिष्ठा अर्को हस्तः पुष्यश्च एषु गृहनिर्माणं सत् शुभं स्या
त् गर्गः उत्तरे पित्र्ये रोहिण्यां पुष्ये मैत्रे करद्वये धनिष्ठाद्वितये पौष्णे गृहारंभः प्रशस्यत इति अत्र मृगो नोक्तः तदुक्तिश्च महेश्वराद्युक्तेः सूतीगेहमिति आदि
त्यां पुनर्वसौ सूतिकागृहनिर्माणं प्रशस्तम् तत्रेति तत्र सूतीगृहे हरिमविधिभयोः श्रवणाभिजितयोर्नक्षत्रयोः प्रवेशः शस्तः लग्नः पुनर्वसौ चूपादौ
वा कर्तव्यं सूतिकागृहं श्रवणाभिजितोर्मध्ये प्रवेशं तत्र कारयेदिति अत्र नृपयदोपादानात् ब्राह्मणानां पूर्वोक्तनक्षत्रेष्वेव कार्यम् आवश्यकत्वे तु
श्रवणाभिजितोर्मुहूर्तेः तदुदयोवाग्रात्यः न च सूतिगृहं नैर्ऋत्यां कार्यम् नैर्ऋत्यां सूतिकागृहमिति वसिष्ठोक्तेः॥ छ ॥ छ ॥

वराहेणात्रानक्तनक्षत्राण्यभिहितानि हस्तादित्यशशांकपुष्पपवनप्राजेशमित्रोत्तरा चित्राश्विश्रवणेषुवृश्चिकघटौहित्वाविरिक्तेतिथौ शु।
क्रावार्यशनैश्चरक्षशशिनांवारेनुकूलेविधौसद्भिर्वेश्मनिसूतिकागृहविधिः क्षेमंकरः कीर्त्यतेइति नवमेमासिसूतिकागृहे प्रवेशः कार्यः गर्गः
मासेतुनवमेप्राप्तेपूर्वपक्षेशुभेदिने सूतिकासंभवेकालेसद्यएवप्रवेशयेत् रोहिण्यैंद्रवपोष्णेषुस्वातीवारुणयोरपि पुष्येपुनर्वसौहस्तेधनिष्ठा।
स्युत्तरासुच मैत्रेत्वाष्ट्रेतथाश्विन्यांसूतिकागारवेशनं सर्वेशुभग्रहाः केंद्रेपापाश्चत्रिषडायगाः शुभांशेशुभसंदृष्टेसूतिकावेशनंशुभमिति १९
अथप्रागभिहितानांसौराणांचान्द्राणांमासानांप्रकारांतरेणैकवाक्यतांशार्दूलविक्रीडितेनाह केंश्विदिति पूर्वदिग्द्वारवेशेनैकावाक्यतोक्ता इदा।
नींमेषस्थेरवौमधौचैत्रमासेगेहंप्रारब्धंशुभंस्यात् तथावृषस्थेसूर्येज्येष्ठमासेकर्कस्थेशुचावाषाढेसिंहगतेर्केभाद्रपदेमासि घटेतुलास्थेरवौआ

मार्गेजूकालिकेसहुवमृत्तुवरुणस्वातित्वस्वर्कपुष्यैः सतीगेहंत्वदित्यांहरिभविधिमयोस्तत्रशस्तःप्रवेशः १५ केश्विन्मे
षरवौमधौवृषभगज्येष्ठेशुचौकर्कटेभाद्रेसिंहगतेघटेश्वयुजिचोर्जेलौमृगेपौषके॥ ॥श्वयुज्याश्विनेमासे अलौवृश्चिक।

स्थेर्केऊर्जेकार्तिकमासे मृगेमकरस्थेर्केपौषमासेनक्रघटेमकरेकुंभेर्केमाघेप्रारब्धंगृहंशुभंस्यादित्यर्थइतिकेश्चिन्निगदितं अनेनमेषेर्के
चैत्रेपिगृहंशुभंयस्तुचैत्रनिषेधः समीनार्कविषयः वृषस्थेर्केज्येष्ठेपिशुभंयस्तुज्येष्ठनिषेधः समिथुनार्कविषयः कर्कस्थेर्केआषाढेपिशुभं
आषाढनिषेधस्तुमिथुनार्कविषयः सिंहेर्केभाद्रेपिशुभम् भाद्रनिषेधस्तुकन्यार्कविषयः श्रावणस्तुतत्रविहितत्वादेवशुभः वृश्चिकेर्केकार्त्ति
केपिशुभम् निषेधविषयंस्वयमेववक्ष्यति मार्गशीर्षस्तुविहितएव मकरस्थेर्केपौषेपिशुभं धनुरर्कसाहित्येसोप्यशुभः मकरेकुंभस्थेर्केमासे
पिशुभम् निषेधस्तुधनुरर्कविषयः अतएवसौम्यफाल्गुनवैशाखमाघश्रावणकार्त्तिकः मासास्युर्गृहनिर्माणेपुत्रारोग्यधनप्रदाइतिमाद्वाक्य
मेमासेतपस्येतपसिमाधवेनभसित्विषे॥ ७६ ॥

ऊर्जे च गृहनिर्माणं पुत्रपौत्रप्रवर्द्धनमिति वसिष्ठवाक्यं च आश्विनकार्तिकमार्गशीर्षाणां शुभत्वप्रतिपादकं तुलावृश्चिकमकरकुंभार्कसाहित्ये प्राश-
स्त्यपरं वचनांतरे रवौ द्विद्विनिषेधः प्रागुक्तविषयएव एवं फाल्गुनस्य शुभत्वं कुंभार्कविषयं कुंभार्कराहित्ये तु निषिद्धः ननु कार्तिकमाघमासोऽपि प
मिना निषिद्धौ तयोः को विषयइत्यत आह अथेति ऊर्जः कार्तिको मासः कन्यागतेऽर्केन सत् न शुभः च पुनः तथा माघमासः धनुष्यपि धनुरर्केन स
न् नन्वेतदयुक्तं यतः शुक्लादिचांद्रमासे चैत्रादिमाससंज्ञाः संति तत्र कार्तिके कन्यासंक्रांतिर्माघे धनुःसंक्रांतिश्च कदापि न संभवति अत आह कृ
ष्णादिमासादिति मासो द्विविधः शुक्लादिः कृष्णादिश्च तत्र चैत्रशुक्लप्रतिपदामारभ्यामावास्यांतपर्यंतं शुक्लादिः कृष्णप्रतिपदमारभ्य पूर्णिमांतप
र्यंतं कृष्णादिः उभयत्रापि शास्त्रे व्यवहारः अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने इति मासे भाद्रपदे दृष्टव्या कृष्णपक्षे धरात्रके भवेत्प्रोष्ठपदे मासि इत्यस्मी

माघे न कुघटे शुभं निगदितं गेहं तथोर्जे न सत् कन्यायां च तथा धनुष्यपि न सत्कृष्णादिमासाद्भवेत् ॥ १६ ॥ पूर्णेन्दुतः प्राग्व
दनं नवम्यादिपूत्तरास्यं त्वथ पश्चिमास्यं दर्शादितः शुक्लदले नवम्यादौ दक्षिणास्यं न शुभं वदन्ति ॥ १७ ॥ १७ ॥ ९

नामसास्मतेति च अत्र यदि दर्शांतो मासो विवक्ष्यते तदा भाद्रपदकृष्णपक्षे श्रावणे मासे चेत्यर्थं स्यात् तदेतन्मासेस्यकृष्णपक्षत्वे प्रमाणं तत्राश्विनपू-
र्णिमातः कार्त्तिकपूर्णिमांतं कृष्णादित्वेन व्यवहारात्तत्र कन्यासंक्रांतिसंभवान्निषेध उपपन्नो भवति एवमेव माघमासि धनुरर्कसंभवेन निषेधसार्थ-
क्यमित्यलम् १६ अथ तिथिपरत्वेन द्वारनिषेधमुपजातिकयाह पूर्णेन्दुत इति पूर्णेन्दुतः पूर्णिमातः कृष्णाष्टमीपर्यंतं प्राङ्मुखं गृहं शुभं न वदंति कृष्णे
नवमीतः चतुर्दशीपर्यंतं क्रियमाणमुत्तरास्यं न शुभम् अथ दर्शादितः शुक्लाष्टमीपर्यंतं पश्चिमास्यं गृहं न शुभं शुक्लनवमीतश्चतुर्दशीपर्यंतं दक्षिणा-
स्यं गृहं शुभं न वदंति तास्तास्तिथिषु तत्तद्दिङ्मुखं गृहं न कर्त्तव्यमित्यर्थः व्यवहारोच्चये पूर्णिमातोऽष्टमी यावत्पूर्वास्यं वर्जयेद्गृहं उत्तरास्यं न कुर्वीत
नवम्यादि चतुर्दशी अमायाश्चाष्टमी यावत्पश्चिमास्यं विवर्जयेत् नवम्यादौ दक्षिणास्यं ... चतुर्दशीमिति वधादिविचारो न लिखितः ग्रंथगौर-

अथ पंचांगशुद्धिं लग्नशुद्धिं चानुष्टुभाह भौमार्केति भौमार्कवारौ रिक्ताश्च प्रसिद्धाः अमा अमावास्या आदितः यत् उपलक्षणत्वात् दर्शस्यापि एतैरूनकाले

तथा चरराशिर्मेषकर्कतुलामकरैः रहिते लग्ने स्थिरे द्विस्वभावे वेत्यर्थः तथा विपंचके रुगनलनृपचोरमृत्युसंज्ञके पंचकरहिते इत्यर्थः उक्तं च [illegible]

प्रतिपत्कुरुते दुःखं चतुर्थी धनहारिणी अष्टम्युच्चाटनं चैव नवमी शस्त्रघातिनी दर्शे राजभयं चैव भूते दारविनाशनमिति माण्डव्येन स्तंभोच्छ्रायं धनिष्ठापंचके

नैव कुर्यात्स्तंभसमुच्छ्रयः सूत्रधारशिलान्यासप्राकारादिसमारंभेऽपि इति व्यष्टांत्यइति अष्टमद्वादशस्थानव्यतिरिक्तस्थैः शुभैः पापैस्तृतीयैकादशस्थ

स्थानस्थैश्चोपलक्षिते लग्ने गृहारंभः कार्यः १८ अथ देवालयादौ विदिक्स्थराहुमुखमिंद्रवंशयाह देवालय इति अन्वयस्तु यथासंबंधः देवालय

प्रारंभे राहुमुखं मीनार्के तत्त्रिराश्यवस्थिते सूर्ये ऐशान्यां विलोमतो विपरीतविदिक्षु वायव्यादिषु राहुमुखं स्यात् यथा मीनमेषवृषराश्यवस्थिते सूर्ये ई

भौमार्करिक्तामायुते चरे लग्ने विपंचके व्यष्टांतस्थैः शुभैर्गेहारंभस्त्वायारिगैः खलैः १८ देवालये गेहविधौ जलाशये राहोर्मुखं शंभुदिशो विलोमतः ॥

शान्यां राहुमुखं मिथुनकर्कसिंहस्थितेऽर्के वायव्यां कन्यातुलावृश्चिकस्थितेऽर्के नैर्ऋत्यां धनुर्मकरकुंभस्थे

ऽर्के आग्नेय्यां राहुमुखमित्यर्थः एवं गृहारंभेऽपि सिंहार्के तत्त्रिराश्यवस्थितेऽर्के विलोमतः ऐशान्यां राहुमुखं स्यात् वृश्चिकादित्रिभे वायव्यां कुंभादित्रिभे

नैर्ऋत्यां वृषादित्रिभे आग्नेय्यां राहुमुखं स्यात् तथा जलाशयप्रारंभेऽपि मकरतत्त्रिराश्यवस्थितेऽर्के विलोमत ऐशान्यां राहुमुखं स्यात् मेषादित्रिभे वायव्याम्

कर्कादित्रिभे नैर्ऋत्यां तुलादित्रिभे आग्नेय्यां राहुमुखं स्यादित्यर्थः फलमाह खात इति देवालयादिविषयके खाते भूमिशोधने कर्तव्ये सति राहुमुखाक्रां

तदिशः सकाशात् पृष्ठवर्तिनी विदिक् शुभा भवेत् यथैशान्यां राहुमुखं तत्पृष्ठदिशि [illegible] तस्यां प्रथमं खातारंभः शुभफलदः एवं वायव्यां राहुमुखं तत्पृष्ठ

विदिगैशानी तस्यां खातारंभः शुभः एवं सर्वत्र उक्तं च ईशानतः सर्पति कालसर्पो विहाय सृष्टिं गणयेद्विदिक्षु शेषस्य वास्तोर्मुखमध्यपुच्छं त्रयं परित्यज्य खनेच्चतु

र्थम् वृषार्कादि वयवेयां सिंहादिगणयेद्गृहे देवालये च मीनादितडागे मकरादिकमिति ॥ ७ ॥ ७ ॥ ९ ॥ रामः

खातारंभादिनक्षत्राण्याह माण्डव्यः अधोमुखैर्भैर्विदधीत खातं शिलास्तथैवोर्ध्वमुखैश्च पट्टं तिर्यङ्मुखैर्द्वारिकपाटदानं गृहप्रवेशो मृदुभिर्ध्रुवर्क्षैरि ति १९ अथ गृहे कूपनिर्माणे दिग्वशेन तस्य फलं शालिन्याह कूपेइति वेश्मभूमौ मध्यविन्यस्तया मितिवास्तुशब्दः पुल्लिंगः वास्तोर्गृहस्य मध्यभागे कूपे जलकूपे सति स्वामिनोऽर्थनाशः स्यात् अथैशान्यादिषु सप्तसु मार्गेष्वष्टसु दिक्षु पुष्टिप्रियादिफलम् यथैशान्यां कूपे पुष्टिः पूर्वस्यामैश्वर्यवृद्धिः आग्नेय्यां पुत्रनाशः दक्षिणस्यां स्त्रीविनाशः नैर्ऋत्यां गृहपतेर्मृतिः पश्चिमायां संपद्वायव्यां शत्रुतः सकाशात् पीडा स्यात् उत्तरस्यां कूपे सुखं गृहस्वामिनएव वसिष्ठः ऐश्वर्यं पुत्रहानिश्च स्त्रीनाशो निधनं भवेत् संपच्छत्रुभयं सौख्यं पुष्टिः प्राच्यादितः क्रमात् कूपे कृते मध्यमे तु धनहानिर्निदिष्टा तु नीति। अथ कूपारंभे चक्रमाह कूपेर्कभान्मध्यगतैस्त्रिभिर्भैः स्वादूदकं पूर्वदिशास्त्रित्रिभिः खण्डजलं स्वादुजलं जलक्षयं स्वादूदकं क्षारजलं शिलाश्चजलं

मीनार्कसिंहार्कमृगार्ककर्कि भे खातमुखवास्तु विदिक्क्रमाभवेत् १९ कूपे वास्तोर्मध्यदेशेऽर्थनाशस्त्वैशान्यादौ पुष्टिरैश्वर्यवृद्धिः सूनोर्नाशः स्त्रीविनाशो मृतिश्च संपत्पीडा शत्रुतः स्याच्च सौख्यं २० स्नानास्यपाकशयनास्त्रभुजेश्च धान्यभांडारदैवतगृहाणि च पूर्वतः स्युः॥ ॥क्षारजलं मिष्टं कं मार्ग्वेदा सूर्यभात्त्रित्रिमितैः क्रमात् क्रमभमिति २० अथ दिक्परत्वेन उपकरणगृहाणि वसंततिलकयाह स्नानस्येति पूर्वतः पूर्वाद्यष्टदिक्षु स्नानतः गृहाणि स्युः यथा पूर्वस्यां स्नानगृहं आग्नेय्यां पाकगृहं दक्षिणस्यां शयनगृहं नैर्ऋत्यां शस्त्रगृहं पश्चिमायां भोजनगृहं वायव्यां धान्यसंग्रहगृहं उत्तरस्यां भांडारं कोशगृहं ऐशान्यां देवतागृहं वसिष्ठः ऐंद्र्यादिदिशि स्नानगृहमाग्नेय्यां पचनालयं याम्यायां शयनवेश्म नैर्ऋत्यां शस्त्रमंदिरं वारुण्यां भोजनगृहं वायव्यां धान्यमंदिरं उदीच्यां हाटकपद्मं ऐशान्यां देवमंदिरमिति भारद्वाजः भांडागारं तु वरुणस्यां वायव्यां पशुमंदिरमिति पूर्वाद्यष्टदिक् तन्मध्यतः तयोर्द्विग्विदिशोर्मध्ये षट्संख्याके मथनादयस्तेषां गृहाणि स्युः यथा पूर्वाग्नेययोर्मध्ये लोडनस्य गृहं स्यात् आग्नेयीदक्षिणयोर्मध्ये आज्यस्य घृतसंग्रहस्य दक्षिणनैर्ऋत्योर्मध्ये पुरीषस्य विष्ठात्यागस्य गृहम्॥ ॥ ॥

नैर्ऋतीपश्चिमयोर्मध्ये विद्याभ्यासस्य पश्चिमवायव्ययोर्मध्ये रोदनस्य गृहं वायव्योत्तरयोर्मध्ये रतस्य संभोगस्य गृहं उत्तरेशान्ययोर्मध्ये औषधस्य गृहं ऐशानीप्राच्योर्मध्ये उक्तव्यतिरिक्तसर्ववस्तूनी धाम गृहं कार्यं स्यादित्यर्थः वसिष्ठः इन्द्राग्न्योर्मथनमध्ये याम्याग्न्योर्घृतमंदिरम् यमराक्षसयोर्मध्ये पुरीषस्यागमंदिरं राक्षसांबुपयोर्मध्ये विद्याभ्यासस्य मंदिरम् तोयेशानिलयोर्मध्ये रोदनमंदिरं ततः कामोपभोगसदनं वायुकौबेरमध्यमं कौबेरीशानयोर्मध्ये चिकित्सामंदिरं सदा गृहं हरीशयोर्मध्ये सर्ववस्तुकसंग्रहं सदनं कारयेदेवं क्रमादुक्तानि षोडशेति २१ अथ विशेषमुपजातिकयाह जीवार्के अन्ययोगद्वयं गृहस्थानयोर्यथासंख्यसंबंधः यथा जीवो लग्ने अर्कोऽरिषष्ठे विद्धुधोजामित्रसप्तमे शुक्रश्चतुर्थे शनिस्तृतीये एवंविधे लग्ने चारब्धस्य गृ

तन्मध्यतस्तुमथनाज्यपुरीषविद्याभ्यासाख्यरोदनरतौषधसर्वधाम २१ जीवार्कविच्छुक्रशनैश्चरेषु लग्नारिजामित्रसुखत्रिगेषु स्थितिः शतं स्याच्छरदां सितार्कारेज्येतनुत्र्यंगसुतेषु शते द्वे २२ लग्नांबरायेषु भृगुज्ञभानुभिः केंद्रे गुरौ वर्षशतायुरालयम् बुधोगुरुव्योमनिशाशीकुजार्कजौ लाभे तदाशीतिसमायुरालयं २३ स्वोच्चे शुक्रे लग्नगे वा गुरौ वेश्मगते वा शनौ स्वोच्चे लाभगे वा लक्ष्म्यायुक्तं चिरं गृहम् २४॥ ॥ हस्य स्थितिरब्द शतं वर्षशतं स्यात् अयमेको योगः सितेति शुक्रो लग्ने अर्कस्तृतीये आरः षष्ठे ईज्यः पंचमे एवंविधे प्रारब्धस्य गृहस्य स्थितिर्द्वे शते वर्षशतद्वयं स्यात् २२ अथान्ययोगद्वयमिंद्रवंशयाह लग्नांबरायेषु इति अत्रापि योगद्वयस्थानग्रहयोर्यथासंख्यसंबंधः लग्ने शुक्रः दशमे बुधः एकादशे सूर्यः लग्नव्यतिरिक्तकेंद्रे गुरुः तदेवंविधे योगे प्रारब्ध आलयः गृहं वर्षशतमायुर्वस्थानं यस्य तादृशं स्यात् अथ द्वितीयः बुध इति चतुर्थे गुरुः दशमे चंद्रः मंगलशनैश्चरावेकादशे तदा गृहमशीतसमा वर्षाण्यायुर्यस्य तादृशं स्यात् २३ अथान्ययोगत्रयमनुष्टुभाह स्वोच्चे इति स्वोच्चस्य मीनस्थे शुक्रे लग्नगते अथवा स्वोच्चस्थे कर्कस्थे गुरौ चतुर्थस्थानगते सति अथवा स्वोच्चस्थे तुलास्थे शनौ एकादशस्थानगे सति चिरं लक्ष्म्यायुक्तं गृहं स्यात् यदा समुदायो भवेत्तदायतनाविधिलक्ष्मी

अथगृहस्यपरहस्तगामित्वयोगमनुष्टुभाह द्यूनांबरेइति एकोऽपिग्रहोऽस्तुरूक्षभफलदातापरांशस्तःसन्यदिद्यूनेसप्तमेस्यात् अथवांऽबरेदश मेस्यात् तदासग्रहःतद्गृहप्रारब्धंअब्दांतवर्षमध्येएवपरहस्तस्थंअन्यहस्तगमिकुर्यात् चेद्वर्णपःब्राह्मणादिवर्णस्वामीविप्राधीशौभार्गवेज्यावि त्याद्यभिहितःसवेदवलेस्यात् यदास्ववर्णाधीशःसबलस्यात्तदापरहस्तगामीनस्यादित्यर्थः २५ अथान्यंविशेषंवसंततिलकयाह पुष्येतिपुष्य ध्रुवाणिमसिद्धानि इंदुर्मृगःहरिःश्रवणःसर्पोऽश्लेषाजलंपूर्वाषाढा एतैर्नक्षत्रैःसजीवैःगुरुयुक्तैःतद्वासरेणगुरुवासरेणकृतंकर्त्तुमारब्धंगृहंस्व तान्पुत्रान्राज्यंचदद्यात्तादृशंस्यात् अत्रसंमतिर्वसिष्ठनारदवाक्यतःद्वीशेति द्वीशविशाखाअश्विनीतक्षचित्रावसुधनिष्ठायाशीशतभे शिवआर्द्राएतैर्नक्षत्रैःसशुक्रैःशुक्रसहितैःसितस्यशुक्रस्यवासरेचकृतंगेहं धनानिस्वर्णानिधान्यानिव्रीह्यादीनिददातितादृशंगृहंस्यात्।

द्यूनांबरेयदेकोऽपिपरांशस्थोग्रहोगृहं अब्दांतःपरहस्तस्थंकुर्याच्चेद्वर्णपोऽवलः २५ पुष्यध्रुवेंदुहरिसर्पजलैःसजीवै स्तद्वासरेणचकृतंसुतराज्यदंस्यात् द्वीशाश्वितक्षवसुपाशिशिवैःसशुक्रैःवारेसितस्यचगृहंधनधान्यदंस्यात् २६ सौरैःकरेज्यांत्यमघांबुमूलैःकौजेह्निवेश्माग्निसुतार्त्तिदंस्यात्॥

११ तथाचनारदः श्रवणाषाढयोश्चैवरोहिण्यांचोत्तरात्रये गु रुवारेकृतंवेश्मराजयोगमिहोच्यते तद्गृहेजातपुत्रस्यराज्यंभवतिनिश्चयात् अत्रवसिष्ठवाक्येनक्षत्राधिक्यंतदनुसारेणमूलेनक्षत्राभिधा ने ईज्यानुराधयाद्वीदुविष्णुधातृजलेंदुषुगुरुणासहितेषुकृतंगेहंश्रियान्वितमितिवसिष्ठोक्तेःअश्विनीशततारास्वविशाखांचाद्रंवित्रकेध निष्ठाशतभेशुक्रसंयुक्तेशुक्रवासरेतद्वेश्मनिप्रजातस्तुकुबेरसदृशोभवेत् अत्रापिनक्षत्रभेदःप्राग्वत्समाधिः २६ अथान्यंयोगद्वयमिंद्रवज्र याह सौरैरिति हस्तपुष्यरेवतीमघापूर्वाषाढामूलैःसौरैर्मंगलसहितैःकौजेभौमसंबंधिनिअह्निवारेकृतंगृहंअग्निसुतार्त्तिदंअग्निपीडासुतपीडां ददातितादृशंस्यात् उक्तंच मूलंचरेवतीचैवकृत्तिकाषाढमेवच एषुभौमेनयुक्तेषुवारेतस्यैवनिर्मितं अग्निनादह्यतेक्षिप्रंपुत्रनाशश्चजायतइति

सञ्ज्ञैरिति रोहिण्युत्तरफाल्गुनीचित्राहस्तैः सज्ञैः बुधयुक्तैः तस्य च वारे कृतं गृहं सुखदं पुत्रदं च स्यात् उक्तं च हस्तार्यमत्वाष्ट्रदास्त्र उत्तरास्योडुपे
पिवा सबुधे बुधवारे च धनपुत्रसुखप्रदमिति २७ अथान्ययोगमनुष्टुभाह अजैकपादिति पूर्वाभाद्रपदोत्तरभाद्रपदाज्येष्ठानुराधास्वातीभरणीनक्ष
त्रैः समंदैः शनैश्चरयुक्तैः मंदस्य च वारे च यारब्धं गृहं रक्षोभूतयुतं स्यात् उक्तं च आजपाद्धितयेयाम्यमित्रैन्द्रानलभेपिवा समंदे मंदवारे च गृह्यते यस्
राक्षसैः पुत्रे जाते ऽथवा तस्मिन् गृह्यते यस्य राक्षसैरिति अन्वायनिष्कृष्टोऽर्थः पूर्वं गृहारंभनक्षत्राण्यवधेयानि ततो वृषवास्तुचक्रे शोध्यानि पश्चादिदं योग
पंचकं विचार्यमेवं गृहारंभः शुभफलदो भवेत् २८ अथ केषांचिन्मतेन द्वारचक्रं सफलं शार्दूलविक्रीडितेनाह सूर्यक्षादिति सूर्याधिष्ठितनक्षत्रात् युग

सज्ञैः कदास्त्रार्यमतक्षहस्तैर्ज्ञस्तैर्ज्ञवारे सुखपुत्रदं स्यात् २७ अजैकपादहिर्बुध्न्यशक्रमित्रानलांतकैः समंदैर्मंद
वारे स्याद्रक्षोभूतयुतं गृहं २८ सूर्यर्क्षाद्युगभैः शिरस्यथ फलं लक्ष्मीस्ततः कोणभैर्नागैरुद्वसनं ततो गजमितैः शा
खासु सौख्यं ध्रुवं देहल्यां गुणभैर्मृतिर्गृहपतेर्मध्यस्थितैर्वेदभैः सौख्यं चक्रमिदं विलोक्य सुधिया द्वारं विधेयं
शुभम् २९ इति श्रीवास्तुप्रकरणसमाप्तम्॥ ((भिश्चतुर्भिर्नक्षत्रैः शिरसि उपरि अवस्थितैः फलं कर्तुः लक्ष्मीप्राप्तिः स्या
त् ततः नागभैः अष्टभिः कोणगैः कोणेषु अवस्थितैः उद्वसनं जनवासरहितं स्यात् तदग्रभैर्गजमितैरष्टमितैर्द्वारशाखावस्थितैर्गृहस्वामिनः
सौख्यं स्यात् तदग्रिमैः गुणभैस्त्रिभिर्नक्षत्रैः देहल्यामवस्थितैर्गृहस्वामिनो मृतिः स्यात् ततस्तदग्रिमैर्वेदभैश्चतुर्भिर्नक्षत्रैः मध्यरूपे अवका
शे स्थितैः सौख्यं स्यात् फलितार्थमाह चक्रमिति इदं चक्रं विलोक्य सुधिया शुभफलदं द्वारं विधेयं कर्तव्यमिति गद्येनोपसंहरति २९
॥ इति श्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायां स्वकृतमुहूर्तचिंतामणिटीकायां प्रमिताक्षरायां गृहारंभप्रकरणं समाप्तम् द्वादशम् १२ ॥

अथगृहप्रवेशप्रकरणंव्याख्यायते तत्रप्रवेशश्चतुर्धा अपूर्वप्रवेशः सपूर्वप्रवेशः द्वंद्वाभयप्रवेशः वधूप्रवेशश्चेति तत्रवधूप्रवेशस्यान्वर्थसंज्ञ
कत्वाल्लक्षणंप्रोक्तं सचप्रागभिहितः अन्येषांलक्षणमाह वसिष्ठः अपूर्वसंज्ञः प्रथमप्रवेशोयात्रावसानेतुसपूर्वसंज्ञः द्वंद्वाभयस्त्वग्निभयादि
जातस्त्वेवंप्रवेशस्त्रिविधः प्रदिष्टइति नवंगृहंनिर्माययःप्रथमःप्रवेशः सोऽपूर्वसंज्ञः प्रवेशः यस्तुयात्रानिवृत्त्यनंतरंगृहप्रवेशः ससपूर्वसंज्ञः।
यस्तुअग्निभयेनाग्निदाहेनआदिशब्देनकुद्धेनराज्ञापातितेनगृहनाशस्तद्गृहंयदापुनःसंपाद्यतेतस्मिन्यःप्रवेशः सद्वंद्वाभयइत्युच्यते अन्वर्थसं
ज्ञाचेयंद्वंद्वशीतोष्णंशीतशब्देनजलं उष्णशब्देनाग्निरुच्यते लक्षणयाजलाप्लावेनावरतवृष्टिपातेनवागृहपातस्तुजलभयम् अग्निकृत
दाहेनयोगृहनाशस्तदग्निभयम् तस्माच्छीतोष्णरूपाद्वंद्वात्पुनरुत्थापनेनयद्भयमित्युच्यतेद्वंद्वाभयंविध्यतेतस्मिन्नित्यर्थः आदिभ्योजितिमा
न्वर्थयावत्प्रत्ययः तादृशः प्रवेशोद्वंद्वाभयइति तत्रापूर्वसपूर्वप्रवेशयोः कालशुद्ध्यादिकमिंद्रवंशयाह सौम्यायनइति एषुसौम्यायनेइत्यादिकेषुपद्य

सौम्यायनेज्येष्ठतपोंत्यमाधवेयात्रानिवृत्तौनृपतेर्नवेगृहे स्याद्वेशनंद्वास्थमृदुध्रुवोडुभिर्जन्मर्क्षलग्नोपचयोदयेस्थिरे ॥ १

र्थसत्त्वनृपतेर्यात्रानिवृत्तौ अथवानवेनूतनोत्थापितेगृहेवेशनंप्रवेशनंस्यात् अत्रसौम्यायनइतिमंदबुद्धीनांशीघ्रप्रतिपत्त्यर्थं ज्येष्ठेतिज्ये
ष्ठमाघफाल्गुनवैशाखेषुप्रवेशनंश्रेष्ठंभं नारदः अपिसौम्यायनेकार्यंनववेश्मप्रवेशनं राज्ञायात्रानिवृत्तौचेति तथा माघफाल्गुनवैशाखज्येष्ठमासेषु
शोभनः प्रवेशोमध्यमोज्ञेयः सौम्यकार्तिकमासयोरिति मध्यमोक्तिरावश्यकविषया द्वास्थेति यस्मिन्गृहेप्रवेशः कर्तुमिष्यंततस्ययस्यांदिशिद्वारंस्या
दिङ्नक्षत्रैः पूर्वादिषुचतुर्दिक्षु सप्तसप्तानलर्क्षतइत्याद्युक्तैः मृदुध्रुवनक्षत्रैः प्रवेशनंस्यात् यद्दिक्द्वारमंदिरंतद्दिग्गृक्षैरुक्तर्क्षैःस्यात्तत्प्रवेशोन
वैरीतिवसिष्ठोक्तेः अन्यदपितत्रैव अर्कानिलार्याद्दितिदस्रविष्णुऋक्षेप्रविष्टनवमंदिरंयत् अब्दत्रयातसरहस्तयातंशशांकधिष्ण्येयपवर्गमृत्युद
स्यादितिजन्मर्क्षंतिजन्मर्क्षंजन्मराशिःजन्मलग्नंवाप्रसिद्धं ताभ्यामुपचयंतृतीयषष्ठदशमैकादशस्थानंतस्मिन्उदयेलग्नेःस्थिरेस्थिराराशिर्वृषसिंहवृ

वेशनं शुभं नारदः कर्तुर्जन्मभलग्नेवा ताभ्यामुपचयेपि वा प्रवेशलग्नेस्याद्वृद्धिरन्यभे शोकनिस्वतेति सौम्ये स्थिरे भे शुभदृष्टियुक्ते लग्नेऽथवाद्व्यंगगृ
हे विलग्नेद्वितिच सौम्यग्रहयुक्तेद्व्यंगे द्विस्वभावराशौ १ अथजीर्णगृहप्रवेशे विशेषमिंद्रवज्रयाह जीर्णगृह इति जीर्णे पुरातनेऽन्यनिर्मितेगृहे
अग्निभयात् अग्निनाशाहात् आदिशब्देन बहुवृष्टिराजकोपाद्युपद्रवासतितेगृहे पुनरपिसम्यगेवकृतेउत्थापिते पूर्वोक्तासर्वेपिमासाज्ञेयाः किं
च मार्गोर्जयोः मार्गशीर्षकार्तिकयोः च श्रावणिकेपि श्रावणेपि वेशः प्रवेशः सन् शुभफलदः स्यात् सनत्कुमारः गृहारंभोदितैर्मासैर्धिष्ण्यैर्वारैर्विशे
द्गृहमिति अत्रसामान्यतोगृहारंभोदितामासागृहप्रवेशेऽभिहिताः तच सौम्यफाल्गुनवैशाखमाघश्रावणकार्त्तिकाः मासाः स्युर्गृहनिर्माणे पुत्रारोग्य
धनप्रदाइति नारदोक्तेमार्गशीर्षफाल्गुनश्रावणकार्त्तिकाविहिताः तत्रोत्तरायणएवगृहप्रवेशस्यवाक्यांतरविहितत्वात् श्रावणकार्त्तिकमार्गशीर्ष
णामुत्तरायणत्वाभावात् विरोधेनूतनजीर्णगृहप्रवेशाभ्यांव्यवस्थिा कथंप्रागभिहितनारदवाक्येनउत्तरायणसाहचर्येणनूतनगृहप्रवेशसपूर्वप्रवेश

**जीर्णेगृहेऽग्न्यादिभयान्नवेपिमार्गोर्जयोः श्रावणिकेपिसत्स्यात् वेशोंबुपेज्यानिलवासवेषु नावश्यमस्तादिविचारणात्र ॥२॥**

योर्विधानात् गृहारंभोदितैर्मासैरित्यनेनतुसामान्यतस्त्रिविधस्यापिप्रवेशस्यविधानादुत्तरायणीयमासास्त्रिविधगृहप्रवेशेशुभाः दक्षिणाय
नीयमासाश्रावणादयस्तुजीर्णगृहप्रवेशविषयाः अतएवनारदोमार्गशीर्षकार्तिकयोर्नूतनप्रवेशेमध्यमत्वमाह अर्थादेवजीर्णगृहप्रवेशेउत्कृष्टमध्यव
स्यता अंबुपेति अंबुपः शततारका ईज्यः पुष्यः अनिलस्वातीवासवं धनिष्ठाएषु भेषुजीर्णगृहेअग्न्यादिभयान्नवेपि गृहप्रवेशः शुभः प्राक्पद्योक्तन
क्षत्रेषुतु शुभएवेति किंमुतिकन्यायादवगम्यते ज्योतिःप्रकाशेप्रवेशोनूतनेहर्म्येध्रुवैर्मित्रैः शुभावहः पुष्यस्वातीयुतैस्तैस्तुजीर्णेस्याद्वासवद्वयेइति
नावश्यमिति अत्रैवंविधेजीर्णगृहे अग्न्यादिभयान्नवेपि आवश्यकमस्तादिविचारणाशुक्रास्तगुर्वस्तबाल्यवार्धकसिंहस्थगुर्वादिदोषाणांविचार
णाविचारोनास्ति अस्तादयः कालदोषाः संतुमावासंतुतथापिगृहप्रवेशः कार्यः सोपिपंचांगशुद्धिमात्रमंगीकृत्यविहितनक्षत्रेष्वेवकार्यः ॥ छ ॥

ज्योतिःप्रकाशे नित्ययाने गृहे जीर्णे प्राशने परिधानके वधूप्रवेशे मांगल्ये न मौढ्यं गुरुशुक्रयोरिति वसिष्ठः नवप्रवेशे त्वथ कालशुद्धिर्न द्वंद्वसौपूर्विक
योः कदाचित् प्रवेशपंचांगदिनसुलग्ने वास्त्वर्चनपूर्ववदेव कुर्यात् पूर्ववदेव नूतनप्रवेशे यथा वास्तुपूजा तथा द्वंद्वसौपूर्विकयोरपि कार्येत्यर्थः नारदेन तु
यात्राविधेर्निवृत्तिप्रवेशे कालशुद्धिरपि स्थितैवेति तद्वाक्यं प्रागभिहितं तदेतयोर्वाक्ययोरावश्यकानावश्यकत्वेन व्यवस्था अत्र त्रिविधेपि प्रवेशे प्रवेशन
क्षत्रं क्रूराक्रांतं क्रूरविद्धं वा सर्वथा वर्ज्यं वसिष्ठः क्रूरग्रहाधिष्ठितविद्धभं च विवर्जनीयं त्रिविधप्रवेशे इति २ अथ गृहप्रवेशदिनात् प्राक् कर्तव्यं वास्तुपूजा
विधेस्तन्नक्षत्राण्युपजातिकापूर्वार्द्धेनाह मृदुध्रुवेति एतेषु सप्तदशसु नक्षत्रेषु वास्तुपुरुषस्यार्चनं भूतबलिं च कारयेत् गृहपतिर्वास्तुपूजां कुर्यात्।
पुरोहितो वा वास्तुपूजां कारयेत् हृक्रोरन्यतरस्यामिति णौ कर्तुः कर्मत्वं वास्तुपूजाप्रकारमाह वसिष्ठः निर्माणे मंदिराणां च प्रवेशे त्रिविधेपि च वास्तुपू
जा प्रकर्तव्या यस्मात्तां कथयाम्यतः गृहमध्ये हस्तमात्रं समंतात्तंदुलोपरि एकाशीतिपदं कार्यं तल्लेखैस्तुल्यकं शोभनम् एकद्वित्रिपदाः पंचचत्वारिंश

**मृदुध्रुवक्षिप्रचरेषु मूलभे वास्त्वर्चनं भूतबलिं च कारयेत् त्रिकोणकेंद्रायधनत्रिगैः शुभैर्लग्ने त्रिषष्ठायगतैश्च पापकैः ॥ ३ ॥**

त्सुरार्चिताः द्वात्रिंशद्बाह्यतो वक्ष्यमाणाश्चांतस्त्रयोदश तेषां स्थानानि नामानि वक्ष्यामीश्वरकोणतः तत्राग्निः शुभुकोणस्थस्त्वसौ ॥
चैकपदेश्वरः आकाशश्चापूरयतः क्रमादेकपदेश्वरौ एवं प्राच्यां नव ज्ञातव्यास्त्वेवमेवान्यदिक्षु च आद्यश्चांत्यावेकपदौ द्विपदाः पंचमध्यगाः शिखाद्य
एवाकाशांता अमराः पूर्वभागगाः आद्यश्चांत्यावेकपदौ द्विपदाः पंचमध्यगाः पूषाद्यष्टौ यमांताः स्युरमरा याम्यभागगाः आद्यश्चांत्यावेकपदौ द्विपदाः पंच
मध्यगाः अष्टौ पितृगणाधीशात् पापांताः पश्चिमे सुराः आद्यंतौ द्वावेकपदौ द्विपदाः पंचमध्यगाः रोगादिदितिसंताः सुराः सप्त सौम्यदिशि क्रमात् तत्राद्य
स्य चतुःकोणेष्वीशानादिषु च क्रमात् आपः सावित्र विजय रुद्राश्चैकपदेश्वराः मध्ये नवपदो ब्रह्मा तस्येशानादिकोणगाः आपवत्सोथ सविता विबुधाधि
पसंज्ञकः राजयक्ष्मा च चत्वारः सुराश्चैकपदेश्वराः ब्रह्मणः पूर्वतो दिक्षु त्रिपदाश्चामरा अमी अर्यमा च विवस्वांश्च मित्रः पृथ्वीधरः क्रमात् ॥ ६ ॥

स्वस्थकेलेषु देवेषु स्थापितेष्वीदृशं भवेत् कोणेषु पंचपंचैव चतुर्थैकपदाः सदा प्रागादिदिक्षु द्विपदाः पंचपंच यथाक्रमं ब्रह्मणः पर्वतो दिक्षु विवि
नेषीदृशं भवेत् कोणेषु पंचपंचैवस्क द्विपदाः स्युः समीपगाः हिरण्यरेताः पर्जन्यो जयंतः पाकशासनः सूर्यः सत्यो भृशाकाशौ वायुपूषा च वितथाः गृह
स्तः पितृपतिर्गंधर्वो भृंगराजकः यमः पितृगणाधीशस्तथा दौवारिकाह्वयः सुग्रीवः पुष्पदंतश्च जलाधीशो निशाचरः शेषः पापश्च रोगो हिर्मु
ख्यो भल्लाट एव च सोमसर्पो दितिरदिती द्वात्रिंशदमराः स्मृताः आपश्चैवापवत्सश्च जयो रुद्रस्तथैव च मध्ये नवपदो ब्रह्मा तस्यैतस्य समीपगाः
जायंत रितादेवाः परितो ब्रह्मणः स्मृताः अर्यमा सविता चैव विवस्वान्विबुधाधिपः मित्रोथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् आपवत्सो
ष्टमः पंचचत्वारिंशत्करोत्तमाः ज्ञात्वैवं स्थाननामानि ब्रह्मणा सहितान्यजेत् वास्तुज्ञो वास्तुमंत्रेण गंधपुष्पाक्षतादिभिः प्रणवेनार्चयेद्वापि अथ
वा स्वस्वनामभिः शुक्लवस्त्रयुगं दद्याद्धूपदीपबलैः सह अपूपैर्भूरिनैवेद्यैः वाद्यैः सह समर्चयेत् तांबूलं च ततो दद्याद्देवेभ्यश्च पृथक् पृथक् दत्वा
पुष्पांजलिं कृत्वा प्रार्थयेद्वास्तुपूरुषं वास्तुपुरुष नमस्तेस्तु भूशय्यानिरत प्रभो मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदा इति प्रार्थ्य ततो दद्याद्दक्षिणाम
र्चकाय च विप्रेभ्यो भोजनं दत्वा स्वयं भुंजीत बंधुभिः एवं यः कुरुते सम्यग्वास्तुपूजां प्रयत्नतः आरोग्यपुत्रपौत्रादि धनधान्यं लभेन्नरः वास्तुपूजा
मकृत्वा यः प्रविशेन्नवमंदिरम् रोगान्नानाविधान्क्लेशानश्नुते बहुसंकटम् इति वसिष्ठसंहितायां वास्तुशांतिः नारदाद्यः पंचांगशुद्धिमान्युक्ते
पूर्वदिने एव वास्तुपूजामाहुः विधाय पूर्वदिवसे वास्तुपूजाबलिक्रियामिति तृतीयश्लोकार्द्धस्य टीका अथ लग्नशुद्धिं तिथिवारशुद्धिं चोपजातिके
नार्द्धेनेंद्रवज्रयाह त्रिकोणेति शुद्धाबुरंध्र इति नवमपंचमप्रथमचतुर्थसप्तमदशमैकादशद्वितीयतृतीयस्थानानामन्यतमस्थानस्थितैः शु
भैरुपलक्षिते तथा तृतीयषष्ठैकादशस्थानस्थैः पापग्रहैरुपलक्षिते च तथा चतुर्थस्थानं रंध्रमष्टमस्थानं तस्मिन् शुद्धे सर्वग्रहरहिते अंबुरंध्रे यस्मिं
ल्लादृशे लग्ने गृहं विशेत् कीदृशे लग्ने विजनुर्भमृत्यौ भराशिर्लग्नं च जनुषि जन्मकाले भे जनुर्भे ताभ्यां मृत्युरष्टमभवनम् जनुर्भमृत्युः विगतो जनुर्भमृत्यु
र्यस्मिन्स्वजन्मलग्नात्स्वजन्मराशेर्वाऽष्टमराशिः प्रवेशलग्नेन प्रेक्षितः इत्यर्थः पुनः कीदृशे लग्ने व्यर्कारे रिक्तावरदर्शचैत्रे अर्कारौ प्रसिद्धौ वारौ।

रिक्ता ५ । ९ । १४ उपलक्षणत्वाद्दग्धतिथयोपि चरलग्नानिमेषकर्कतुलामकराख्यानितद्वंशाश्च दर्शोमावास्याचैत्रमासः विगतोऽर्कोदयोय। स्मिन् अर्कोदयःप्रवेशदिनेनिषिद्धाइत्यर्थः अग्रइति गृहप्रवेशसमयेजलपूर्णकलशंस्वसंमुखंकृत्वा द्विजान्ब्राह्मणांश्चाग्रेकृत्वावेश्मगृहंविशे त् वसिष्ठः कृत्वाशुभेऽपृष्ठतोवामतोर्कविप्रान्पूज्यानग्रतःपूर्णकुंभम् रम्यंहर्म्यतोरणस्रग्वितानैःस्त्रीभिःस्रग्वीगीतवाद्यैर्विशेतदिति अयंविधिः प्रवेशसाधारणःकीदृशंवेश्मभकूटशुद्धंभकूटषष्ठाष्टकादि उपलक्षणत्वाद्विवाहप्रकरणोक्तम् वर्णोवश्यंतथातारेत्यादिकंचतेनापिशुद्धम् वसि ष्ठः राशिकूटादिकंसर्वंदंपत्योरिवचिंतयेदिति ४ अथवामगतार्कज्ञानंपूर्वादिमुखगृहप्रवेशंचेन्द्रवंशयाह वामोरविरिति अष्टमपंचमाद्द्विती यैकादशस्थानेभ्यः पंचसुस्थानेषुस्थितेरवौसतिप्राग्वदनादिकेमंदिरेप्रवेष्टव्येगृहप्रवेशेकर्तुर्वामोरविर्ज्ञेयः यथातस्मिंल्लग्नेगृहप्रवेशःकर्त्तु

शुद्धांबुरंध्रेविजनुर्भमृत्यौव्यर्कोररिक्ताचरदर्शचैत्रे अग्रेंबुपूर्णकलशंद्विजांश्चकृत्वाविशेद्वेश्मभकूटशुद्धम् ४ वामोर।
विर्मृत्युसुतार्थलाभतोऽर्केपंचभेप्राग्वदनादिमंदिरे पूर्णातिथौप्राग्वदनेगृहेशुभोनंदादिकेयाम्यजलोत्तराननेे ५॥

मिष्यतेतस्मादष्टमंयत्स्थानंततः पंचसुस्थानेष्वर्केसतिपूर्वाभिमुखेगृहेप्रवेशकर्त्तुर्वामः सूर्यःस्यात् तथालग्नाद्यत्पंचमस्थानंततःपंचसुस्था नेषुरवौस्थितेदक्षिणाभिमुखेवामोर्कः तथैवलग्नाद्द्वितीयस्थानंततःपंचसुस्थानेषुरवौस्थितेपश्चिमाभिमुखेवामोऽर्कः तथैवलग्नादेकादशस्थानंततःपंचसुस्थानेषुसूर्येस्थितेउत्तराभिमुखेगृहेप्रवेशकर्त्तुर्वामःसूर्यइत्यर्थः उक्तंच रंध्रात्सुतात्द्धनादायात्पंचस्वर्केस्थितेक्रमात् पूर्वाशादिमुखंगेहंविशेद्वामोभवेद्यतइति पूर्णातिथाविति प्राग्वदनेपूर्वाभिमुखेगृहेपूर्णातिथौपंचम्यांदशम्यांपूर्णिमायांवाप्रवेशः नंदादिकेतिथि गणेयाम्यजलोत्तराननेगृहेप्रवेशः यथा दक्षिणाभिमुखेगृहेनंदायांप्रतिपदिषष्ठ्यामेकादश्यांवाप्रवेशःशुभः जलपश्चिमादिक्तद्दिङ्मुखेगृहे। भद्रायांद्वितीयायांसप्तम्यांद्वादश्यांवाप्रवेशःशुभः उत्तराभिमुखेगृहेजयायांतृतीया॥ ॥ ॥ ॥ ॥ ॥

गुरुः नंदाभ्यां दक्षिणद्वारं भद्रायां पश्चिमामुखं जयायामुत्तरद्वारं पूर्णायां पूर्वतो विशेदिति ५ अथ प्रवेशकलशवास्तुचक्रं शार्दूलविक्रीडितेनाह वक्त्रे भूरिति गृहप्रवेशसमयइतिसर्वत्रापि संबध्यते कुंभे कलशाकृतिवास्तोरविभात् सूर्याक्रांतनक्षत्रात् तुल्यप्रलोपे पंचमी रविभमारभ्यकलशस्य मुखे भूः एकं सूर्याक्रांतनक्षत्रमेव स्थाप्यं तत्फलं गृहस्याग्निदाहः ततः सूर्यभात् कृताः अग्रिमाणि चत्वारि भानि प्राच्यां स्थाप्यानि फलमुद्वसनं जलवासशून्यगृहं स्यात् ततः कृता यमगताः तदग्रिमाणि चत्वारि भानि दक्षिणे स्थाप्यानि फलं गृहपतेर्लाभः द्रव्यप्राप्तिः ततः कृताः पश्चिमे तदग्रिमाणि चत्वारि भानि पश्चिमायां स्थाप्यानि फलं गृहपतेः श्रीप्राप्तिः ततो वेदा उत्तरे तदग्रिमाणि चत्वारि भानि उत्तरस्यां स्थाप्यानि फलं कलिः लोकैः सह गृहसंबंधी निरर्थको वादः कस्यात् ततो युगमिताः तदग्रिमाणि चत्वारि भानि गर्भे कलशमध्ये स्थाप्यानि फलं विनाशो गर्भे स्थैर्यं वस्यार्थः ततो रामाः तदग्रिमाणि त्रीणि भानि

वक्त्रे भूरविभात्प्रवेशसमये कुंभेऽग्निदाहः कृताः प्राच्यामुद्वसनं कृता यमगता लाभः कृताः पश्चिमे श्रीर्वेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे रामाः स्थैर्यमतः स्थिरत्वमनलाः कण्ठे भवेत्सर्वदा ६ ॥ निगुदे गुदे स्थाप्यानि फलं स्थैर्यं गृहपतेर्बहुकालं तत्र निवासः ततोऽनलाः तदग्रिमाणि त्रीणि भानि कंठे स्थाप्यानि फलं स्थिरत्वं गृहपतेर्भवेत् एवमभिहितानि सप्तविंशति भानि ग्युः ज्योतिःप्रकाशे भूर्वेदपंचकं त्रित्रिः १।४।४।४।४।४।३।३ प्रवेशे कलशेऽर्कभात् मृतिर्गतिर्धनं श्रीः स्याद्वैरं क्रमात् स्थिरता सुखमिति अत्र कलशचक्रे शुभफलस्थानपतितसत्येव हि हितनक्षत्राणां परिग्रहो युक्तस्तत्रापि यदि ज्ञमुखे प्रवेशे विधित्सितेन दिङ्मुखनक्षत्रपरिग्रहः यथा पूर्वस्यां प्रवेशे विधित्सिते रोहिण्यमृगो वा ग्राह्यः दक्षिणमुखगृहप्रवेशे उत्तराफाल्गुनी चित्रे एव पश्चिमाभिमुखे अनुराधोत्तराषाढे एव उत्तराभिमुखे उत्तराभाद्रपदा रेवत्यो ग्राह्ये इति निष्कृष्टोऽर्थः अत एवोक्तं वसिष्ठेन यद्दिग्द्वारं मंदिरं तद्दिगृक्षैरुक्तैः स्यात्तन्निवेशानसर्वैरिति तद्दिगृक्षैरिति [illegible]योः समानाधिकरण्ये नान्वयः भिन्नवाक्यत्वे तु चकारः कर्तव्यः स्यात् अत एव अर्कानिलायां रितिदस्त्रविघ्मुक्तः सेप्रविष्ठनवमंदिरं यत् अब्दत्रयान्तः सरहस्तपा

अथगृहप्रकरणप्रवेशोपसंहारंसूचयनप्रवेशोत्तरकालीनकर्त्तव्यविधिमुपजात्याह एवंसल्लग्नेइति एवंप्रागुक्तप्रकारेणविचारितसल्लग्नेशोभनगु
णयुतेस्थिरराश्यादिकेराजावितानपुष्पश्रुतिघोषयुक्तवितानानिवस्त्रमंडपाःपुष्पाणिस्वकालर्तुजानिमालत्यादीनिश्रुतिघोषोवेदध्वनिश्चैर्युक्तंउपलक्ष
णत्वात्तोरणाद्यनेकमांगल्यवस्तुसहितमेतादृशंस्वसत्ताकंगृहंप्रविश्यपश्चात्शिल्पज्ञान्गृहोत्थापकानस्थपतिवर्द्धकादीन्देवज्ञान्ज्योतिर्विदः वि
धिज्ञान्वास्तुपूजाभूतबलिगृहप्रवेशविधिज्ञान् पुरोहितप्रभृतीन् पौरान्नागरिकान् पण्डितरीनानाथांधकृपणांश्च भूमिहिरण्यवस्त्रैर्यथाशक्त्या
न्यस्तैःसमस्तैर्वाउपलक्षणत्वादश्वादिभिर्वाअर्चयेत्पूजयेत् अत्रविशेषमाह वसिष्ठः यद्वास्तुपूजारहितंत्वदत्तबलिंत्वनाच्छन्नगृहंविरूपंकपाट
हीननविशेद्यतस्सर्वोऽपदामलियमेवतत्स्यादिति तस्मात्संकर्षोदमुपरिष्टाच्छादितंकृतवास्तुपूजादत्तबलिमेवगृहंप्रविशेत् प्रवेशोत्तरमाह।

एवंसल्लग्नेस्वगृहंप्रविश्यवितानपुष्पश्रुतिघोषयुक्तम् शिल्पज्ञदैवज्ञविधिज्ञपौरान्राजार्चयेद्भूमिहिरण्यवस्त्रैः ७ ॥इ
तिदैवज्ञरामविरचितेमुहूर्त्तचिंतामणौगृहप्रवेशप्रकरणंत्रयोदशम् १३ ॥ आसीद्धर्मपुरेषडंगनिगमाध्येतृद्विजैर्मंडिते
ज्योतिर्वित्तिलकःफणीद्ररचितेभाष्येकृतातिश्रमः॥ ॥श्रीपतिःततोनृपोविप्रसल्लग्नसुरोधसःशिल्पज्ञभूगोलविदश्चलिंगिनःध
नेश्वरतैःपञ्चभिःसमर्चयन्सदाधदीनान्पुरवासिनस्तथेति ७ इतिगृहप्रवेशप्रकरणम् अथग्रंथसमाप्तौपितामहवर्णनंशार्दूलविक्रीडितेना
ह आसीदिति धर्मपुरेनर्मदातीरग्रामविशेषेसन्नसिद्धश्चिंतामणिरासीत् किंभूतेधर्मपुरेषडंगानिशीक्षादीनितानिविद्यंतेयस्यएतादृशायेनिगमविद्व
स्तरद्ध्येतारोयेद्विजाब्राह्मणादयस्तैमंडितेभूषिते कीदृशश्चिंतामणिर्ज्योतिर्वित्तिलकइवतिलकःज्योतिर्विच्छ्रेष्ठइत्यर्थः पुनःकीदृशःफणीद्रःशेष
गःतद्रचितेभाष्येमहाभाष्येकृतातिश्रमोऽन्यभ्यासोयेन पुनःकीदृशश्चिंतामणिःतत्तज्जातकसंहितागणितकृत् तानितानिस्वल्पबृहदादिभेदेनानेक
विधःजातकानिजातकशास्त्राणिसंहिताःसंहिताशास्त्राणिकरोतितादृशःगणितानिगणितशास्त्राणिकरोतितादृशः पुनःकीदृशःमहाभूभुजानांमान्यः

कृतिवेदवाक्यविलसद्बुद्धिः तर्कोन्यायशास्त्रं अलंकृति अलंकारशास्त्रम् वेदवाक्यं वेदवाक्यविचारप्रतिपादकोग्रंथो मीमांसशास्त्रं वेदांतशा स्त्रं च तेषु विलसंती विलासयुक्ता बुद्धिर्यस्य सः ८ अथक्रमप्राप्तं तातवर्णनं तेनैव वृत्तेनाह ज्योतिर्विदिति तत्तनुस्तस्य चिंतामणिदैवज्ञस्य तनुःपु त्रोनंत इति नाम्ना प्रथां ख्यातिमधिगतः प्राप्त आसीत् कीदृशः ज्योतिर्विद्गणवंदिताघ्रिकमलः ज्योतिर्विदां गणेन समूहेन वंदितं चरणकमलं य स्य सः पुनः कीदृशः भूमंडले हस्कर इव अध्यायनद्वारा प्रकाशः इत्यर्थः पुनः कीदृशः कृती कुशलः ग्रंथकरणसमर्थ इति शेषः ग्रंथकर्तृत्वमेवोत्तर ईन प्रकाशयति योरम्यामिति रम्या जनिपद्धतिं जातकपद्धतिं दुष्टाशयध्वंसिनी दुष्टाः जन्मपद्धतिमार्गे संप्रदायानभिज्ञास्तेषामाशयमभिप्रायं ध्वंस

तत्तज्ज्ञातकसंहितागणितकृन्मान्यो महाभूभुजां तर्कालंकृतवेदवाक्यविलसद्बुद्धिः स चिंतामणिः ८ ज्योतिर्विद्गणवं दिताघ्रिकमलस्तत्तनुरासीत्कृती नाम्नानंत इति प्रथामधिगतो भूमंडलाहस्करः योरम्यां जनिपद्धतिं समकरोद्दुष्टाशय ध्वंसिनीं टीकां चोत्तमकामधेनुगणिते कार्षीत्सतां प्रीतये ९ तदात्मज उदारधीर्विबुधनीलकंठानुजो गणेशपदपंकजं हृदि नि धाय रामाभिधः गिरीशनगरे वरे भुजभुजेषुचंद्रे १५२२ मितेशाके विनिरमादिमं खलु मुहूर्तचिंतामणिम् १० ॥ इति श्रीदैवज्ञरा मविरचितं मुहूर्त्तचिंतामणिसमाप्तम् ॥ ग्रयन्ति इति दुष्टाशयध्वंसिनीतामकरोत् तथा उत्तमे ब्रह्मपक्षार्यपक्षप्रतिपादके कामधेनुगणि ते ग्रंथविशेषे टीकां च सतां प्रीतये कार्षीत् कृतवानित्यर्थः ९ अथ स्वनामकथनपूर्वकं ग्रंथसमाप्तिं पृथ्वीछंदसाह तदात्मज इति तस्यानंतस्यात्मजो रामाभिधो गिरीशनगरे वाराणस्यां मुहूर्त्तो चिंतामणिं मुहूर्त्तचिंतामणिनामधेयग्रंथं भुजभुजेषुचंद्रे १५२२ मिते शके द्वाविंशत्यधिकपंचदशशत मितिशाके विनिरमात् कार्षीत् शेषं स्फुटम् १० ॥ इति श्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायां स्वकृतमुहूर्त्तचिंतामणिटीकायां प्रमिताक्षरायां गृहप्रवेशप्रकरणं त्रयोदशं संपूर्णम् समाप्तम् ॥ लिखितं महादेवदीक्षित तिलकेन ॥ सम्वत् १९३० मि॰ कुवार वदि २ वार सोमवार

॥इतिमुहूर्त्तचिन्तामणिप्रमिताक्षराटीकासमाप्ताः॥ सम्वत् १९३० ॥ छ॥